अथादत्ते दक्षिणेनाज्यस्थालीꣳ सस्रुवाꣳ सव्येन जुहूं होत्रे वेदं प्रदाय । प्रदक्षिणमावृत्य प्रत्याश्रावाद्द्रवतो । दक्षिणेनाध्वर्युर्गार्हपत्यं परिक्रामत्युत्तरेण होता । तौ जघनेन गार्हपत्यं पश्चात्प्राञ्चावुपविशतो दक्षिण एवाध्वर्युरुत्तरो होताथाध्वर्युर्वेदमुपभृतं कृत्वा चतुर आज्यस्य गृह्णान आह सोमायेत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोति । चतुर एवाज्यस्य गृह्णान आह त्वष्ट्र इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोति । चतुर एवाज्यस्य[1] गृह्णान आह देवानां पत्नीभ्य इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह देवानां पत्नीरित्युपांशु यजेत्युच्चैर्वषट्कृते । परिश्रिते देवानां पत्नीर्जुहोत्यथ चतुर एवाज्यस्य[1] गृह्णान आहाग्नये गृहपतय इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याहाग्निं गृहपतिमित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथाग्रेण होतारमुपातीत्य होतुर्द्विरङ्गुल्यावनक्ति । जिघ्रेण भक्षयित्वा । चतुर्हस्तेडाꣳ[2] संपादयत्याज्यस्यैव । समन्वारभेते अध्वर्युश्चैव पत्नी चोपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नीतो । मार्जयेते[3] । अथ स्रुचि चतुर्गृहीतं गृहीत्वापरैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसले

---

१ Thus BT Sāy, the other MSS. omit एव; Be throughout चतुराज्यस्य ।

२ Thus B Be JH Keś Sāy. (pr. m.), चतुरवत्ते॰ TF ; चतुर्वेद Say sec. m.

३ Corrected, मार्जयेयेते Be JFHT, मार्जयवेते B.

यच्च शूर्पे आसिषेच दृषदि कृष्णाजिने यत्कपाले। अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम्। यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वान्वाहार्यपचन एवेध्मसंनहनान्यभ्याधाय फलीकरणानोप्य फलीकरणहोमं जुहोत्यग्नेऽदब्धायोऽशीततनो पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहेत्यथैतेनैव यथेतमेत्य [वेदं यजमानं वाचयति वेदो ऽसि वित्तिरसीत्यास्तादनुवाकस्य][1] योक्त्रे वेदं प्रदाय पत्न्यै[2] विष्यतीमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमीत्यथास्यै योक्त्रमञ्जलावाधायोदपात्रमानयति समायुषा सं प्रजया समग्ने वर्चसा पुनः। सं पत्नी पत्याहं गच्छे समात्मा तनुवा ममेत्यथ मुखं विमृष्टे यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वतीत्यपो निनयत्यवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति ब्राह्मणम्।

॥ २० ॥

अथैनां तथैव[3] तिरः पवित्रमप आचामयति पयस्वतीरोष-

---

१ The words enclosed in brackets found only in BH; om. Bc JFT Sāy.

२ Sāyaṇa has पत्नी and defends this reading, but knows also the reading पत्न्यै।

३ om. J Bc; तथैवं B.

धयः पयस्तद्दोहधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृजेत्यथैनां[1] गार्हपत्ये समिध आधापयत्यग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहेत्यथ यथाप्रपन्नं निष्क्रामयत्यथ[2] प्राङेत्य ध्रुवामाप्याययत्याप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्नित्यथाप्यस्यास्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोत्याश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताहुतिरेतु देवान्स्वाहेत्यथ यज्ञमन्द्रीगुरुहोतीष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा दौराध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा सर्वसमृद्ध्यै स्वाहा भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन्मनसा हितः । अयासन्हव्यमूहिषे ऽया नो धेहि भेषजꣳ स्वाहायाश्चाग्ने ऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतो ऽयसा हव्यमूहिषे ऽया नो धेहि भेषजꣳ स्वाहा यदस्मिन् कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा । अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा यदस्य कर्मणो ऽत्य-

१ TF insert तथैव

२ निष्क्रामयत्यथ Be Say , क्रमयत्यथ J

रीरिषं यद्य न्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृद्विद्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाꣳ समर्धयित्रे स्वाहा । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहेत्यथ बर्हिषो धाम्नाꣳ संप्रस्तुय ध्रुवायाꣳ समनक्ति समक्तं बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरक्तमित्यथैनदाहवनीये ऽनुप्रहरति दिव्यं नभो गच्छतु स्वाहेत्यथोपोत्थाय दक्षिणेन पदा वेदिमवक्रम्य[1] ध्रुवया समिष्टयजुर्जुहोति देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युदूहति स्रुचं' निनयति प्रणीता' उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान्क्रमते' संतिष्ठत आमावास्यं वा[2] पौर्णमास्यं वा हविः' ॥ २१ ॥ सप्तदशः ॥

इति प्रथमः प्रश्नः ॥

---

१ अतिक्रम्य Bo H, आक्रम्य T

२ om. JB, वा om. both times Be

अथोपव्याहरणं' विज्ञायते क्रत्वादौ क्रतुकामं कामयीत[1] यज्ञाङ्गादौ यज्ञाङ्गकाममिति' प्राक्कूलान्दर्भान्संस्तीर्य तेषु प्राङ्मुखो यजमान उपविश्य जपति याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः। ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे ॥ देवा गातुविदो गातुं यज्ञाय विन्दत। मनसस्पतिना दैवेन वाताद्यज्ञः प्रयुज्यतामिति[2] श्रद्ध एहि[3] सत्येन त्वा ह्वयामीत्याकूत्या वेदनं करोत्याकूत्यै त्वा कामाय त्वा समृधे त्वा पुरो दधे। अमृतत्वाय जीवसे ॥ आकूतिमस्यावसे काममस्य समृध्यै। इन्द्रस्य युञ्जते धियः ॥ आकूतिं देवीं मनसः पुरो दधे यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टमिति' मनसा त्रिः संकल्पयते त्रिरुक्तैः' सर्वकामो ऽग्नीनाधास्य इत्यग्न्याधेये' स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्य इति दर्शपूर्णमासयोः' स्वर्गकामश्चातुर्मास्यैर्यक्ष्य इति चातुर्मास्येषु' स्वर्गकामः पशुना यक्ष्य इति पशुबन्धे' स्वर्गकामः सोमेन यक्ष्य इति सोमे' स्वर्गकामो ऽग्निं चेष्य इत्यग्निचये' ऽहीने ऽहर्गणे वा यथाकामो यत्कामो वा यजते' तस्य ऋध्यतां तस्मै समृध्यतां तस्मै संपद्यतां काम इत्यर्थलिङ्गा[4] प्रतिवचनं तस्य ऋध्यतां तस्मै समृध्यतां तस्मै संपद्यतां काम इत्योंतथेति प्रतिवचनम्' ॥ १ ॥

१ Thus Be JF Keś.; कामयेत BT; H corrupt

२ After इति B has भद्रामकृणवे.

३ Thus HBT, एहीति JF, एह्यि इति Be

४ Thus BHT, अथ ऋलिङ्गा the other MSS

अथर्त्विजो[1] देवयजनं याचते । अध्वर्यो देवयजनं मे देहीत्यध्वर्युमादित्यो देवो दैवो ऽध्वर्युः स ते देवयजनं ददात्विति तथेति प्रतिवचनं । ब्रह्मन्देवयजनं मे देहीति ब्रह्माणं । चन्द्रमा देवो दैवो ब्रह्मा स ते देवयजनं ददात्विति तथेति प्रतिवचनं । होतर्देवयजनं मे देहीति होतारमग्निर्देवो दैवो होता स ते देवयजनं ददात्विति तथेति प्रतिवचनमुद्गातर्देवयजनं मे देहीत्युद्गातारं । पर्जन्यो देवो दैव उद्गाता स ते देवयजनं ददात्विति तथेति प्रतिवचनꣳ । सदस्य देवयजनं मे देहीति सदस्यमाकाशो देवो दैवः सदस्यः स ते देवयजनं ददात्विति तथेति प्रतिवचनꣳ । होत्रका देवयजनं मे दत्तेति होत्रकानापो देव्यो दैव्या होत्राशꣳसिन्यस्तास्ते देवयजनं ददत्विति तथेति प्रतिवचनं । चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यूꣳ-रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते[2] ते देवयजनं ददत्विति तथेति प्रतिवचनमपि वा न देवयजनं याचत । आदित एव तीर्थे स्नात्वोदेत्याहतं वासः परिधाय । शुद्धो हैव शुचिः पूतो मेध्यो विपाप्मा ब्रह्मचारी यदकारिमत्यथ वा चतुर्थात्कर्मणो ऽभिष-मीक्षमाणो वेदकर्माणि प्रयोजयेत्प्रागपवर्गाण्युदगपवर्गाणि वा प्राङ्मुखः प्रदक्षिणं यज्ञोपवीती दैवानि कर्माणि करोति । दक्षिणामुखः प्रसव्यं प्राचीनावीती पित्र्याणि । तिष्ठन्नासीनः प्रह्वो वा यथाम्नातं । छन्दोगब्राह्मणं यथा वै दक्षिणः पाणिरेवं

---

१ Thus HJT Be, अथ ऋत्विजो BJ

२ Thus T, दैवाश्च॰ the other MSS.

यावदुद्दिति होतुः। अच्छावाकः प्रतिहर्ता सुब्रह्मण्य इत्युद्गातुरभिगरो ध्रुवगोपः संस्राव इति[1] सदस्यः। स्वप्रधाना[2] अस्वप्रधाना[2] इत्येके[2]। दश वैकादश वा चमसाध्वर्यवो ऽन्यद्दक्षिणाभिः परिक्रीता भवन्तीति विज्ञायते। तस्मादग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विग्दर्शपूर्णमासयोश्चत्वार ऋत्विजो ऽध्वर्युर्ब्रह्मा होताग्नीध्र इति। चातुर्मास्येषु प्रतिप्रस्थाता पञ्चमः। पशुबन्धे मैत्रावरुणः षष्ठः। सर्वे सौम्ये ऽध्वरे। तान्कर्मणःकर्मणो वृणीते। एकैकमुपसंगृह्य योऽद्ययेऽस्मावहमाध्वर्यवेण त्वा गच्छामि याजयतु मा भवानिति। ब्रह्मत्वेन होत्रेणौद्गात्रेण सादस्येनेति। न सदस्यो विद्यत इत्येके। स्वेनस्वेन कर्मणा होत्रकाञ्[3] होत्रकानित्येके[3]। तत्पुरुषा होत्रकायमणाध्वर्यवस्थाध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन सोमो योक्तव्य इति॥ ३॥

आदित्यो देवो दैवो ऽध्वर्युः स मे ऽध्वर्युरध्वर्यो ऽध्वर्युं त्वा वृण इत्यध्वर्युमादित्यो देवो दैवो ऽध्वर्युः स ते ऽध्वर्युस्तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनं चन्द्रमा देवो दैवो ब्रह्मा स मे ब्रह्मा ब्रह्मन् ब्रह्माणं त्वा वृण इति ब्रह्माणं चन्द्रमा देवो दैवो ब्रह्मा स ते ब्रह्मा तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमग्निर्देवो दैवो होता

---

१ सङ्स्राव B Be JH, संस्रावयति T, सङ्स्रावयति F, with न Bh.

२ Thus Be, स्वप्रधानाः अस्वप्रधाना इत्येके J; स्वप्रधाना अस्वप्रधाना इत्येके B; स्वधाना अस्वप्रधानादित्येके F, स्वप्रधाना इत्येके H, अस्वप्रधाना इत्येके T

३ Thus B, होत्रकान्होत्रका इत्येके F, होत्रकान्होत्रकानित्येके JHF, Be om. न होत्रकान्।

स मे होता होतर्होतारं त्वा वृण इति होतारमग्निर्देवो दैवो होता स ते होता तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनं' पर्जन्यो देवो दैव उद्गाता स म उद्गातोद्गातरुद्गातारं त्वा वृण इत्युद्गातारं' पर्जन्यो देवो दैव उद्गाता स त उद्गाता तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमाकाशो देवो दैवः सदस्यः स मे सदस्यः सदस्य सदस्यं त्वा वृण इति सदस्यमाकाशो दैवो देवः सदस्यः स ते सदस्यस्तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमापो देव्यो दैव्या होत्राशꣳसिन्यस्ता मे होत्राशꣳसिन्यो होत्रका होत्रकान्वो वृण इति होत्रकानापो देव्यो दैव्या होत्राशꣳसिन्यस्तास्ते होत्राशꣳसिन्यस्ताभिरनुमताः कर्मैव वयं करिष्याम इत्योँ तथेति प्रतिवचनꣳ' रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यवश्चमसाध्वर्यून्वो वृण इति चमसाध्वर्यून्रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते ते चमसाध्वर्यवस्तैरनुमताः कर्मैव वयं करिष्याम इत्योँ तथेति प्रतिवचनं' वृतोवृतो जपति महन्मे ऽवोचो यशो मे ऽवोचो भगो मे ऽवोचो भर्गो मे ऽवोचस्तपो मे ऽवोच स्तोमं मे ऽवोचः क्लृप्तिं मे ऽवोचो भुक्तिं मे ऽवोचो विश्वं मे ऽवोचः सर्वं मे ऽवोचः सर्वं मे कल्याणमवोचस्तन्मावतु[1] तन्माविशतु तन्मा जिन्वतु तेन भुक्षिषीय देवो देवमेतु[2] सोमः सोममेत्वित्योँ तथेति प्रतिवचनम् ॥ ४ ॥

1 Thus only T, the other MSS : तन्मामवतु।

2 Thus only F, the other MSS. have here and further on इति instead of एतु, TB omit the whole passage, cp Pañc Br. I 1.2.

[1]सिंहे मे मन्युर्व्याघ्रे मेऽन्तरामयो' वृके मे क्षुर्दंश्वे मे घर्मिर्धन्वनि मे पिपासा' राजगृहे मेऽनार्याश्मनि मे तन्द्रिर्गर्दभे मेऽर्शः[2]' मत्स्यके[3] मे ह्लीरश्वत्थे मे वेपथुः' कूर्मे मेऽङ्गरोगो' वस्ते मेऽपवर्याभिये मे मृत्युर्भ्राढ्ये मे पाप्मा' सपत्ने मे निर्ऋतिर्दुष्कीर्तौ मे व्यृद्धिः' परस्वति मेऽसमृद्धिः' खड्गे म आर्तिर्गवये म आन्ध्यं' गौरे मे बाधिर्यन्दुषे मे शोको' गोधायां मे खेदो[4]' जरायां मे हिमः' श्यामशकुनौ मे भीरुता' काके मे पापो गन्ध' उलूके मे व्यथाः[5]' क्रोके म ईर्ष्या' मर्कटे मे दुर्बुद्धिः' कुलले मे मत्स्खलते मे प्रधौद्धे[6] मे कृष्णग्रै मे श्रमो' ऽव्यां म आर्थ्यं' क्रोष्टे मे गन्धः' कुमार्यां मेऽलङ्कारः' सूकरे मे क्लृप्तुः[7]' प्रदाखुनि[8]

---

१ The construction of the text of this khaṇḍa is extremely difficult. I compared also the printed Prayogamālā of Venkaṭeśvara (Vol II, fol 36), the MS. I. O. 298, fol. 12, a very old MS, corrected, and the Gṛhyaprayoga according to the MS. of Burnell's collection The MSS. have, of course, nowhere the avagraha.

२ Thus only B and Pray Mālā, मेऽिशः the other MSS

३ Thus Be, मत्स्यके IO, मत्स्यके H, मय्यके FT, मत्स्वके J, मंचके B, मंधुके Pray. M.

४ Thus Be, the other MSS. खेदो।

५ Thus all except T which has व्यथः।

६ प्रधौ॰ TB, IO, प्रोधौ F, प्रवौ Be, प्रवौ H, प्रवो J. Perhaps प्रध्वा is to be read?

७ Thus H, क्लृप्तुः IO, क्लृप्तः Pray. M ; खल्पुः the other MSS.

८ Thus all except Pray M. प्रदाकुनि. Probably प्रदाकुनि is to be read

मे स्वप्नो । ऽजगरे मे दुःस्वप्नो । विद्युति मे श्यावदो[1] । लोभायां मे क्लेदः । शलभे[2] मे पापालक्ष्मी । स्त्रीषु मे ऽनृतमंशाद्य मे कर्कशो । मात्ये म ईर्ष्या । शूद्रे मे स्तेयं । वैश्ये मे ऽकार्मकृत्यं[3] । राजन्यबन्धुनि मे ऽज्ञानं । नैषादे मे ब्रह्महत्या । कुलिङ्गे मे स्वयुर्वशले[4] मे विलाम । उद्रिणि मे वमतिः[5] । किंपुरुषे मे रौद्रो । द्वीपिनि मे निष्पर्द्धितिनि मे किलासः । गर्दभे मे दुरितं । स्यावन्येषु[6] मे घोषो । विदेहेषु मे श्रीपथो[7] । महावर्षेषु मे म्लौमूलवासु मे मग्ना । दुन्दुभौ मे कासिके स्वाङ्गेषु[8] मे पित्तं । कलिङ्गेषु मे ऽमेध्यमंयतर्धा मे ऽपजल्पा । पुंश्चल्यां मे दुश्चरितमांखुनि मे दन्तरोगो । मक्षिकायां मे यक्ष्मः[9] । १०

शुके मे हरिमा । मयूरे मे जल्पा । शृपे मे जरा । वायौ मे पापवादो । ऽप्सु मे श्रमो । महोक्षे मे किल्बिषमपेहि पापमपुनरपगामिनो भवा नः पाप्मप्रजलम्ब लोके पाप्मन्बेधविवतो[10]

---

१ Thus Be BHT, श्यावदो F, श्यावधो J, श्यावदो Pray. M.

२ Thus BJT Pray. M, Prayoga Burnell; शभे H, शलभे Be F, IO.

३ Thus (without avagraha) Be BHJT; कर्मकृत्यं F, Pray. M.

४ Thus Be BJHT, IO, Pray, स्वयुवले F; कुवले Pray. M.

५ वमतिः Be BHFT, IO, Pray, वमतिः J, Pray M. Is the word स्वमतिः or a subst. connected with वमिति ?

६ Thus Be BHFT, Pray, Pray. M, स्याव॰ J, IO

७ Thus Be JT, श्रीपथो F, श्रीपथ्य् B, H uncertain, श्रिपथः Pray श्रपथो IO, श्रपथो Pray. M.

८ Thus BT Pray., the other MSS. कासिके॰ ।

९ Thus Be BJHF, यक्ष्मः T, यक्ष्मः Pray. M.

१० Without the least doubt the tradition of these verses according to the Baudhāyanins is corrupt. A comparison with Ath Samh VI 26 proves that we ought to read अवहृतान् (comp म instead of अविद्वतो and जहाति instead of अहाति ।

यो नः पाप्मना जहाति तमु त्वा जहिमो वयमन्यत्रास्मिन्नि-विशताꣳ[1] सहस्राक्षो अमर्त्यो यो नो द्वेष्टि स रिष्यतु यमु द्विष्मस्तमु जहीत्यथास्याञ्जलिनाप उपहरन्ति सुमित्रा न आप ओषधयः सन्त्विति तां दिशमेता अप उत्सिञ्चति[2] यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य यथेतं प्रविशन्ति ॥५॥ द्वितीयः ॥

अथेदमग्न्याधेयं तस्य कः कर्मण उपक्रमो भवतीत्युक्ता-न्यृतुनक्षत्राण्यथात्मनः पुरश्चरणं कथमस्यानुपूर्व्यं[3] भवति स्नानमहतवसनमाचमनमप्समोचनपुण्याहवाचनानि अङ्कुरमाहृत्या-कृत्या वेदं कृत्वोपव्याहृत्यर्त्विजो[4] वृत्वार्हयित्वा देवयजनं याचित्वा देवयजनमादाय स्फ्यमादायान्तरेण वेद्युत्करावुद्देशेन प्रपद्य जघनेन गार्हपत्यं तिष्ठन्प्राचीनꣳ[5] स्फ्येन गार्हपत्यायतन-मुद्धन्त्युद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसा-तेत्यथैनदद्भिरवोक्षति शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु न इत्येवमेवान्वाहार्यपचनस्यायतन-मुद्धन्त्येवमेवाहवनीयस्यैवमितरयोर्यदि करिष्यन्भवत्यथान्तरेण

---

१ Thus Be HF, 10, the other MSS ॰त्रास्मिन्नि॰ or ॰त्रास्मन्नि॰ ।

२ Thus only B Be and partially T, cp Pray M loc. cit the other MSS. have this passage as infra IV. 7, s f.

३ Thus all except H, which has पूर्वं ।

४ Thus BTJ, कृत्यार्त्विजो F, कृत्य ऋत्विजो Be H

५ Thus BT, the other MSS प्राचीꣳ ।

वेद्युत्करावुद्देशेनोदङ्ङुपनिष्क्रम्य तां दिशं यन्ति यत्रास्य संभारा उपक्लृप्ता भवन्त्यपि वोत्तरेण शालायाः सर्वे संभारा उपक्लृप्ता भवन्त्यपि वान्तर्वेदि प्राचीनं तान्यथानुपूर्व्यमेकैकश्ँ संभारमेकैकेन यजुषा संभरति[1] वैश्वानरस्य रूपं पृथिव्यां परिस्रुता। स्तोममाविशतु म इति सिकताः संभृत्य सिदधात्येवमेवोत्तरमुत्तरश्ँ संभारमुत्तरेणोत्तरेण यजुषा संभृत्य संभृत्य[1] सिदधात्युपाय सिकतायाश्चोत्करं च वल्मीकवपां च सूदं च वराहविहतं च पुष्करपर्णं च शर्कराश्चेत्यष्टौ पार्थिवा[1] अथोत्तरेण यजुषा पञ्चभिरश्वत्थस्याहरत्यथ[2] सामस्त्याभिर्ग्राम्यत्याः[1] शाखा आर्द्राः सपलाशाः समारोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा आहरत्यपि वा यथालाभं[1] पर्णं दाभ्यां[1] चिचिवस्यादत्यस्य तिष्ठः सभिध आर्द्राः सपलाशाः समारोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा आहरति चिचिवाद्यत्यालंभृता रक्षसः[1] शरीरमभिसंख्याता स्म। प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्तिस्रश्च मिथुनाः प्रजात्या इत्यथ शुक्लकुलायमाहरति या न ऋत योनिस्तिनी तनूरोषधीषु प्रविष्टा। तां न इह संभरामीत्यथ पाश्चा अरणी आहरत्यश्वत्थीश् शमीगर्भामप्यशमीगर्भां[3] वा

---

१ Thus only BJ; संभृत्यसंभृत्येव Be; the other MSS. *omit* the second संभृत्य।

२ Thus B Be, मस्त्वान् T, मस्त्वाचि F, मत्स्यान् HJ.

३ Thus Be F, Bh., Keś ; JTH both times with long vowel (शमी॰); B the first time with short, the second time with long vowel

चतुरङ्गुलमुत्सेधां द्वादशाङ्गुलं[1] विस्तीर्णां षोडशाङ्गुलमायतामपि वा प्रादेशमात्रीं सर्वतः समां चतुरङ्गुलमेवोत्सेधां[2] ' तस्या उत्तानाया अनुलोममधस्तात्प्रतीचीनप्रवणं प्रजननं कुर्वन्ति ' तावतीमेवोत्तरारणिमथैने[3] आहरत्याश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियां संभरामि। शान्तयोनिं शमीगर्भमग्नये प्रजनयितवे॥ यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा। तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेत्यथैतान्संभृतान्संभारान्पुनरेव संभरति यं त्वा समभरं जातवेदो यथा शरीरं भूतेषु न्यक्तम्। स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति॥६॥

अथ वै भवतीन्द्रो वृत्रं हत्वासुरान्पराभाव्य सो ऽमावास्यां प्रत्यगच्छत्ते पितरः पूर्वेद्युरागच्छन्पितॄन्यज्ञो ऽगच्छत्तं देवाः पुनरयाचन्त ' तमेभ्यो न पुनरददुस्ते ऽब्रुवन्वरं वृणामहा अथ वः पुनर्दास्यामो ऽस्मभ्यमेव पूर्वेद्युः क्रियाता इति ' तमेभ्यः पुनरददुस्तस्मात्पितृभ्यः पूर्वेद्युः क्रियते ' यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुत इति ब्राह्मणमथ यदि गां न लभते मेषमजं वा लभते ' ऽपि वा घृतमोदनं पक्त्वा तस्योपरिष्टात्प्रभूतमाज्यं पयो वानीय तस्मादेतत्सर्वं करोति यद्गवा कार्यं ' विज्ञायते च धेन्वै वा एतद्रेतो

१ MSS द्वादशाङ्गुलविस्तीर्णा॰ but cp. Rudradatta on Āpast. śra V. 1 2.

२ एव om. BT.

३ ॰रणीम॰ PJT.

यदाज्यं पयो वा सह तण्डुला इति । गौरेवाक्तसामान्यात्संप्रश्नषा[1] अश्वत्थीयं वोत्तपनीयं वाभिप्रवसन्त्यपि त्वौपासनमेवाभिप्रवसन्त्यर्धमौपासनं कुर्वन्ति सर्वं वा । माध्यौदनिकमौपासनं कुर्वन्ति । सो ऽत्र वैव हि ह्रयत इति । प्रमाणं कर्मा संभारनिवपनादेव तृतीयं संभाराणां त्रेधा विभज्य सभ्यावसथ्ययोराहवनीये वा सभ्यावसथ्ययोः संकल्पः । समानं कर्मा समिदाधानात्संस्तपस्तु नानावृक्षीयाः समिधो ऽभ्यभ्यादधाति । कथमानुपूर्व्यं भवत्यश्वत्थस्योदुम्बरस्य पर्णस्य शमी च विकङ्कतस्येत्येतदानुपूर्व्यं भवति । कथमु खल्वेन्द्राग्नादित्ययोरग्न इत्यैन्द्राग्नादित्ययोरन्त[2] उदग्रपदिकं सृजेत्ततो ऽन्यं द्वयहोषर्यसुद्धरेदिति । तन्त्रधर्मात्[3] एवैतदुपपद्यते नान्यत्र प्रणीतस्याग्नेर्लौकिकत्वार्थस्तिन्दोषा ह्रतं 'शालो ऽग्निः' कर्मान्तं[4] तस्य धारणमित्यपरम्परे कर्मणि लौकिकः संपद्यते । प्रसिद्धानि तनूहवींषि । प्रसिद्धा अग्न्याधेयदक्षिणा ददाति । तास्वेवाधिगच्छेदाषाढ्यस्तावन्ति अन्वाग्नीदग्निस्तावतो दद्यात्सोमो हैवेत

---

१ Thus HTJ, गौरेव सामान्यात् H; गौरेवांशसामान्यात् F; गौरेवोक्तसामान्यात् Be

२ Thus only T; Be °थोरेन्द्र (the first time); J कथमैन्द्राग्ना etc. as T; H om. इत्यैन्द्र°; H incomplete here, F इन्द्राग्ना° instead of इत्यैन्द्रा°।

३ संघ or तन्त्र Be BTJ, तत्र HF

४ Thus HB Be, आत् om. T

५ अग्निकर्मा° FT

काममवाप्नोतीत्यौपासनिकां गां दक्षिणां दद्यादिति पैङ्गायनिब्राह्मणं भवति । स नित्याहिताग्निः स्यादिति विज्ञायते[१] च देवानां वा एषो ऽन्यतमो य आहिताग्निरिति च यदस्याग्निमुद्धरति सहस्रं तेन कामदुघो ऽवरुन्द्धे । अथ यदग्निहोत्रं जुहोति सहस्रं तेनेत्यपरिमितमेवेदमुक्तं भवति[२] । ॥ ७ ॥ तृतीयः ॥

अथाग्न्याधेयस्योपवसथ इत्युपकल्पयते गां मातृमतीमहतं वासस्तार्प्यं चतुःस्रक्तीमौदुम्बराञ्छकलानौदुम्बरीं[३] दर्वीमिकां वपाश्रपणीमविशाखामौदुम्बरीमेव सर्वाण्येवान्याग्न्याधेयोपाकार्येष्ययज्ञियकाष्ठसंभारानेरकोपबर्हणे[४] आयतनाभ्यन्तरे आम्ब्यं हवमुष्टिं स्फ्यं स्रुवमिति । दक्षिणत एतत्परिश्रितं भवति । तस्यैतस्मिन्परिश्रिते प्राग्वंशस्य वेद्यन्तं करोति तूष्णीं[१] यौति दर्भपुञ्जीलान्युपनिधाय वपति वपे[५] प्रवपे[६] देवेन सवित्रा प्रसूतो ब्रह्मणा वइमिनो ऽहं यामि स इत ऊर्ध्वं लोमानि तानि मे स्वकाये अन्वित्यथैनमुत्तमकेशश्मश्रु [७]निकृन्तनसमुदस्त-

---

१ The words गर्भे० ... श्वान् are omitted by BT

२ Bo HFJ repeat the last clause: अपरि० ... भवति; BT om. अपरिमितं।

३ Thus Bo H; ०वराञ्छकलान् T, ०वरीं स्रुचान् BJ; ०वराञ्छकलान् F

४ ग्न्याधेयोपाकान् corrected acc. to Bh; MSS. ०कान्।

५ Thus T, वपेत् the other MSS, also Kes.

६ Thus F, प्रवपेत् the other MSS. except H, which omits the syllable प। The yajus seems to begin with वपे।

७ Thus only Be, निकृत the other MSS

नेनाभ्यवनयन्त्याप्ययन्तीमा म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु
मे । शुद्धः प्रयुञ्जीमहि क्रतूनिति । स्नातः प्राङुत्सृत्याहतं
वासः परिधायालङ्कृत्याह्ने ऽथैनमेकविंशत्या दर्भपुञ्जीलैस्त्रेधा
विभक्तैः सप्तभिःसप्तभिस्तूष्णीं[1] पवयित्वोदपात्रमादायेमां दिशं
नीत्वा चतुष्पथ एतस्मिन्नेवोदपात्रे ऽवेक्षमाणं पाप्मनो विनि- ९
धीत्वाचयति सिंहे मे मन्युर्व्याघ्रे मे ऽन्तरामय इत्यामामे-
तमनुवाकं निगद्य निनीयापः परास्य पात्रमनपेक्षमाणा
आयन्ति । हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य पवमानः सुवर्जन
इत्येतमनुवाकं यजमानं वाचयन्नद्भिर्मार्जयत्या[2]मात्यादिप्र-
मादीप्यान्वाहार्यपचनमेतासाग्नीन् सादयित्वा प्रोक्षयित्वा बर्हिषा १०
परिस्तीर्याज्यं विलाप्योत्पूयोत्तरत एतानुपसादयति[3] चतुर
उदकुम्भांस्त्रीनौदुम्बरान्कूर्चावौदुम्बरौ[4] दर्वीमेकां वपाश्र-
पणीमविभ्राष्ट्रामौदुम्बरीमेव दक्षिणतः सर्वानेवान्यान्याली-
पाकानैद्धमश्चिकान्संभारानेरकोपबर्हणे[5] आञ्जनाभ्यञ्जने आज्यं
तपस्तुष्टिं स्फ्यं स्रुवमिति । दक्षिणतो ऽधिदेवनं करोति । ११
तदेकाश्मपञ्चायनो[6] ऽवाक्षिवपत्यंच[7] स्फ्यमादाय सकृदेव

---

१ Before तूष्णीं T Be ins त्रिः
२ Thus Be HBT; त आपो॰ JF. ३ ॰सादयति BT.
४ Thus BTH Be; कूर्चान् J, शकलान् F ५ cp. page ३१, note ४
६ Thus Be FJ and Keś sec. m.; शकलापपंचा॰ BT and Keś. pr m., शकलापंचा॰ H
७ Thus JFH; ॰पंत्यय BT Be.

दक्षिणोद्धन्त्यपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु। अन्यत्रेतो गच्छन्तु यत्रैषां गतं मन इत्यथैनदद्भिरवोक्षत्युदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नो ऽवन्तु पितरो हवेष्विति ॥ ८ ॥

अथोल्मुकमादत्ते य आददानाः स्वधया नवानि पिश्यानि रूपाण्यसुराश्चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्रणुनोक्तु[1] यस्मादिति तेनोद्धतमभितपत्यग्निः पावकः यदिमानि हव्यमिनो ऽसुरानुदताद्दूरमोकसः। पितृणां ये वर्णं हलेह भागमिच्छन्त इति तद्दैव धर्न्तं करोति तस्मिन्नुल्मुक माध्यलोकं प्रयोतयति तद्दक्षिणायं बर्हिः स्तृणाति सकृदाच्छिन्नं बर्हिरूर्णाम्रदु स्योनं पितृभ्यस्त्वा भराम्यहम्। अस्मिन्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेत्यथ पितॄनावाहयत्युदीराणा इह सन्तु नः सोम्याः पितरः पितामहाः प्रपितामहाश्चानुगैः सह। असुंगमाः सत्ययुजो ऽवृकास आ नो हवं पितरो ऽद्यागमन्तु ॥ एह गच्छन्तु पितरो हविषे अत्तवे। अस्मिन्यज्ञे बर्हिष्यानिषद्य मा वीरः प्र मा युनगित्यथैभ्य एरकोपबर्हणे निवेदयत आसनं शयनं चेमे तयोः सोम्यास आगताः। प्रिया जनाय नो भूत्वा शिवा भवत शंकरा इत्यथैभ्यः

[1] Corrected, प्रणुनोक्तृ MSS

पानान्याहरन्ति[१] मधुपानं चीरपानꣳ स्नुपानं यद्वा भवत्यन्यद्ब्राह्मणेभ्यो ददात्यन्यदुपनिनयत्येतद्वः पितरः पितामहाः प्रपितामहाः पानमित्येकैकेनोदकुम्भेन मार्जयति तूष्णीं । तद्दक्षिणान्युपविशन्ति चत्वारः पितापुत्राः । पिता पुरस्ताज्ज्येष्ठो दक्षिणतो ऽनुजः पश्चात्कनिष्ठ[२] उत्तरतो । द्वादशाहाग्निपिता प्रच्छिनत्ति । तद्दिशयते । द्वादश ज्येष्ठर्षिदिशयते । द्वादशानुजर्षिदिशयते । ऽप ये ऽतिरिच्यन्ते तान्कनीयाꣳसमुपसमूहन्त्यथ[३] यदि द्वौ भवतो द्विरात्रामः पिताच यवेष्ठो जाया तृतीयाय यदि नैव भवन्त्युभौ द्विरात्रामौ जायापती । एव ता पितु न्याय । एव एव[४] द्वयोः । शतं शतमित्येव[५] व्यपगच्छन्ति । पूना गौरित्युक्तोऽभिदर्व्येभ्यो मर्हिराद्वाय गामुपाकरोति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमीति । तूष्णीमित्येके । ऽथैनामद्भिः प्रोक्षति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टं प्रोक्षामीति । तूष्णीमित्येके । तामपैव प्रतीचीनशिरसीं[६] दक्षिणापदीꣳ संज्ञपयन्ति । तस्यै संज्ञप्ताया अद्भिरभिषेकं प्राणानाप्याययति तूष्णीं । तूष्णीं वपामुत्खिद्य हृदयमुद्धरति प्रज्ञा-

[१] Thus BF and Keś. sec. m., आहारयति Be HJ, Keś. pr. m.; आहारयमथति T.

[२] Thus B Be J and Keś., कनिष्ठ H, कनीयान् the other MSS

[३] Thus TBJ, the other MSS more or less corrupt.

[४] एव only in B Be H Bh.   [५] एव B Be HF, एवं TJ

[६] Thus all the MSS.

तानि यावदानानि प्रज्ञातौ च मतश्नू[१] तान्देतेष्वेव शूलेषूपनिष्टैतस्मिन्नेवाग्नौ[२] श्रपयन्ति। शृतायां वपायां पञ्च स्रुवाहुतीर्जुहोति ॥ ९ ॥

याः प्राचीः संभवन्त्याप उत्तरतश्च याः। अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः स्वाहा ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या। दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः स्वाहा ॥ अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः सुसन्धिकैः। अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः स्वाहा ॥ यन्मे माता प्रलुलोभ चरत्यननुव्रता। तन्मे रेतः पिता वृङ्क्तामाभुरन्योऽवपद्यताꣳ स्वधा नमः स्वाहा ॥ यद्वः क्रव्यादङ्गमदहल्लोकाननयन्प्रजानञ्जातवेदाः। तद्वो ऽहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः स्वधा नमः स्वाहेति। त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोति सोमाय पितृमते स्वधा नमः स्वाहा ॥ वाजिनिदं जुषस्व नः स्वगा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे। वैवस्वते दमद्धि नः स्वगा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः। प्र देवेभ्यो वहा[३] हव्यं पितृभ्यश्च स्वगा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहेति।

१ Thus all the MSS.

२ Thus only TJ, the other MSS corrupt, comp. Baudh grhs. I. 1

३ वह BF

तूष्णीं दर्वीमभ्याधाय पिण्डानामावृतैतान्यवदानानि ददाति हृदयमेवापि ऽस्य सर्वं मतस्नमथ दक्षिणमेतत्ते ततासौ ये च त्वामनु यांश्च त्वमथान्वस्थेषा[1] ते तत स्वधाक्षितिर्यावती पृथिवी तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि पृथिव्या मितमसि ततायं मा क्षेष्ठा इति। द्वितीयं ददात्येतत्ते पितामहासौ ये च त्वामनु यांश्च त्वमथान्वस्थेषा ते पितामह स्वधाक्षितिर्यावदन्तरिक्षं तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददाम्यन्तरिक्षेण मितमसि पितामहाय मा क्षेष्ठा इति। तृतीयं ददात्येतत्ते प्रपितामहासौ ये च त्वामनु यांश्च त्वमथान्वस्थेषा ते प्रपितामह स्वधाक्षितिर्यावती द्यौस्तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि दिवा मितमसि प्रपितामहाय मा क्षेष्ठा इत्यथ पितरो यथाभागं मन्दध्वमित्युक्त्वैकैकेनोदकुम्भेन मार्जयति तूष्णीमेवैभ्यो गामुपपरेत्य लोहितमुपप्रवर्तयति यानि रक्षांस्यसृग्भागानि ये चापि पितरो हरन्तां विहरन्तां तृप्यन्तु रुधिरस्य ते॥ ये नः पतिता गर्भा असृग्भाज उपासते। तेभ्यः स्वजा स्वधा नमस्तृप्यन्तु मदन्तु च॥ य आमा ये च[2] पक्वा ये च दुष्टाः पतन्ति नः। तेभ्यः स्वजा स्वधा नमस्तृप्यन्तु मदन्तु च॥ ये कुमारा या स्त्रियो

---

१ Here and in the corresponding passages further on the MSS. have ॰न्वैषा instead of ॰न्वेषा।

२ om. BT and two MSS of the gṛhya-sūtra

ये ऽविज्ञाताः पतन्ति नः । तेभ्यः स्वधा स्वधा नमस्तृप्णुवन्तु मदन्तु येष्वागत्याञ्जनं ददात्यथाभ्यञ्जनं ददात्यथ वसांऽसि ददात्यथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते । ऽप वीरं याचते । ऽथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते मनो न्वाह्वामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथैतद्वस्तं वास एवंविदे ब्राह्मणाय दत्त्वान्यदवनीयं[1] वासः परिधाय दक्षिणोपपरेत्याद्भिर्मार्जयते ॥ १० ॥

यासु गन्धा रमा वर्णा बलं च निहितं[2] शुभे । ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ या अर्जनमभिषिञ्चन्ति देवप्रेषिता महीम् । ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ यासां निष्क्रमणे सर्वमिदं जायते जगत् । ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ यासामिमे पयो लोकास्तेजसा यशसावृताः । ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ याः प्राचीर्या दक्षिणा याः प्रतीचीर्या उदीचीर्या ऊर्ध्वा रेवतीर्मधुमतीराप स्रवन्ति शुक्राः । ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु म इत्यथैतद्वसनीयं वासो विमुच्यान्यत्परिधाय प्राजापत्ययर्चाग्निंवदेति प्रजापते न त्वदेतान्यन्य इत्यथोल्मुकमपिसृजत्यभ्रहुतो[3] हविषो जातवेदा

---

१ Thus H Be J, वसनीय the other MSS.

२ Thus Be HTF; निषिषिते B, निषिवेष्ठ I.

३ Thus HBTJ Be, F reads with Āp. Hir. Bhār. the mantra with वो ।

श्वाङ्कृत्यानि सुरभीणि कृत्वा । प्रादाः[1] पितृभ्यः स्वधया ते अक्षन्नशानमग्ने पुनरपेहि देवानित्येतान्यवदानानि ब्राह्मणेभ्यो ददाति हृदयमेवाग्रे ऽथ सव्यं मतस्नमथ दक्षिणं यथाश्रद्धमन्त्रं कुरुते । गामेतामष्टधाः कृत्वा ब्राह्मणेभ्यो वरं[2] ददाति । स[3] ये ह वै चैतस्यै मांसं लभन्ते सर्वे ह वा अस्यै ते गोभाजनो भवन्त्यामात्ये[4] जयामभ्यातानानाष्ट्रभृत इति हुत्वामात्यहोमाञ्जुहोत्येष ह वा उपव्रमय । अप ह्यस्मिन्देवा वसन्ति मातर्जथ्यानो वामं वसित्येतद्ध वै देवानां वामं वसु यदाग्नेयो ऽष्टाकपाल । अप हैनं वामं वसु गच्छति यस्य ह वा एतामेवंविद्वानग्नौ कल्पयते[5] । सर्वं पाप्मानं तरति । तरति ब्रह्महत्यामप पुनर्मृत्युं जयतीति होवाच प्रजापतिस्तानि ह वा एतानि कूश्माण्डानीत्याचक्षते कामवानीति[6] वामात्यहोमा इति वातीमोक्षा[7] इति वा । स यत्किं चास्मिंल्लोके पापं

---

१ प्रादात् Be only   २ om. Be H

३ Thus T only; F ददाति स ये हैकैचेतस्यै, B Be H · ददात्यथैवयैकेचेतस्यै ; J ददातिर्यैवकेचेतस्यै ; Bh. reads with स ।

४ Thus T, B: गोभाजनो भवंत्यमात्ये ; FH गोभाजयोभव (or वे) त्यमात्ये ; J गोभाजोलक्षिप्रेवाघोभवत्यामयोमात्ये ; Be presents the same reading as T, but अमात्ये instead of आमात्ये ।

५ Thus B Be TH, the other MSS कल्पयति।

६ Uncertain. The above given in the reading of T ; कामपानीति J , कामयंतिमिति F , कामवानीति HB Be , probably Maitr S. II. 1. 4 काम्यं is to be compared.

७ Thus TJF वातिमोक्षा B Be H

कर्म करोति सर्वस्मात्पाप्मनो निर्मुच्यानृणः स्वर्गं लोकमेतीति होवाच प्रजापतिः ॥११॥ चतुर्थः ॥

अग्नीनाधास्यमानो भवति स उपकल्पयत ऊषांश्च सिकताश्चाखूत्करं च वल्मीकवपां च सूदं च वराहविहतं च पुष्करपर्णं च शर्कराश्चेत्यष्टौ पार्थिवा अथ वानस्पत्या अश्वत्थस्योदुम्बरस्य पर्णस्य शमी च विकङ्कतस्याशनिहतस्य शमीगर्भावरणी[1] मुञ्जकुलायं चित्रियस्याश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः सशाखाः प्रादेशमात्रीरमतिशुष्काग्राः पञ्चहिरण्यशल्काꣳस्त्रीन्सौवर्णाꣳस्त्रीनाजानानश्वं पूर्ववाहꣳ रथचक्रं ब्राह्मौदनिकाग्नौ दोग्ध्रीवत्सतरीवधꣳ रोहितं चर्मानडुहं सर्वाणि यज्ञपात्राणीत्यथास्मा[2] अरणी आहरति यो अश्वत्थः शमीगर्भ आरुरोह ते सचा। तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेत्यथातो नक्षत्राणामेव मीमाꣳसा कृत्तिकास्वग्निमादधीत रोहिण्यामग्निमादधीत पुनर्वस्वोरग्निमादधीत पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्रायामित्यथात ऋतूनामेव मीमाꣳसा वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्यो वर्षासु रथकार इत्यथो खलु यदैवैनꣳ[3] श्रद्धोपनमेदथादधीत सैवास्यर्द्धिरिति तदेतदा-

---

१ Thus B Be HF, शमी॰ TJ.

२ इति om JF (H is defect here)

३ Thus BT Ke6 यदेवैनꣳ JHF Be, but cp Sayana on T Br. I 1 2 ■ (page 13 of the commentary)

तस्यातिवेलं वा श्रद्धायुक्तस्याय[1] वै ब्राह्मणं भवति यो रोहिण्यामग्निमाधत्त[2] ऋध्नोत्येव सर्वाणोहायोदतीति । सा या वैशाख्याः पौर्णमास्या उपरिष्टादमावास्या भवति सा सकृत्संवत्सरस्य रोहिण्या संपद्यते तस्यामादधीतेत्यथास्यैतत्पुरस्तादेव जुष्टे देवयजने ऽगारं वा विमितं वा कारितं भवति । तस्य द्वे द्वारौ कुर्वन्ति प्राचीं च दक्षिणां च । मध्ये गार्हपत्यस्यायतनं कुर्वन्ति । पुरस्ताद्द्वारस्य विकामेऽस्या[3] आहवनीयस्यापि वा चतुर्निमिते । दक्षिणतो विषुवत्यन्वाहार्यपचनस्यापि वा यथा द्वौ भागौ प्राक् स्यातामेकः पश्चादित्येवं । केशोद्धरयावोप्य केशश्मश्रु वपते । नखानि निकृन्तते । एवं पत्नी केशवर्जमुभौ मानुषेणालङ्कारेणालङ्कृतौ भवतो ऽहतवाससावथाभ्यां व्रतोपायनीयं पाचयति[4] । तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्य । ॥ १२ ॥

अथाधिवृक्षसूर्ये याचति सर्वौषधमाज्यस्थालीं स्रुवाः सुवं बर्हिरिध्मो दौष्पाल्ककलानित्येतत्समादाय संप्रच्छन्न अन्तरीपं वोपपनीयं वाभिप्रव्रजन्ति । तस्मिन्दौष्पाल्ककलान्संप्रकीर्य बर्हिषा परिस्तीर्याज्यं विलाप्योत्पूयाञ्जलिनोपस्तो-

---

१ Thus J (omitting एतद्) and H; T ब्राह्मणस्यातिवेलंवाश्रद्धायुक्तस्याय; B Be F: ॰तिवेलं (or ॰लायां) श्रद्धायुक्तस्यादय ।

२ Thus HJT, ॰माधत्ते the other MSS.

३ Thus BJT (the last विकामे॰); विक्रमे॰ FH Be.

४ Thus Be HJ, वापयति T (grantha?) and F, वाचयति B.

णाभिघारितꣳ सर्वौषधं जुहोत्यग्नये सर्वौषधाय पुष्टै प्रजननाय स्वाहेत्यथ जयानभ्यातानान्राष्ट्रभृत इति हुत्वाभ्यायहोमाञ्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वा प्राजापत्यां जुहोति प्रजापते न त्वदेतान्यन्य इत्यथापरं चतुर्गृहीतं गृहीत्वानुख्यां जुहोत्यन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततान स्वाहेत्यथैतानङ्गारांश्चन्ने वा शरावे वा यजमानो गृह्णात्यायुषे वो गृह्णामि तेजसे वो गृह्णामि तपसे वो गृह्णामि[1] वीर्याय वो गृह्णामि ब्रह्मवर्चसाय वो गृह्णामीत्यथैनानादायोपोत्तिष्ठत्यायुर्मामाविशतु भूतिर्मामाविशतु ब्रह्मवर्चसं मामाविशत्विति । तानध्वर्यवे संप्रदायोदायन्नन्वारब्धे यजमान । एतेनैव यथेतमेत्योत्तरेणागारं परीत्य[2] पूर्वया द्वारा प्रपाद्य गार्हपत्यस्यायतने न्युप्योपसमादधाति । परिस्तृणाति । दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथैतद्रोहितं चर्मानडुहं जघनेनाग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तस्य वत्सः काले चतुरः पात्रान्व्रीहीन्निर्वपति[3] ब्रह्मणे मुष्टं निर्वपामीति वा तूष्णीं वाथ निष्क्रामभिमृशत्याकूत्यै त्वा कामाय त्वा समृधे[4] त्वेत्यथैतान्व्रीहीञ्छूर्पे प्रक्षुद्याद्भिरभ्युक्ष्य चर्मोदूहत्यथैतस्मिन्नेव[5]

---

१ Before वीर्याय B ins. ओजसे वो गृह्णामि । २ प्रतीत्य B Bc

३ T and Ke's, perhaps rightly, व्रीहीणां i. e. of व्रीहीन् ।

४ Thus all except T, which has समृद्ध्यै, but cp. T. Br. II. 5. 3. 2

५ चदुवति B.

चर्मण्युलूखलमुसले निधायावहन्त्यथैतेनैव पात्रेण चतुर उदपात्रानानयति यदि व्रीहिता स्थाली भवति । यद्यु वा अव्रीहिता पञ्च वा भूयसो वा । स समोदकः संपद्यते ॥१३॥

तं य एव कश्[1] कुशलः परीन्धेन[2] श्रपयित्वाभिघार्योद्वासयुदामयल्यैवमायतिगव[3] ऋत्विग्भ्यः प्राङ्हूपसंगच्छन्त एवमेत ऋत्विजो[4] । ऽथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंघ्नन्निवोद्धरति । सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथैतस्यैवौदनस्योपघातं[5] जुहोत्युपतिष्ठते वा प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्व देवान्यजे हेड्यान्स्वाहेत्यथैनाऽध्वर्युः आर्षेयानुत्तरतो ऽनुदिशमुपवेश्य तामनुपूर्वमाचमय्य[6] तेभ्य एनं भूमिष्ठं स्पृशस्तुच्छिन्दन्निवोपोहति । चिः प्राश्य प्राश्नन्ति[7] राद्धस्ते ब्रह्मौदन इति । तेभ्यः षाष्ठं वत्सतरं ददात्यथैव सुवर्णं आषीनो ब्राह्मणः यामकार्यं प्राश्नाति । तस्मै यदस्योपकल्प्यते[8] तद्ददात्यथ

---

१ कश्चन H Bo and Kei.; कश्चित् T, कश्च the other MSS.

२ Thus HJ Bo; परीन्धेन B; परिन्देन T, परिन्धेन F

३ Thus H Bh, Kei; आयतिनवम् B, आयतीनव Bo J; आयतिनवे वाभे F; आयतिनं T.

४ Thus Bo F; स्वदृत्विजो HBJ, T om एव।

५ Thus H; °ौदन° the other MSS

६ °अनुपूर्वम° J

७ Thus H Bo T F, Kei, प्राश्नुयन्ति the other MSS

८ Thus F only, the other MSS °कल्पते।

यदाज्यमुच्छिष्यते तेन समिधो ऽभ्यज्यादधाति समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन्हव्या जुहोतन स्वाहा ॥ उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम स्वाहा ॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य स्वाहेति । गायत्रीभिर्ब्राह्मणस्य त्रिष्टुब्भी राजन्यस्य जिघर्म्यग्निमा त्वा जिघर्म्यायुर्दा अग्ने हविषो जुषाण इति जगतीभिर्वैश्यस्य जनस्य गोपा अजनिष्ट जागृविरग्नि मानुषीरीडते विशः सप्त ते अग्ने समिधः सप्त जिह्वा इति । समित्सु वत्सतरीं ददाति । ॥ १४ ॥

अथास्मा अरणी प्रयच्छन्नाह वाचंयमो भविष्यसि सꣳस्थाधि यज्ञे सꣳस्थिष्यमिति । स आह ब्राह्मणानामयनार्थं गोपायत संभारान्निधत्तेति । तस्य सुभिक्षमन्वाधेयं भवति । साग्न्याधेयस्य सन्तिष्ठिर्सदाक्रनाग्न्याधेये गां कुर्वीत गोरूप-मिति । कुर्वीतैवापि[1] नैव न कुर्वीतापि मक्षीरपि कुर्वीतानु चैतस्य गवेनुष्या समाङ्येति कार्यो[2] । ऽथास्मा अरणी प्रयच्छति । ते प्रतिष्ठापति मही विश्पत्नी सदने ऋतस्या-र्वाची एतं धरुणे रयीणाम्। अन्तर्वत्नी जन्यं जातवेदसम-ध्वराणां जनयथः पुरोगाम् ॥ आरोहतं दशतꣳ शक्वरीर्मम-र्तेनाग्न आयुषा वर्चसा सह। ज्योग्जीवन्त उत्तरामुत्तराꣳ समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इत्ययैने उपनिष्ठान्नृत्विग-

---

1 Thus JFH Be, कुर्वीतैवापि B, T totally corrupt.

2 cp Dvaidha I, 16

वतौ द्यौ अग्निरेतसौ गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः । ते मत्प्रातः प्रजनयिष्येथे ते मा प्रजाते प्रजनयिष्यथः । प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इत्यथैनमनृतात्सत्यमुपनयति मानुषाद्दैव्यमुपनयतीदमहमनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति ' तं वाचंयमꣳ रात्रिं जागरयन्त आसते ' शल्कैरेताꣳ रात्रिमग्निमिन्धते शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् । उभयोर्लोकयोर्ऋध्वाति मृत्युं तराम्यहमित्युत्तरेण गार्हपत्यस्यायतनं कल्माषमजं बध्नाति तेनैनमाधास्यमानꣳ संख्यापयति प्रजा अग्ने संवासयाशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि यान्यासन्सवितुः सव इति ' ॥ १५ ॥ पञ्चमः[1] ॥

अथाध्वर्युरपररात्र आहृत्यारणी निष्टपति जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते । अग्निमश्वत्थादधि ' हव्यवाहꣳ शमीगर्भाज्जनयन्यो मयोभूः । अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिमित्यथैनमग्निꣳ कृते प्रमुच्य दक्षिणतो ज्वलयन्त आसते '

1 According to Bhavasvāmin, who divides our second praśna in two parts (the second beginning after khaṇḍa 11), the adhyāya number is [illegible], the khaṇḍa number according to T, which has the same division, is 4 in B 16, but the adhyāya number here also is [illegible]

ऽथैतान्यग्न्यायतनानि मृत्पिण्डेन परिलेपयत्यथ तृतीयꣳ संभाराणामादाय गार्हपत्यस्यायतने निवपति यत्पृथिव्या अनामृतꣳ संबभूव त्वे सचा। तदग्निरग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यत्रोपानुपाधिगच्छति तज्जपति यदृश्चन्द्रमसि कृष्णं तदपीहेत्यथैनमादधाति दिवस्त्वा वीर्येण पृथिव्यै महिम्ना। अन्तरिक्षस्य पोषेण सर्वपशुमादध इत्यथैनान्संप्रयौति सं वः सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः। सꣳसृष्टः प्राणो अस्तु वः॥ सं या वः प्रियास्तनुवः संप्रिया हृदयानि वः। आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः। कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः॥ ये ऽग्नयः समनसो ऽन्तरा द्यावापृथिवी। वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्त्वित्यथातिशिष्टानाꣳ संभाराणामर्धानादाय दक्षिणया द्वारोपनिर्हृत्यान्वाहार्यपचनस्यायतने निवपति यदन्तरिक्षस्यानामृतꣳ संबभूव त्वे सचा। तद्वायुरग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यत्रोपानुपाधिगच्छति तज्जपति यदृश्चन्द्रमसि कृष्णं तदपीहेति। तथादधाति। तथा संप्रयौति। तथा कल्पयत्यथैतेनैव यथेतमेत्यातिशिष्टान्संभारानादाय पूर्वया द्वारोपनिर्हृत्याहवनीयस्यायतने निवपति यद्दिवो ऽनामृतꣳ संबभूव त्वे सचा। तदादित्यो ऽग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यत्रोपानुपाधिगच्छति तज्जपति यदृश्चन्द्रमसि कृष्णं तदपीहेति।

तथादधाति । तथा संभयीति । तथा कल्पतय्येथ गोश्वारम् समादिशति । स आह विहृता अग्नयो मा कश्चनान्तरेण संचारीदित्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य[1] गार्हपत्य-स्यायतन उपरि संभारेषु मुञ्जकुलायं निदधाति । तस्मिन्प्रती-चीनप्रजननामरणिं[2] निधाय दक्षिणोत्तरारणिमवदधाति । स आह मन्थतेति । यजमानः प्रथमो मन्थति । यजमान पत्नभो मन्थति । जनयति । जाते वरं ददामीति वाचं विसृजते । ऽथैनमुपतिष्ठते ऽजीजनन्नमृतं मर्त्यासो ऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभिसंरभन्तामित्यथैनमभिप्राणिति प्रजापतेस्त्वा प्राणे-नाभिप्राणिमि पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शत-शारदाय शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय ॥ आत्थे त्वामूनमादधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्या इत्यथोद्गातार-माह रथन्तरं गृणीहीत्यथैनमादधाति । भूर्भुवो घर्मः शिरस्त-दयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ ॥ भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति इत्यङ्गि-रसामादध्यादादित्यानां त्वा देवानां व्रतपते व्रतेनादधामी-त्यन्यासां ब्राह्मणीनां प्रजानां । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञ । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेना-दधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेना-

---

१ After आहृत्य HFJ ins. अग्नीम्

२ Instead of अरणिं B has अधरारणिं, Hc अधरारणीं, H अरणी

दधामीति वैश्यस्य ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया तनुवा संभवेत्यथैतꣳ राजतं रूपलाय वाश्रानाय वातिमयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणमथैनमुपतिष्ठते अयं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि। ममैव सन्मह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः॥ सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीःश्रेयसीर्दधत्। अग्ने सपत्नाꣳ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीति ॥१६॥

अथैतमग्निमादत्ते य एष शते प्रमुष्टो भवति तं दक्षिणया द्वारोपनिर्हृत्यान्वाहार्यपचनमादधाति भूर्भुवो वातः प्राणस्तदयमग्निः शंमियः पशुभिर्भुवत्। स्वदितं तोकाय तनयाय पितुं पच॥ अमीषां त्वा देवानां व्रतपते व्रतेनादधामीति यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया तनुवा संभवेत्यथैतꣳ राजतं रूपलाय वाश्रानाय वातिमयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणमपि वा गार्हपत्यादेवान्वाहार्यपचनमादधाति प्रजापतिरग्निमसृजत सो ऽबिभेत्प्र मा धक्ष्यतीति तस्य त्रेधा महिमानं व्यौहच्छान्त्या अप्रदाहायेत्येतस्माद्ब्राह्मणादेनमुपतिष्ठत इमा उ मामुपतिष्ठन्तु रायः आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इत्यथैनमेव यथेतमेत्याभ्यादधातीध्मं प्रणयतीयं तं

तथादधाति ' तथा संप्रयौति ' तथा कल्पयित्वाय गोसारञ्
ममादिशति ' स आह विहृता अग्नयो मा कदनान्तरेण
संचारीदित्यध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य¹ गार्हपत्य-
स्यायतन उपरि संभारेषु शुल्बकुलायं निदधाति ' तस्मिन्प्रती-
चीनप्रजननामरणिं² निधाय दक्षिणोत्तरारणिमवदधाति '
स आह मन्थतेति ' यजमानः प्रथमो मन्थति ' यजमान
उत्तमो मन्थति ' जनयति ' जाते वरं ददामीति वाचं
विसृजते ' ऽथैनमुपतिष्ठते ऽजीजनन्नमृतं मर्त्यासो ऽस्रेमाणं
तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमांसं
जातमभिसंरभन्तामित्यथैनमभिप्राणिति प्रजापतेस्त्वा प्राणे-
नाभिप्राणिमि पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शत-
शारदाय शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय ॥ प्राणे
त्वामृतमादधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्या इत्यथोद्गातार-
माह रथन्तरं गायेत्यथैनमादधाति ' भूर्भुवो घर्मः शिरस्त-
दयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय
यच्छ ॥ भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्वङ्गि-
रसामादध्यादादित्यानां त्वा देवानां व्रतपते व्रतेनादधामी-
त्यन्येषां ब्राह्मणानां प्रजानां ' वरुणस्य त्वा राज्ञो व्रतपते
व्रतेनादधामीति राज्ञ ' इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेना-
दधामीति राजन्यस्य ' मनोस्त्वा ग्रामण्यो व्रतपते व्रतेना- १०

---

१ After आहृत्य HFJ ins. स्वयनेन

२ Instead of अरणिं B has अधरारणिं, Be अधरारणीं, H अरणी

प्रदक्षिणमाहृत्योर्ध्वं प्रतिष्ठापयति यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः शम्भूः प्रजाभ्यस्तनुवे स्योनः ॥ प्राणं त्वामृत आदधाम्यन्नाद-मन्नाद्याय गोप्तारं गुप्त्या इत्यथोद्गातारमाह इडदारक्तीयम् मेतमिति[1] गायेति ' सर्वाणि संप्रेष्यति[2] ' हरति गोयमान आहवनीयमादधाति भूर्भुवः सुवरर्कंश्चक्षुस्तदसौ सूर्यस्तदय-मग्निः संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधे ऽग्निनाग्ने ब्रह्मणा आनीशां त्वा देवानां व्रतपते व्रतेनादधा-मीति ' यथर्षि यथागोत्रं ' गायत्रेण छन्दसेत्युत्तरतो हिरण्य-पक्षमुपास्यति क्षया तनुवा संभवेत्यथैतऽ राजतं रुक्मलाय वाऽज्ञातायै वातिप्रयच्छत्यातिंमेवातिप्रयच्छतीति ब्राह्मणसंधेन-मुपतिष्ठत आगन्ने आगन्ने सर्वमायुर्यानिग्न इत्यथैतावग्नी आदधाति सभ्यं चावसथीयं च[3] ' रथचक्रं प्रवर्तयति संततं[4] गार्हपत्यादाहवनीयात् ' ॥ १७ ॥

सर्वौषधेन आहुतीभिरग्नीन्क्रमयित्वा[5] पञ्चपञ्च नाना-हवीयाः समिधो ऽभ्याभिदधाति समिध्यमानः प्रथमो नु धर्म इत्येताभिः पञ्चभिरायुर्दा अग्ने हविषो जुषाण इत्येता-

१ B Be ins. साम before गायेति, T ग्रैतगौतसामगायेत

२ Thus B Bb , the other MSS. संप्रेष्य

३ BH चाव    ४ Thus HB Be J , संततं the other MSS.

५ Thus only J, the other MSS आहुतिभि॰

तथाभ्यादधाति यथा मन्यते ऽर्धोदिते सूर्य आहवनीय[1] आधीयमानः संपत्स्यत इति । तस्य तथा संपद्यते । उपोपयमनीः कल्पयन्त्यथ एष पूर्ववाट् पत्यून्नितः पुरस्तात्तिष्ठत्यथोद्गातारमाह वामदेव्यं गृहीत्यथैनमुद्यच्छत ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायायुषे वर्चसे । सपत्नतूरसि वृत्रतूः ॥ यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु पप्रथे[2] तया नो अग्ने जुषमाण एहि ॥ दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः । यत्रयत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहीत्यथत्यग्ने हरत्यथेयत्यथेयत्यधोऽधः शिरो हरतीति ब्राह्मणमुद्दान एवैता माया अभिसंपादयेदित्येतदपरमथ पूर्वं नयन्ति । तमनुमन्त्रयते प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पद इति । विषुवत्युपरमन्ति विक्रमस्व महाꣳ असि वेदिषन्मानुषेभ्यस्त्रिषु लोकेषु जागृहीत्यथोपातियन्त्यन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततानेत्यथैतेनाश्वेन प्राचोत्तरतः पार्श्वतः संभाराणामाक्रमयति यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्नित्यथैनं प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदञ्चमुत्सृजति[3] । स एषो ऽध्वर्योर्भवत्यन्यं ब्रह्मणे ददात्यथ १०

---

१ om. T. २ पप्रथे B Be H ३ आवर्त्य FHJ, आहृत्य B Be T.

प्रदक्षिणमावृत्यैनं प्रतिष्ठापयति यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योनः ॥ मार्षं लाम्हत आदधाम्यवाद्-समाधाय गोमारं गृहा इत्यंशोद्गातारमाह इडादारवन्तीयम् श्यैतमिति[1] गायेति । सर्वाणि संमेष्यति[2] । इहति गौपमान आहवनीयमादधाति भूर्भुवः सुवरर्कमयसुसदसौ सूर्यस्तदय-मग्निः संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधे ऽग्निनाग्ने ब्रह्मणा अमीषां त्वा देवानां व्रतपते व्रतेनादधामीति । यथर्षि यथागोत्रं । गायत्रेण छन्दसेत्युत्तरतो हिरण्य-मस्कासुपास्यति त्वया तनुवा संभवेत्यपैतस्य राजतं वृषलाय वाशालाय वातिमपच्छत्यातिमेवातिप्रपच्छतीति ब्राह्मणमथैन-मुपतिष्ठत आनशे व्यानशे सर्वमायुर्व्यानश इत्यथैतावग्नी आदधाति सभ्यं चावसथीयं च[3] । रथचक्रं प्रवर्तयति संततं[4] गार्हपत्यादाहवनीयात् । ॥ १७ ॥

सर्वौषधेन व्याहृतीभिरग्नीनभिमथिता[5] पञ्चपञ्च नानावृक्षीयाः समिधो ऽभ्याभिदधाति समिध्यमानः प्रथमो नु धर्म इत्येताभिः पञ्चभिरायुर्दा अग्ने हविषो जुषाण इत्येता-

---

१ B Be ins. साम before गायेति, T श्यैतयौतसामगायेव

२ Thus B Bu , the other MSS संपेष

३ BH चाय    ४ Thus HB Be J , संततं the other MSS.

५ Thus only J, the other MSS आहुतिभि॰

मपोद्धृत्याथ प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य जघनेन गार्हपत्यं तिष्ठꣳस्तनूभिरुपतिष्ठते ये ते अग्ने शिवे तनुवौ विराट्च स्वराट्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम्। यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध इति सर्वाभिर्गार्हपत्यꣳ सर्वाभिरन्वाहार्यपचनꣳ सर्वाभिराहवनीयमथ घोरास्तनूरुपतिष्ठते यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप[1] उपस्पृश्य विराजक्रमेणोपतिष्ठते नर्य[2] प्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठितामिति गार्हपत्यमथवा पितुं मे गोपाय। अस्मन्नमिहायुषे। अदब्धायोऽशीततनो। अविषः पितुं कृधीत्यन्वाहार्यपचनꣳ शꣳस्य पशून्मे गोपाय। द्विपादो ये चतुष्पदः। अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगा इत्याहवनीयꣳ सभ्य सभां मे गोपाय। ये च सभ्याः सभासदः। तानिन्द्रियावतः कुरु। सर्वमायुरुपासतामिति सभ्यमहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूꣳषि। सा हि श्रीरमृता सतामित्यव-

---

१ ध्यायेदित्यथाप B Be

२ Of these mantras J gives only the pratikas

मथीयमथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति । पूर्णाहुतौ वरं ददात्यथैतान्यग्निहोत्रपात्राणि प्रक्षालितान्युत्तरेण गार्हपत्यमुपसादयति कूर्चे वा तृणायां वा स्थालीꣳ[1] स्रुवꣳ स्रुचमभिद्योतनꣳ समिधमित्यथैतामग्निहोत्रीं दक्षिणत उदीचीꣳ स्थापयित्वा ब्राह्मणो[2] दोग्धि । पूर्वौ दुह्यादपरौ दुह्यान्न संसृष्टेद्द्वयोर्दुह्यात्पशुकामस्येत्यभिज्ञायोत्तरमानयत्यथैतदग्निहोत्रमपरेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमुपसाद्य तस्मिन्नग्निहोत्रविधिं चेष्टित्वा समिधमुपयत्य प्राङ् चरति । जघनेनाहवनीयमुपसादयति कूर्चे । अथैताꣳ समिधं मध्यत आहवनीयस्याभ्यादधाति तूष्णीं । तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोत्युभय[3] माध्वैव[3] च माधुभयमवाप्नोतीति ब्राह्मणं । द्विरङ्गुल्या प्राश्योदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयति । निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वोदगुद्दिशति । सप्तर्षीनेव[4] प्रीणातीति ब्राह्मणꣳ । उत्तोपमभिन्द्धे ब्रह्मवर्चसस्य समिद्ध्या[5] अपो निनयत्यवभृथस्यैव रूपमकरिति[6] ब्राह्मणम् । ॥ १८ ॥

---

१ स्थाप्यस्थालीꣳ H.

२ Thus BT; ब्राह्मणे F, ब्राह्मणोवा Bo, ब्राह्मणोवा J, ब्राह्मणोवै H.

३ Thus JT and Venk. on Karmānta I. 17, कर्मान्तादि Bo, कर्मान्तादि BB; उभादि F

४ Thus B Be HF, सप्तर्षीनेव TJ

५ Thus corrected, समिध्या अपो H Be HF, समिध्या आपो J, समिध्यापो T

६ Thus only B Be, cp. Taitt. Br. II 1. 1. 9. The other MSS. have सर्वोनिनयतीति instead of अकरिति ।

अथ परिक्रमिणं भर्त्तिशं प्रविश्योऽदीक्षितो[1] वा वसुधा करोत्यथ पश्चात् प्रतीत्वा पावरीयाग्नेयमष्टाकपालं निर्वप्य-न्द्रशहोतारं व्याचष्टीत। सामिधेनीरनुवक्ष्यन्दशहोतारं व्याच-ष्टीत। अपयित्वासादयति। तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावंश्च हविषो ऽग्निर्मूर्धा भुव[2] इति। त्रिष्टुभौ संयाज्ये। अन्वाहार्यमासाद्याग्न्याधेयदक्षिणा ददात्यो द्वादशभ्यो ददाति। कामं भूयसीर्ददाति। संतिष्ठत एषेष्टिः अपूर्णपात्रविष्णुक्रमा। विसृजते व्रतमथ तदानीमेव पश्चात् प्रतीत्वा पावरीयैन्द्राग्नमेकादशकपालं निर्वपत्यादित्यं चरुं। एत एव चरुर्भवति। प्रतो मैत्रीयमि[3] वाज्यमासयति। अपयित्वा-सादयति। तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्ना-वाज्यभागावंश्च हविषोरिन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यै-न्द्राग्नस्यादितिर्न उरुष्यत्वदितिं नु मातरमित्यादित्यस्य। त्रिष्टुभौ संयाज्ये। अन्वाहार्यमासाद्यैतं चरुं समुद्धृत्य चत्वार आर्षेयाः प्राश्नन्ति। दिशामेव ज्योतिषि जुहोतीति ब्राह्मणं। संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा। विसृजते व्रतम्। ॥१९॥

अथैतद्द्वादशाहं व्रतं चरति। तस्यैतद्व्रतं। नानृतं वदति। न मांसमश्नाति। न स्त्रियमुपैति। नास्य पल्पूलनेन वासः पल्पूलयन्त्यथास्मा अपपाय्यशूद्रोच्छिष्टी। स्वयं पादौ प्रक्षालयते।

---

१ चत्वारद्वृत्तं Ba H

२ Instead of भुव F · अयमग्निना सहस्रिण।

३ Thus BJ, मैत्रीयमी Bo TF

न लवणमश्नाति । न कौशीधान्यमन्यत्र तिलेभ्यः । प्राङुत्तारः स्वयꣳ समिध आहरमाणो ऽग्नीनामन्ते संविशत्यंजसा ह्येते द्वादशाहमग्नयो भवन्ति । नास्य ब्राह्मणो ऽनाश्वान्गृहे वसत्यग्निहोत्रोच्छेषणभक्तो वा यजमानो भवति । भक्तमु[1] पत्न्या[1] आहरन्त्यथ[1] द्वादशसु व्युष्टासु इष्ट्याꣳ स्तीर्णायां प्रणीयाग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपति । श्रपयित्वासादयति । तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषो ऽग्न आयूꣳषि पवस अग्ने पवस्वेति । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमासाद्य त्रिꣳशन्मानꣳ हिरण्यं ददाति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतमथ तदानीमेव इष्ट्याꣳ स्तीर्णायां प्रणीयाग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपत्यग्नये शुचये । श्रपयित्वासादयति । तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषोरग्ने पावक रुचा नः पावकाग्निः शुचिव्रततम उदग्ने शुचयस्तवेति । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमासाद्य त्रिꣳशन्मानमथवा त्रिꣳशन्माने हिरण्ये ददाति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतम् । ॥ २० ॥

अथातो ऽन्वारम्भणीयैव सौमाꣳशान्वारम्भं पौर्णमास्याः समानोपवसथं करोत्यथ प्रातर्हुते ऽग्निहोत्रे पुराणं प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा

---

१ Thus JF, cp Rajasūya 20, भक्तमुपत्न्याहरंति B, ॰पत्न्याहरति T, भक्तमुपत्न्याहारं(र)ति Be H.

चतुर्होतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथापरं चतुर्गृहीतं गृहीत्वा सारस्वतौ होमौ जुहोति । पूर्णा पश्चादित्यनुद्रुत्याग्नीषोमाविति जुहोत्यथापरं चतुर्गृहीतं गृहीत्वा निवेशनी संगमनी वसूनामित्यनुद्रुत्य यस्मै देवा अदधुर्भागधेयमिति जुहोत्यथ इष्ट्याꣳ स्तीर्त्वापः प्रणीयाग्नावैष्णवमेकादशकपालं निर्वपति सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालमिति । अपविलासादयति । तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावेव हविषामग्नाविष्णू अग्नाविष्णू म यो देवा नो दिवः पीपिवाꣳसꣳ सरस्वत स्तनं ये ते सरस्व ऊर्मय इति । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमासाद्य मिथुनौ गावौ ददाति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतमेव पौर्णमासवैमृधाभ्यां यजते । संतिष्ठते ऽग्न्याधेयꣳ संतिष्ठते ऽग्न्याधेयम् । ॥ २१ ॥ षष्ठः ॥[1]

## ॥ इति द्वितीयः प्रश्नः ॥

---

1 The numbering of the khandas differs materially in the different MSS. The one accepted in this edition is found in J and, up to kh. 18, also in HF. The numbers of the last two adhyāyas have been added after the Bhāṣya, which however commences, as does also T, a new praśna after khaṇḍa 11. According to B the whole second praśna comprises 23, according to J (where the last but one, though marked, is not numbered) 20, according to F and H 19 and according to T 21 (10+11) khaṇḍas. Be numbers 22 khandas, but as one number is omitted, viz., kh. 14, *there are in* fact only 21 khandas also in this MS.

अग्नीन्पुनराधास्यमानो भवति । तदाहुः कृतयजुः संभृतसंभारो भवति न संभृत्याः संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यं यजुः पुनराधेयस्य समृद्ध्या इति । स उपकल्पयते पुनर्निष्कृतꣳ रथं पुनरुत्स्यूतं वासः पुनरुत्सृष्टमनड्वाहं दर्भकुलायं तिस्रो दर्भमयीर्विस्रुमिकाः । प्रज्ञाता आग्न्याधेयिकाः संभाराः । या यावत्याः पौर्णमास्याः पुरस्तादमावास्या भवति या वसन्तसंवत्सरस्य पुनर्वसुभ्याꣳ संपद्यते तस्यामादधीतेति । तस्या उपवसथे ऽरण्योरग्नीन्समारोह्यौदवसाय अपचितामग्नीन्विचत्याग्नेयमष्टाकपालं निर्वपति वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्निति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ तदानीमेवाहिरग्नीन्समुह्य ब्रह्मौदनꣳ अपचितौपवसथ्य मातरग्न्याधेयिकं कर्म तायते । एतावदेव नाना । यदमुत्र मुञ्जकुलायं तदिह दर्भकुलायं । यो ऽमुत्रेध्मः प्रणयनीयः स इह दर्भमयीर्विस्रुमिका । दर्भैर्गार्हपत्यमादधाति[1] दर्भैरन्वाहार्यपचनं दर्भैराहवनीयं । दर्भैर्गार्हपत्यमादधात्याधाने[2] सर्पराज्ञीयर्चो[3] ऽनुवर्तयति । ॥ १ ॥

भूमिर्भूम्ना द्यौर्वरिणेति यतस्तो गार्हपत्ये तिस्र आह-

---

१ आदधाति om. Be FJ

२ Thus Be H; instead of आदधात्याधाने J has आदधातित्याधाने and F: आदधाने; T om. दर्भैर्गार्हपत्यम् and B is defective

३ Thus H, सर्पराज्ञीयर्चो Be, सर्पराज्ञीयचा F, सार्पराज्ञीयर्चो J, सर्पराज्ञीयाप्चो T, B defective.

वनीये । समानं कर्मा रशनकालादेतावदेव नाना । यदमुत्र तूष्णीमग्निहोत्रो[१] तदिह सप्त ते अग्ने समिधः सप्त जिह्वा इति जुहोति । यो ऽमुत्राग्नेयो ऽष्टाकपालः स इहाग्नेयः पञ्चकपाल-स्तस्य प्रयाजेषु चतस्रो[२] विभक्तीर्दधात्यग्न आयाहि वीतये समिधो[३] अग्न आज्यस्य वियन्त्वग्निं दूतं वृणीमहे तनूनपादग्न आज्यस्य वेत्वग्निनाग्निः समिध्यत इडो अग्न आज्यस्य वियन्त्वग्नि-र्वृत्राणि जङ्घनद्बर्हिरग्न आज्यस्य वेत्विति । स्वयं संवत्स उत्तमः प्रयाजो । ऽथात आज्यभागयोरेव मीमांसा । सर्वेष्वाज्य-भागौ स्यातामित्येके । वृधन्वन्तावाज्यभागौ स्यातामित्येके । ऽग्निं स्तोमेन बोधय त्वं नः सोमेत्येतौ स्यातामित्येके । अग्न १
आयूंषि पवस अग्ने पवस्वेत्येतौ स्यातामित्येके । यत्पवमान[४] तत्सोमरूपं । पङ्क्तौ[५] हविषो ऽग्ने तमद्याश्वं स्तोम इत्यंय सुमहज्जो वह ऋध्येत्यभितः पुरोडाशमाज्याहुती जुहोत्यग्निं मन्ये स्विष्टकृतं गिरा हाभिष्टे अद्य एभिर्नो अर्कैरिति संयाज्ये । अन्वाहार्यमाधाय ॥ २ ॥ १

पुनराधेयदक्षिणा[६] ददाति पुनर्निष्कृतं रथं पुनरुत्स्यूतं वासः पुनरुत्सृष्टमनड्वाहं । तस्यानूयाजेषु[७] विभक्ती[८] दधात्यग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः । भसन्नु ष प्र पूर्व्य

१ BH insert जुहोति ।  २ om. TJ.
३ इधिधः समिधो Be BH.  ४ Thus BH, °पवमान the other MSS.
५ Thus BJ Bo; पंक्ती T; पङ्क्तो H; F totally corrupt.
६ दक्षिणां JF.  ७ अनुयाजेषु all except T Be.
८ Thus HB, विभक्तीर्द° the other MSS.

हयं वुरीतावसे । देवं बर्हिर्वसुवने वसुधेयस्य वेत्वग्ने स्तोमं मनामहे सिम्नमद्य दिविस्पृशः । देवस्य द्रविणस्वो देवो नराशंसो वसुवने वसुधेयस्य वेत्विति । स्वयं संपन्न उत्तमो ऽनूयाजः[1] । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतमथ यदाग्नीमेव पृच्छात् स्वीत्वोपः प्रणीयाग्निवारुणमेकादशकपालमनुनिर्वपति[2] । अयथिल्माषाद्व्यति । तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषस्त्वं नो अग्ने स त्वं नो अग्न इति । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमासाद्यामन्त्राप्यं ददाति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतम् । संतिष्ठते पुनराधेयमिति । हविःपुनराधेयमथ[3] वै भवति यः पराचीनं पुनराधेयादग्निमादधीत स एतान्होमाञ्जुहुयादिति । तृतीय[4] आधाने[4] आग्नेयस्य पञ्चकपालस्य पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति लेकः सलेकः सुलेकस्ते न आदित्या आज्यं जुषाणा वियन्तु स्वाहा । केतः सकेतः सुकेतस्ते न आदित्या आज्यं जुषाणा वियन्तु स्वाहा । विवस्वाꣳ अदितिर्देवजूतिस्ते न आदित्या आज्यं जुषाणा वियन्तु स्वाहेति । संतिष्ठते तृतीयमाधानम्[5]थाप-

---

१ With ॰ Be JF.  २ अथ om BH.

३ हवि॰ [illegible] Be JF, हवि॰ H, om. T, Bh. seems to have read (perhaps rightly) हविः (var. 16 शुद्धि), comp T S I 5 4 4.

४ Thus [illegible] Be H, तृतीयाधान T, तृतीयमादधान J, तृतीय आदधान F.

५ Thus H Be JF, तृतीयाधेयम॰ T, तृतीयाधानम॰ B.

यताग्नेर्नष्टारणीकस्य च[1] मथ्यौदनेनैव[3] प्रतिपद्यते । सिद्धमग्न्याधेयम् । ॥ ३ ॥ प्रथमः ॥

पुरादित्यस्यास्तमयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचनमाहृत्य[2] ज्वलन्तमाहवनीयमुद्धरति सायमाहुतये । पुरादित्यस्योदयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचनमाहृत्य[2] ज्वलन्तमाहवनीयमुद्धरति प्रातराहुतये । वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीध्रैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वाꣳश्चकार । अह्ना यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति सायꣳ । रात्रिया[3] यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति प्रातरग्निं निदधात्यमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयानन्तं[*] काममहं जयेम प्रजापतिर्यं प्रथमो जिगायाग्नावग्नौ वैश्वानरे ऽग्निं जुहोमि स्वाहेति सायꣳ । सूर्यमग्नौ वैश्वानरे ऽग्निं जुहोमि स्वाहेति प्रातः । सायंप्रातरेवैषा पर्यन्यासे । सायꣳसायमित्येके । ऽथैतान्यग्निहोत्रपात्राणि प्रक्षालितान्युत्तरेण गार्हपत्यमुपसादयति कूर्चे वा सूनायां वा स्थाली स्रुवाꣳ स्रुचमभिद्योतनꣳ समिधमित्यथैतामग्निहोत्रीं

---

१ Thus Bo T, cp Rudradatta on Āpast. V. 29 12. The other MSS insert प्रथमं before मथ्योद॰ and BH om. च ।

२ उद्धृत्य F ३ सायꣳ T.

* Thus BH. तेन instead of तया the other MSS.

दक्षिणत उदीचीꣳ स्थापयित्वा ब्राह्मणो दोग्धि । पूर्वां दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यादपरां दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य यो वा बुभूषेत् संसृष्टयोर्दुह्यात्पशुकामस्येत्यधिश्रित्योत्तरमानयत्यथैतदग्निहोत्रमग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमुपसाद्य[1] परिषिञ्चति । ॥ ४ ॥

ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति । सत्यं त्वर्तेन परिषिञ्चामीति प्रातरेवमेव कृत्वा परिषिञ्चन्नेव प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्योदीचो ऽङ्गारान्निरूह्य ध्वान्तान्कृत्वा तेष्वधिश्रित्याभिद्योतनेनाभिद्योतयत्यग्निस्ते तेजो मा प्रतिधाक्षीदिति । स्रुवेणापः प्रत्यानयत्यमृतमसीति । पुनरेवाभिद्योत्य त्रिः पर्यग्नि करोत्यन्तरितꣳ रक्षो ऽन्तरिता अरातय इति । वर्त्म कुर्वन्नुदगुद्वास्य प्रत्यूह्याङ्गारानादत्ते दक्षिणेन स्रुवꣳ समिधं च सव्येनाग्निहोत्रहवणीं देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति । गार्हपत्ये प्रतितपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इति त्रिरेवं कृत्वा स्रुचं निधाय यजमानमामन्त्रयत ओमुन्नेष्यामीत्योमुन्नयेति[2] यजमानो ऽनुजानात्यथ चतुरः स्रुवानुन्नयति पूर्णान्वानूचो वा भूरिडा भुव इडा सुवरिडा भूर्भुवः सुवरिडेति । स्थाल्याꣳ स्रुवं प्रत्यवधायापरेण संस्पृशति मयूखैः सायंयावभिः प्रातर्यावाणो

---

१ स्य om JF

२ •मवयते वोमुन्नया• TF •मवयत्यामुन्नया• J •मन्योमुन्नया• B Bc H

मा देवाः स्वस्ति संपारयन्तु पशुभिरिति सायꣳ ' यजूर्द्वैः प्रातर्यावभिः प्रातर्यावाणो मा देवाः स्वस्ति संपारयन्तु ' पशुभिरिति प्रातरेतांꣳ समिधꣳ स्रुग्दण्डे[1] उपसंगृह्य जघनेन गार्हपत्यमुपसादयति कूर्चे नम ईशानाय प्रजाः पशवो मे वर्धन्तामहं यजमानो मा रिषमिति ' दग्रहोचोद्धृत्य प्राङ् हरति भूर्भुवः सुवर्ण्वन्तरिक्षमन्विह्यायं पन्था विततो देवयानो येनायन्नृषयः स्वर्गकामास्तेन गच्छामि परमं व्योम यथा न वीर्ये सुकृतान्ꣳ सकाशादिति ' जघनेनाहवनीयमुपसादयति कूर्चे नम[2] ईशानाय प्रजा मे वर्धतामहं यजमानो मा रिषमित्येतांꣳ समिधं मध्यत आहवनीयस्याभ्यादधाति १
॥ ५ ॥

रजतां त्वाग्निज्योतिषं वायुमतीꣳ स्वर्ग्याꣳ स्वर्गाय लोकाय रात्रिमचितिमिष्टकामुपदधे ऽमृतं प्राणे दधामि प्रजापतिस्त्वा सादयत्विति ' यथादेवतं करोति तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यंय सूददोहसं करोति ता अस्य सूददोहसः सोमꣳ ' श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति सायमेव प्रातर्हरिणीं मा सूर्यज्योतिषं वायुमतीꣳ स्वर्ग्याꣳ स्वर्गाय लोकायाहरचितिमिष्टकामुपदधे ऽमृतमपाने दधामि प्रजापतिस्त्वा सादयत्विति ' तथादेवतं कृत्वा सूददोहसं करोति ' सन्धामादीप्तायां प्रतिमुखं[3] जुहोत्यग्निर्ज्योतिर्ज्योतिः

---

१ Thus BT, स्रुवदण्डे the other MSS.

२ The yajus मा...मा रिषमिति is found only in BT

३ So JF [illegible] दिव ।

सूर्यः स्वाहेति सायꣳ सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातरिति नु सꣳसृष्टमथासꣳसृष्टमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायꣳ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरथ[1] सकृदभिवाक्य कूर्चे स्रुचं निधाय दक्षिणाहस्तादपत्यं प्रतीचीन उपप्रेत संगच्छध्वं मा भागिनां भागधेयं प्रमायि[2] । सप्तर्षीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धत्तेत्यभिनिधाय पूर्वामाहुतिमुत्तरां भूयः समिध्येव[3] जुहोति प्रजापतये स्वाहेति मनसाथ विरतिवाक्य कूर्चे स्रुचं निधायावाचीनमवमृज्य प्रतीचा नीचा पाणिनौषधीषु लेपं निमार्ष्ट्योषधीभ्यस्त्वौषधीर्जिन्वेत्येवमेव द्वितीयमवमृज्यौषधीष्वेव निमार्ष्टि दक्षिणतः प्राचीनावीती पितृभ्यस्त्वा पितॄञ्जिन्वेति सायमथ प्रातरूर्ध्वमुन्मृज्य प्राचोत्तानेन पाणिनौषधीषु [4]लेपमुन्मार्ष्ट्योषधीभ्यस्त्वौषधी-

---

१ The textus receptus is read in T, traces of this reading, which I believe to be the original one, are found in the confusion of the agnihotrayajus Thus Be HFJB read अग्निर्ज्योतिर्ज्योतिरग्नि स्वाहेति सायꣳ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति नु (om F) न (om Be) सꣳसृष्टमथासꣳ ( or सꣳसृ ) सृष्टमग्निर्ज्योतिर्ज्योतिरग्नि (JB Be H सूर्यः ) स्वाहेति सायꣳ सूर्यो ज्योतिर्ज्योतिः सूर्यः ( HJ B Be अग्नि ) स्वाहेति प्रातर।

२ Thus all except B, which has प्रयामि ।

३ भूयसी समिध्य इव J

४ From लेपम् on, T differs from the other Mss It has लेपं निमार्ष्ट्य दक्षिणतः प्राचीनावीति पितृभ्यस्त्वा पितॄञ्जिन्वेति एवमेव द्वितीयमवमृज्यौषधीष्वेवमेव निमार्ष्ट्यथाप उपस्पृश्य etc, as the others, only प्रजा ज्योतिर् twice

जिन्वेत्येवमेव द्वितीयमवसृज्यौषधीष्वेव[1] निमार्ष्टि[2] दक्षिणतः प्राचीनावीती पितृभ्यस्त्वा पितॄञ्जिन्वेत्यथाप उपस्पृश्य द्विरङ्गुल्या प्राश्नाति प्रजा ज्योतिरित्यथोदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयति ॥ ६ ॥

इदꣳ हविः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये। आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि वृष्टिसनि॥ अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त। रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति सायꣳ सूर्यः प्रजां बहुलां मे करोत्विति प्रातर्निर्णिज्य स्रुचं शिष्टयाद्भिः पूरयित्वोदगुद्दिशति सप्तर्षीन्प्रीणीहि सप्तर्षीञ्जिन्व[3] सप्तर्षिभ्यः स्वाहेति सप्तर्षीनेव प्रीणातीति ब्राह्मणमथ जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहेत्यथित्यामचित्ताकूतिं जुहोमि स्वाहेत्यन्तर्वेदि निनयति। उतोपसमिन्द्धे ब्रह्मवर्चसस्य समिद्धा अपो[4] निनयत्यवभृथस्यैव रूपमकरिति ब्राह्मणम्। ॥ ७ ॥ द्वितीयः ॥

अथ सायꣳ हुते ऽग्निहोत्रे यज्ञोपवीत्यप आचम्य[5] यजमानायतने तिष्ठन्नाहवनीयमुपतिष्ठत उपप्रयन्तो अध्वरमिति षड्भिरनुच्छन्दसꣳ षड्भिरेवोत्तराभिराग्निपावमानीभिराह-

---

१ उपस्पृश्य (rightly?) JF Bo
२ उन्मार्ष्टि Be J
३ सप्तर्ष॰ everywhere instead of सप्तर्षि॰ B Be JP.
४ ॰आ अपो BBo HJ समिद्धायो T
५ Be TF om. आहवनीयं परीत्य।

वनीयमेवोपतिष्ठते[1] ऽग्न आयूंषि पवस ऽग्ने पवस्वाग्ने पावक स नः पावकाग्निः शुचिव्रततम उदग्ने शुचयस्तवेत्यथाहवनीयमेवोपतिष्ठत आयुर्दा अग्ने ऽस्यायुर्मे देहि वर्चोदा अग्ने ऽसि वर्चो मे देहि तनूपा अग्ने ऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं तन्म आपृणेत्यथ रात्रिमुपतिष्ठते चित्रावसो स्वस्ति ते पारमशीयेत्यथाहवनीये समिधमादधातीन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यम्। अग्ने सपत्नदम्भनं वर्षिष्ठे अधि नाके स्वाहेत्यथाहवनीयमेवोपतिष्ठते[2] सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना॥ त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृजेत्यथ वै भवति यथा वै पुरुषो ऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभिरुपतिष्ठत इति[1] स[3] संवत्सरस्य परस्तादाग्निपावमानीभिर्गार्हपत्यमुपतिष्ठते[1] पुनर्नवमेवैनमजरं करोतीति ब्राह्मणमथ गृहाꣳश्च पशूꣳश्चोपतिष्ठते संपश्यामि प्रजा अहमिडप्रजसो मानवीः। सर्वा भवन्तु नो गृहे॥ अम्भ स्थाम्भो वो भक्षीय मह स्थ महो वो भक्षीय सह स्थ सहो वो भक्षीयोर्ज स्थोर्जं वो भक्षीय। रेवती रमध्वमस्मिंल्लोके ऽस्मिन्गोष्ठे ऽस्मिन् क्षये ऽस्मिन्योनाविहैव स्तेतो मापगात बह्वीर्मे

---

१ एव ( after आहवनीयं ) only Be B JH

२ एव om JF Be.

३ स only in Be

भूयास्तेत्यथाग्निहोत्रियै[1] वत्समभिमृशति सꣳहितासि विश्वरूपीरा मोर्जा विशा गौपत्येना रायस्पोषेण। सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्तामित्यथ द्विपदत्रिपदाभिर्गार्हपत्यमुपतिष्ठते[2] उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसि॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्धमानꣳ स्वे दमे॥ स नः पितेव सूनवे ऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये॥ अग्ने त्वं नो अन्तम उत त्राता शिवो भव वरूथ्यः॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दा इत्यथ गृहाꣳश्चैव[3] पशूꣳश्चैवोपतिष्ठते ॥ ८ ॥

ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडा स्थ मधुकृतः स्योना माविशतेरा मदः। सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्तामित्यथाहवनीयमुपतिष्ठते[4] तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयादित्याहवनीयमेवोपतिष्ठते सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजमित्यथ रात्रिमुपतिष्ठते कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत इत्यथ गार्हपत्यमुपतिष्ठते परि

१ Thus BHJ, ॰होत्रे I' Be

२ द्विपदा॰ I.

३ एव om T.

४ ॰यादित्यमु॰ BH

त्वाग्ने सुरं वयं विभृꣳ सहस्य धीमहि । इयद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावत इत्यथ गार्हपत्यमेवोपतिष्ठते ऽग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमाशासे मह्यममुष्मै ज्योतिष्मतीं तामाशिषमाशासे ऽमुष्मा अमुष्मा इति । यावन्तो ऽस्य पुत्रा जाता भवन्ति तन्तव[1] इत्यन्ततो । ऽथ वै भवति यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ् विष्वङ् प्रजया पशुभिरेति कवातिर्यङ्ङिवोपतिष्ठेतेति । स कवातिर्यङ्ङिवोपतिष्ठते नैव प्रत्यङ् न पराङ् । ॥ ९ ॥ तृतीयः ॥

पिण्डपितृयज्ञं करिष्यन्नुपकल्पयते सकृदाच्छिन्नं बर्हिर्भीꣳश्च परिस्तरणीयान्व्रीहीꣳश्च शूर्पं च प्रक्षालिते चोलूखलमुसले स्थालीꣳ सस्रुवाꣳ समेक्षणामेकोपवर्हणे आञ्जनाभ्यञ्जने दर्भाꣳ स्फ्यमुदकुम्भं यज्ञायुधानीत्यथान्वाहार्यपचनं परिस्तृणाति । समुत्तरेणैकैकꣳ सꣳसादयत्येकोपवर्हणे आञ्जनाभ्यञ्जने दर्भाꣳ स्फ्यमुदकुम्भं यज्ञायुधानीत्यथ प्राचीनावीतं कृत्वा जघनेनान्वाहार्यपचनमुपविश्य पवित्रवत्याꣳ स्थाल्यां व्रीहीन्निर्वपति पितृभ्यो वो जुष्टं निर्वपामीति वा तूष्णीं वोपर्यधाꣳ स्थालीं कृत्वैतस्मिन्नेव चर्मण्युलूखलमुसले निधायावहन्ति सकृदेव दक्षिणामुखो । ऽथैनानविविच्यायैतस्यामेव[2]

१ Thus Be HFJ, मावन्त T, H omits the passage

२ Uncertain, thus BH, ॰थोत्रैनान्निविच्या॰ Be, ॰थोथैनान्चि त्या॰ F, ॰थोतनिदे (or चे) विचा॰ JT, for the reading of BH (अविविच्य) cp. Āp I 7.10 अविवेकम् ।

ष्याज्यां तिरः पवित्रमप आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपत्यथाज्यं निर्वपत्यथाज्यमधिश्रयत्युभयं पर्यग्नि कृत्वा मेक्षणꣳ स्रुवं च समामृज्यैतं चरुꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथ यज्ञोपवीतं कृत्वान्वाहार्यपचनमुपसमाधाय मेक्षणेनोपघातं तिस्र आहुतीर्जुहोति सोमाय पितृपीताय स्वधा नमः स्वाहा यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहाग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेति दक्षिणार्धपूर्वार्धे[1] तूष्णीं मेक्षणमभ्याधाय प्राचीनावीतं कृत्वा दक्षिणेनान्वाहार्यपचनꣳ स्फ्येनोद्धत्यावोक्ष्य दक्षिणाग्रं बर्हिः स्तीर्त्वाद्भिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इत्यथ स्रुवेणोपस्तीर्णाभिघारिताꣳस्त्रीन्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये च त्वामन्वित्यत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदङ् पर्यावृत्योष्मणो व्यावृत उपास्ते[1] व्यावृत्त ऊर्वेति प्राङ्पर्यावृत्यैतं चरुमवजिघ्रति ॥ १० ॥

ये समानाः सुमनसः पितरो यमराज्ये। तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ ये सजाताः समनसो जीवा जीवेषु मामकाः। तेषाꣳ श्रीर्मयि कल्पतामस्मिꣳ ल्लोके शतꣳ समा इत्यथ तथैवाद्भिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इत्यथाञ्जन ददात्याङ्क्षतां पितर आङ्क्षतां पितामहा आङ्क्षतां प्रपितामहा इत्यथाभ्यञ्जनं ददात्यभ्यङ्क्षतां पितरो ऽभ्यङ्क्षतां पितामहा अभ्यङ्क्षतां प्रपिता-

महा इत्यथ वासाꣳसि ददात्येतानि वः पितरो वासाꣳस्येतानि वः पितामहा वासाꣳस्येतानि वः प्रपितामहा वासाꣳसीत्युत्तर आयुषि लोम छिन्दीतेति ब्राह्मणमथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिꣳ लोके स्थ युष्माꣳस्ते ऽनु ये ऽस्मिꣳ लोके मां ते ऽनु य एतस्मिꣳ लोके स्थ यूयं तेषां वसिष्ठा भूयास्त ये ऽस्मिꣳ लोके ऽहं तेषां वसिष्ठो भूयासमित्यथ वीरं याचते[1] वीरं मे पितरो दत्त वीरं मे पितामहा दत्त वीरं मे प्रपितामहा दत्त पितृमातृमहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेत्यथैनानुत्थापयत्युत्तिष्ठत पितरः प्रेत शूरा यमस्य पन्थामनुयाता पुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान्देवतास्वित्यथैनान्प्रवाधयति[2] यन्तु पितरो यथालोकं मनसा जवेन परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथा पितॄन्त्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्तीत्यथ तिसृभिर्मन आह्वयते मनो न्वाह्वामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथैतान्पिण्डान्सह बर्हिषाप्स्वनुप्रहरत्यथैतेषाꣳ ब्राह्मणानां हृदे उदाहरन्त्यथ यज्ञो-

---

१ J has the following passage thus वीरं मे दत्त पितरः पितृमातृमहं० भूयास्तेत्यथ वीरं मे पितामहा दत्त पितृमातृमहं० भूयास्तेत्यथ वीरं मे प्रपितामहा दत्त पितृमातृमहं० भूयास्तेत्य० ।

२ Thus B, ०वासयति Be, ०वादयति the other MSS.

पवीतं कृत्वा प्राजापत्यया गार्हपत्यमुपतिष्ठते प्रजापते न त्वदेतान्यन्य इत्यथैतां द्वितीयां जपति यदन्तरिक्षं पृथिवीमुत द्यामिति। संतिष्ठते पिण्डपितृयज्ञः। ॥ ११ ॥ चतुर्थः ॥

वर्षासु श्यामाकानामाग्रयणं करिष्यन्भवति। तस्य प्रज्ञात उपकल्पो। ऽथ प्रातरुते ऽग्निहोत्रे हुत्वाह सौम्यांपः प्रणीय सौम्यं श्यामाकं चरुं निर्वपति। हविष्कृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये ऽग्नावाज्यं जुहोति शतायुधाय शतवीर्यायेति पञ्च। अप्-र्यमसादयति। तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा आर्षेयावाज्यभागावथ हविष आप्यायस्व सं त इति। विष्णुभी मयाज्ये। अन्वाहार्यमासाद्य आको इदान्तर्यथ यजमानभागं प्राश्नात्यग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति। संतिष्ठत एवैतैः सपूर्णपात्रविष्णुक्रमा। विसृजते व्रतमथ शरदि व्रीहीणामाग्रयणं करिष्यन्भवति। तस्य प्रज्ञात उपकल्पो। ऽथ प्रातरुते ऽग्निहोत्रे हुत्वाह सौम्यांपः प्रणीयैन्द्राग्नं द्वादशकपालं निर्वपति वैश्वदेवं चरुं द्यावापृथिव्यमेककपालमिति। हविष्कृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये ऽग्नावाज्यं जुहोति शतायुधाय शतवीर्यायेति पञ्च। अपयित्वासादयति। तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा आर्षेयावाज्यभागावथ हविषामिन्द्राग्नी रोचना दिव श्नथद्वृत्रमित्यैन्द्राग्नस्य। विश्वे देवा विश्वे देवा इति वैश्वदेवस्य

द्यावा नः पृथिवी प्र पूर्वजे पितरेति द्यावापृथिव्यस्य ' त्रिष्टुभौ संयाज्ये ' अन्वाहार्यमासाद्य प्रथमजं वत्सं ददात्यथ यजमानभागं प्राश्नाति भद्राच्छ्रेयः समगन्म देवास्त्वयावसेन समशीमहि त्वा । स नो मयोभूः पितो आ विशस्व शं तोकाय तनुवे स्योन इति ' संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा ' विसृजते व्रतमथ यदसौ यवानामाग्रयणं करिष्यन्भवति ' तस्य प्रज्ञात उपवसथः ' समानं कर्म यथा व्रीह्याग्रयणस्यैतावदेव नानाथ यजमानभागं प्राश्नात्येतमु त्यं मधुना संयुतं यवँ सरस्वत्या अधि मनावचर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति ' संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णु-क्रमा ' विसृजते व्रतम् ' ॥ १२ ॥ पञ्चमः ॥

अग्निभ्यः प्रवत्स्यन्यज्ञोपवीत्यप आचम्यापरेणाहवनीयं परीत्य[1] यजमानायतने तिष्ठन्नाहवनीयमुपतिष्ठते मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे । तत्त्वं बिभृहि पुनरा मदेतोस्तवाहं नाम बिभराण्यग्न इत्यथ वाचंयमो ऽभिप्रव्रजत्योदीचीमानसकायाः[2] वाचं विसृजते ' यो ऽधःसंवेशमात्राद्वास्त्वुपायी प्रवसति ' न दाक्षिणमतिप्रवसति ' नोपवसथमुपात्येत्यायन्नपरेण समिधः कुरुते ' ऽग्नीन्पराख्याय वाचं यच्छत्याहवनीयमेवोपतिष्ठते मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः । आयुषे त्वं जीवसे वयं यथायथं विपरि-

१ JF om. these three words

२ Thus BB Bh (Grantha Ms.), Keś., ॰मानसकाये Bo F

दधावहै पुनश्च इत्यथ गार्हपत्यमुपतिष्ठते नमो ऽग्नये ऽप्रतिविद्धाय नमो ऽनाधृष्टाय नमः सम्राजे। अषाढो अग्निर्बृहद्वया विश्वजित्सहन्त्यः श्रेष्ठो गन्धर्व इत्यथान्वाहार्यपचनमुपतिष्ठते त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः। सं मामायुषा सं गौपत्येन सुहिते मा धा इत्यथाहवनीयमुपतिष्ठते ॥ १३ ॥

अयमग्निः श्रेष्ठतमो ऽयं भगवत्तमो ऽयꣳ सहस्रसातमः। अस्मा अस्तु सुवीर्यमिति' स[1] यद्यस्मै यज्ञभ्रेषमापद्यते न ते ऽस्रौषीदिति तद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संततीर्[2] जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति' मरायं दक्षिणां ददाति' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथातिपन्नाः प्रतिशुध्योत्येतेन ह स्म वै पूर्वे श्रोत्रिया ऋतावत्तेजस्कामा यशस्कामा ब्रह्मवर्चसकामा उपतिष्ठन्ते[2] तदेतदुत्सन्नं व्रतस्येव गरिम्णां यातो वैराजमेवोपस्थानं' मयं प्रजां मे गोपायेति गार्हपत्यमथर्व[3] पितुं मे गोपायेत्यन्वाहार्यपचनꣳ' शꣳस्य पशून्मे गोपायेत्याहवनीयꣳ'

---

१ om. BH.

२ सततिं H; संततीं B, सततीर् Be; संतमि J, सततोर्थे F; संततं संतमि Ke4.

३ Before नहेमद्- Be J ins स, F सा।

४ After गार्हपत्यम् JF ins. उपतिष्ठते।

अग्नय सम्राडभि गोपायेति सभ्यमहिर्बुध्निय मन्त्रं मे गोपायेत्यावसथीयं यो ऽपरिमितं प्रवसति पुनरायन्प्रपथे समिधः कुरुते ऽग्नीन्परायाय वाचं यच्छत्यागत्यैतेनैवोपतिष्ठते[१] समानी प्रायश्चित्तिः ॥ १४ ॥ षष्ठः ॥

अथोपवसथीये ऽहन्यग्रोपवीत्याप आचम्याप्रेणाहवनीयं परीत्य[२] यजमानायतन उपविश्य शिरः पवित्रमप आचामति पयस्वतीरोषधयः पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र संसृजेत्यथाहवनीये समिधमादधात्यग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहेत्यथ[३] यो भूते हविर्निर्वपमाणमभिमन्त्रयते ऽग्निꣳ होतारमिह तꣳ हुवे देवान्यज्ञियानिह यान्हवामहे। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्येति तदुदित्वा वाचं यच्छत्या हविष्कृतो हविष्कृता वाचं विसृज्य यत्रां योगेन युनज्मि कस्त्वा युनक्ति स त्वा युनक्त्विति काले कपालानि युनक्ति यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतामिति तेषां यद्युपहतानां यद्भिद्यते तदुत्कर उदस्यत्यभितो घर्मो औरदानुयंत आप-

---

1 Thus Bo BH. T [illegible], J [illegible], F [illegible]

2 Bo JF om. these three words

3 अथ om. JF

स्तदगन्पुनरित्यथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं[1] जुहोतीमौ वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसंचरन्ति । त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहेत्यथान्यदपिसृजति घर्मो देवाꣳ अप्येत्वित्यथ वै भवति यदि नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालमिति सा प्रसिद्धेष्टिः संतिष्ठते ऽथ तथैव गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं[1] जुहोतीमौ वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसंचरन्ति । त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहेत्यथान्यदपिसृजति घर्मो देवाꣳ अप्येत्वित्यथ यद्याज्यस्य वा सांनाय्यस्य वान्यस्य वर्हिषः पुरोत्तमात्मया-जात्स्कन्दति तस्य स्वधाꣳ संमरति ॥ १५ ॥

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च । बृहस्पति-प्रसूतो यजमान इह मा रिषदिति स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेत्यथ यावत्परि-शिष्टेन प्रचरत्यथ यजमानमाज्यमवेक्षयत्याज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजाः सहो ऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व

---

१ संतनीं BFHJ ( ॰नि the second time ) ; संतनिं Be ; संतनं T ; संतनीयं F (*the sec. time*).

पृतनाः सहस्व पृतन्यतः सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाभिघारयामि तस्य ते भक्षीयेत्यथाज्यग्रहाण्[1] गृहीतंगृहीतमनुमन्त्रयते पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति चतुर्भिर्जुह्वामथाभिपद्यते[2] चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामीति चतुर्भिर्ध्रुवां[2] भूरस्माकꣳ हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामीत्यभिपूर्णामनुमन्त्रयते[3] कामाय त्वा गृह्णामीति परिधीन्परिधीयमानाननुमन्त्रयते ध्रुवो ऽसि ध्रुवो ऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविदिति मध्यममुग्रो ऽस्युग्रो ऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविदिति दक्षिणमभिभूरस्यभिभूरहꣳ सजातेषु भूयासमभि-

---

१ Thus B, °ग्रहणं TF; ग्रहणं J, ग्रहणं H, Mādh, ग्रहणात् Be; अथ not found in B Be HF.

२ Thus (accusatives) all MSS, except F, which has ध्रुवायां. Mādh cites every time with locatives Rightly ?

३ °पूर्णामनु° Be F

भूयेत्वा वषड्विदित्युत्तरमेवाग्निं योगेन युनज्मि युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेद इति ' समिधोर-भ्याधीयमानयोर्जपतीन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं त इत्यथान्तर्वेदि हवींष्यासन्नान्यभिमन्त्रयते यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो । तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थ इति ॥ १६ ॥

अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादये-द्यज्ञमुखं वा अग्निहोत्रं ब्रह्मैता व्याहृतयो ' यज्ञमुख एव ब्रह्म कुरुते ' संवत्सरे पर्यागत एताभिरेवोपसादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णातीति ब्राह्मणमथ वै भवति दर्शपूर्णमासावा-लभमान एताभिर्व्याहृतीभिर्हवींष्यासादयेद्यज्ञमुखं वै दर्श-पूर्णमासौ ब्रह्मैता व्याहृतयो ' यज्ञमुख एव ब्रह्म कुरुते ' संवत्सरे पर्यागत एताभिरेवासादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णातीति ब्राह्मणमथ वै भवति चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवींष्यासादयेद्यज्ञमुखं वै चातुर्मास्यानि ब्रह्मैता व्याहृतयो ' यज्ञमुख एव ब्रह्म कुरुते ' संवत्सरे पर्यागत एताभिरेवासादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णातीति ब्राह्म-णमथ वै भवति यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रं यज्ञस्या-शीर्गच्छति यदृचा विशं यज्ञस्याशीर्गच्छत्यथ ब्राह्मणो ऽना-शीर्केण यज्ञेन यजते ' सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुर-स्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते ' तथा ब्राह्मणः साशीर्केण यज्ञेन

यजत इति ब्राह्मणमेव वै भवति यं कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याशीर्गच्छेदिति तस्यैता व्याहृतीः पुरोनुवाक्यायां दध्यादाग्नेय्यदेवत्या वै पुरोनुवाक्या । भ्रातृव्यमेवास्य यज्ञस्याशीर्गच्छतीति ब्राह्मणमेव वै भवति यं कामयेत यजमानमसमावत्येनान्यज्ञस्याशीर्गच्छेदिति तस्यैता व्याहृतीः पुरोनुवाक्याया अर्धर्च एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्च एकां । तथैनमसमावती यज्ञस्याशीर्गच्छतीति ब्राह्मणमेव वै भवति यथा वै पर्जन्यः सुवृष्टं वर्षत्येवं यज्ञो यजमानाय वर्षति । स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परिगृह्णातीति ब्राह्मणं । व्याहृतीभिर्ब्राह्मणस्य प्रतिपद्यते हिङ्कारेण राजन्यस्य वैश्यस्य सर्वमेवैतत्त्रयं कुर्यादित्येतदपरमिध्ममभ्याधीयमानमनुमन्त्रयते ॥ १७ ॥

उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्वेति । प्रवरं प्रव्रियमाणमनुमन्त्रयते[1] ऽमर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति । स्रुवेणाघारमाघार्यमाणमनुमन्त्रयते[2] मनो ऽसि प्राजापत्यं मनसा मा भूतेनाविशेति । ध्रुवमाघारमाघार्यमाणमनुमन्त्रयते वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेति । प्रयाजानामिष्टमिष्टमनुमन्त्रयते[3] वसन्तमृतूनां प्रीणामि स मा

---

१ Thus Be, प्रौढमायव॰ BJ, Bhar., प्रष्टमायं F, प्रष्टौपमायं T; प्रौढमायं H.

२ Thus all MSS., स्रौवमाघार॰ Mādh.

३ इष्टं twice Be HT, once the other MSS. and Mādh.

प्रीतः प्रीणातु ग्रीष्म ऋतूनां प्रीणामि स मा प्रीतः प्रीणातु वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु शरदृतूनां प्रीणामि सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतामित्याज्यभागाविष्टावनुमन्त्रयते ऽग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमित्यग्निमिष्टमनुमन्त्रयते ऽग्नेरहं देवयज्ययान्नादो भूयासमित्युपांशुयाजमिष्टमनुमन्त्रयते दब्धिरस्यदब्धो भूयासममुं दभेयमित्यथ यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप[1] उपस्पृश्याग्नीषोमाविष्टावनुमन्त्रयते ऽग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमितीन्द्राग्नी इष्टावनुमन्त्रयत इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमितीन्द्रमिष्टमनुमन्त्रयत इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासमिति' महेन्द्रमिष्टमनुमन्त्रयते महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमिति' स्विष्टकृतमिष्टमनुमन्त्रयते ऽग्नेः स्विष्टकृतो ऽहं देवयज्ययायुष्मान्यज्ञेन प्रतिष्ठां गमेयमिति' प्राशित्रे ऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु सविताघशंसादिति ! यजमानभागे यो मे ऽन्ति दूरे ऽरातीयति तमेतेन जेषमितीडामाह्रियमाणामनुमन्त्रयते सुरूपवर्षवर्ण[2] एहीति[2] प्रतिपद्य मघोनीत्यातो' ऽवान्तरेडां प्राश्यमानामनुमन्त्रयते जुष्टिरसि जुषस्व नो जुष्टा नो ऽसि जुष्टिं ते गमेयमित्यथान्तर्वेद्यभि-

---

१ अथाप उपस्पृश्य om. TJ

२ Thus Bc HT, ॰वर्णेति J, वर्णेमिति B, वर्ण एहीमामिति F.

ग्रंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमिति' पत्नीसंयाजानामिष्टमिष्टमनुमन्त्रयते[1] ॥ १९ ॥

सोमस्याहं देवयज्यया सुरेताः रेतो धिषीय त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्यथैतरावुपसमस्यति देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासमिति' वेदे यजमानं वाचयति वेदोऽसि वित्तिरसि विदेयेत्यान्तादनुवाकस्य[2]' ध्रुवामाप्याय्यमानामनुमन्त्रयत आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्नित्यथ यजमानभागं प्राश्नाति प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेनेति सं यज्ञपतिराशिषेति' संचैतत्पूर्णपात्रं वाचयति' तमन्तर्वेदि निधाय पूर्णपात्रे यजमानं वाचयति सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठा इत्यथ दिशो व्युन्नयति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामित्यथैना निनयति समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत। अच्छिद्रः

---

१ इदं twice Be T, once the other MSS.

२ Thus Be J, Mādh , the citation ends with वित्तिरसि in BH, with विदेय कर्मासि in FT.

प्रजया भूयासं मा परासेचि मत्पय इत्यथोपोत्थाय दक्षिणेन पदा विष्णुक्रमान्क्रामति ॥ २० ॥

विष्णोः क्रमो ऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु विक्रमे निर्भक्तः स यं द्विष्म इति चतुर्भिरनुच्छन्दसं तृतीये चतुर्थमनुवर्तयति न चतुर्थं प्रक्रामति आहवनीयमुपास्येत्यथैव तिष्ठन्नाहवनीयमुपतिष्ठते ऽगन्म स्वः स्वरगन्म संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते मा वृक्षीत्यथादित्यमुपतिष्ठते सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीत्यथैभ्यो लोकेभ्यो भ्रातृव्यं निर्भजतीदमहममुं भ्रातृव्यमाभ्यो दिग्भ्यो ऽस्यै दिवो ऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्म इत्यथाप उपस्पृश्य सं ज्योतिषाभूवमित्युरः प्रत्यात्मानं प्रत्यभिमृशते ऽथ दक्षिणमंसमभि पर्यावर्तत ऐन्द्रीमावृतमन्वावर्त इत्यथोदङ् पर्यावर्तते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोष इत्यथाहवनीये समिधमादधाति समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासꣳ स्वाहेत्यथाहवनीयमुपतिष्ठते वसुमान्यज्ञो वसीयान्भूयासमित्यथाग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते ऽग्न आयूꣳषि पवस ऽग्ने पवस्वेत्यथ गार्हपत्यमेवोपतिष्ठते ऽग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमाशासे तन्तवे ज्योतिष्मतीं तामाशिषमाशासे ऽमुष्मा

अमुष्या[1] इति' यावन्तो ऽस्य पुत्रा जाता भवन्ति तांस्तत्र इत्यन्ततः' ॥ २१ ॥

अथ वै भवति यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति' कस्त्वा युनक्ति स त्वा विमुञ्चत्विति' काले कपालानि विमुञ्चति यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतामित्यथैतेनैव यथेतमेत्य यजमानायतन उपविश्य तथैव[2] तिरः पवित्रमप आचामति पयस्वतीरोषधयः पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र संसृजेत्यथाहवनीये समिधमादधात्यग्ने व्रतपते व्रतमचारिषं तदशकं तन्मे ऽराधि स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मे ऽराधि स्वाहेत्यथोपोत्थाय[3] यज्ञस्य पुनरालम्भं जपति यज्ञो बभूव स आबभूव स प्रजज्ञे स वावृधे। स देवानामधिपतिर्बभूव सो अस्मांऽ अधिपतीन्करोतु वयंऽ स्याम पतयो रयीणामित्यथ प्राङुत्क्रम्य जपति गोमांऽ अग्ने ऽविमांऽ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावांऽ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावानित्यथ ब्राह्मणांऽस्तर्पयितवा इति संप्रेष्यति' ॥ २२ ॥ अष्टमः ॥

---

[1] F अमुष्या once T has this passage thus वत्सरे मघामसुके ज्योतिष्मतीं नामाग्निमाधास्ये सुधा अमुष्या इति etc., as above, but at the end : भवन्ति तावन्त इत्यन्ततो ; J is corrupt towards the end of the khaṇḍa.

[2] Om. TJFBe

[3] उपोत्थाय om JT

ब्रह्मत्वं करिष्यन्यज्ञोपवीत्यप आचम्यापरेणाहवनीयं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन्ब्रह्मसदनमुपतिष्ठते नमो ब्रह्मणे नमो ब्रह्मसदनायेत्यथासनात्तृणं निरस्यत्यपे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इत्युपविश्याभिमन्त्रयत उद्धतस्य गेयमित्यथेमे समीक्षते पातं मा द्यावापृथिवी अद्याह्न इत्युपविश्य जपति भूर्भुवः सुवः क इदं ब्रह्मा भविष्यति स इदं ब्रह्मा भविष्यति प्राणः प्रजापतियुक्तोऽहं युक्ते ब्रह्मणार्वेव वाजी सधुर इव वह्निर्बलीवर्द इव युक्तो हव्यं वक्ष्याम्यहं देवताभ्यो भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्ये ब्रह्म प्रपद्ये सर्वं प्रपद्ये ऽमाममात्मानं प्रपद्ये प्रजापतेर्ब्रह्मकोशं प्रपद्ये ऽमातां देवतां वाचं प्रपद्य ओं प्रपद्य इति । तं यजमानो ब्रह्माणं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे वीतहव्ये पुरोहितं येनायमुत्तमः सुवर्देवा अग्निरगो दिवमिति । वृतो ब्रह्मा जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि ब्रह्माणं मा तया वीतहव्ये पुरोहितं येनायमुत्तमः सुवर्देवा अग्निरगो दिवं देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपायेति । स यदाह ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति तद्ब्रह्मा प्रसौति ॥२३॥

देव सवितः प्रणय यज्ञं देवता वर्धयैतां नाकस्य पृष्ठे सुवर्गे लोके यजमानो अस्तु । सप्तर्षीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्यों प्रणयेति स वाचंयमो भवति प्रणीतासु प्रणीयमानासु हविष्कृतः सांनाय्ये दोह्यमाने वा ततो यदाह वसु दुग्धीन्द्राय देवेभ्यो हव्यमिति महेन्द्रायेति वा यदि महेन्द्रयाजी भवत्यधिवपने वाचं यच्छत्या कपालोपधानादधिवपने वाचं यच्छत्या [1]समभिवासनात्संनयजुष्याह्रियमाणे[2] वा प्रोक्षणीनामासादनात्तं यदाह ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति तद्ब्रह्मा प्रसौति बृहस्पते परिगृहाण वेदिं ब्रह्मणा यज्ञं परिगृहीहीमम् । सप्तर्षीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्यों परिगृहाणेत्याज्येषु गृह्यमाणेषु वाचं यच्छत्या [3]ध्रुवासादनात्सामिधेनीष्वनूच्यमानासु प्रवरादनूक्तायां पुरोनुवाक्यायामा वषट्कारात्प्राशित्रे ऽवदीयमाने वा प्रशनात्परिहरत्यप्ता एतस्माग्निचमपेक्षाहवनीयं तदाह्रियमाणं प्रतिपश्यति ॥ २४ ॥

सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्यथैनदुभाभ्याꣳ हस्ताभ्यां प्रतिगृह्णाति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो

---

१ प्रस्राभिवासनात् Bo T

२ Thus Bo H, °यजुष्याह्रि° F, the other MSS. more or less corrupt.

३ ध्रुवासादनात् Bo H, ध्रुवादानात् B, समासादनात् T; JF totally corrupt. Bh has in some copies ध्रुवा° in others स्रुवा° ।

BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1072.



# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA ŚAUTRA SŪTRAM.

EDITED BY
DR. W. CALAND OF UTRECHT.
FASCICULUS II

CALCUTTA.
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1904.

हस्ताभ्यां प्रतिमृज्ञामीत्यथैनत्सादयति पृथिव्यास्त्वा नाभौ सादयामीत्यथैनदवेक्षते सुपर्णस्य त्वा गरुत्मतश्चक्षुषावेक्ष इत्यथैनदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्णातिहाय इतः पूर्वं जिह्वाग्रे निदधात्यग्नेस्त्वास्येन[1] प्राश्नामीति' प्राश्याप आचम्य यद्भिरवगिरति ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेत्यथापाङ्गिर्मार्जयित्वा प्राणान्संमृशते वाङ्म आसन्नसोः प्राणो ऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजो ऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हिंसीरिति' मयि प्राणा मयि प्राणा इति वोक्तं ब्रह्मभागं प्राशित्रहरणे निदधात्यथान्वाहार्यं याचति' तमन्तर्वेद्यासन्नमभिमन्त्रयते ॥ २५ ॥

ब्रह्मन्ब्रह्मासि नमस्ते ब्रह्मन्ब्रह्मणे पाहि मामङ्गनाथ सर्वो मह्यं ऊतो भवेत्यथास्य यावन्मात्रमवदाय प्राशित्रहरणे निदधाति श्रीरस्येहि मामभ्यनवानमाद्यो भूयासमित्यथैनमपेण तुष उदञ्चं नीयमानमनुमन्त्रयते यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्विति' स यथाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीति संमृज्य प्रसौति देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति' प्रचरतेति प्रवर्ग्यै' यो ऽन्वेवास्त आ समिष्टयजुषो होमाद्धुते समिष्टयजुष्युपोत्थायाह्वनीयमुपतिष्ठते ऽयाड्यज्ञꣳ हविषो जातवेदा यद्यो अन्ततः पूर्वो अग्ना-

१ निधाय instead of निदधाति Bo F, निधायति J

त्विपद्य । यन्मनिष्ट सुविमुचा नो विमुञ्च येनाप्रमाद्य द्रविणं जातवेदो यच भद्रमिति[1] स एतेनैव[1] मन्त्रा भवति दर्शपूर्ण-मासयोरिष्टीनां चातुर्मास्यानां पशुबन्धस्य सौत्रामण्या इति[1] ॥ २६ ॥ नवमः ॥

हवीꣳष्यासाद्य होतारमामन्त्रयते[1] स यज्ञोपवीत्यप आचम्य हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयꣳ श्रैष्ठ्याय वाꣳ सुहनाय वामित्यथ दाभ्यामात्मन्यग्निं[2] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरित्यथान्तरेण वेद्युत्करौ प्रपद्यते सत्यं प्रपद्य ऋतं प्रपद्ये ऽमृतं प्रपद्ये प्रजापतेः प्रियां तनुवमनार्तां प्रपद्य इदमहं पञ्चदशेन वज्रेण द्विषन्तं भ्रातृव्यमवक्रामामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो भूर्भुवः सुवर्विष्णो स्थाने तिष्ठा-मीति[1] दक्षिणेन प्रपदेनोत्तरं वेद्यन्तमवक्रम्य तिष्ठति[1] यदा जानात्यग्नये समिध्यमानायानुब्रूहीति तदेदꣳ[3]हौषं[3] जपति कं प्रपद्ये तं प्रपद्ये यत्ते प्रजापते शरणं छन्दस्तत्प्रपद्ये यावत्ते विष्णो वेद तावत्ते करिष्यामि देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि नमो ऽग्नय उपद्रष्ट्रे नमो वायव उपश्रोत्रे नम आदित्यायानुख्यात्रे जुष्टामद्य[4] देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यः स्वधावतीं पितृभ्यः प्रतिष्ठां विश्वस्मै भूताय भूर्भुवः

१ सत्र om Be JF.

२ आत्मन्न० only B Ba

३ Thus B H, तदेतं TBe, तदेतंतु J, तदेतत्तु F, the last three omitting होषं।

४ Thus J, ०द्ये F, the other MSS. omit अद्य।

स्वः प्रजाम् आत्मना प्रजया पशुभिः प्रजापतिं प्रपद्ये ऽभयं मे अस्तु प्राजापत्यमनुवक्ष्यामि वाचं प्रपद्ये वागार्त्विज्यं करिष्यति[1] यशसे त्वा पुषाय त्वेन्द्रियाय त्वा भूत्यै त्वा यज्ञो यज्ञाय गहि शर्म यच्छतामित्यथैनं त्रिरभिहिङ्कृत्याथवाममभि हिङ्कारादुप-सुपसंस्थाति[2] । स वो वाजा अभिवर इति त्रिः प्रथमामन्वाह । त्रिरुत्तमाम् । सर्वा अर्धर्चशो ऽवानित्यनूक्तासु[3] सामिधेनीषु देवता आवाह्य भूमौ प्रादेशं तत्रोपविशतीदमहं गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण द्विषन्तं भ्रातृव्यमवबाधे ऽवबाढो द्विषन्निति । स आहवनीयं प्रेक्षमाण आस्ते । प्रणीता वोभयं वान्तरेण वा वीयते । ऽनपगच्छन्तो ह्याश्रावयते[4] । यदा जानात्यग्निर्देवो होतेत्य-तथापति देव सवितरेतं त्वा वृणते ऽग्निहोत्राय सह पित्रा वैश्वानरेणेत्यथोपोत्थाय[5] दक्षिणेन हस्तेन दक्षिणे ऽङ्गे ऽध्वर्यु-

1 JBo ins. यम आर्त्विज्यं करिष्यति ।

2 Thus JFT, ॰सिरवद॰ the other MSS.

3 Thus ( अवानिति ) only F, ॰वानित्य॰ Bo, the other MSS. more or less corrupt

4 As I am not sure about the original reading of this passage, I give the var lect. of all my MSS., प्रणीतां वोभयं वांतरेण वा वीयते ऽनपगच्छो ह्याश्रा॰ B; thus also H, but वांतरेणयो and ह्याश्रा, प्रणीतां वोभयं वांतरेणेति वेतिदवीयते ऽनपगच्छोह्याश्रा॰ Bo, प्रणीतां वोभयान्तरेणेति वेतिवावीयते ऽनपगच्छोह्याश्रा॰ T; प्रणीता वोभयं वांतरेण वेति वेति वीयतेनपगच्छन्तोह्याश्रावयते J, प्रणीता वोभयं वांतरेणेति वेति वेयंतेनपगच्छन्तोह्याश्रा॰ F

5 अथ om. B Bo H

न्वारब्धे सव्येन दक्षिणे ऽंस आमीभं[1] यन्तु वै स्वयं प्रत्या-श्रावयेत्सौविदेश एनं दक्षिणस्याᳲ श्रोण्यामन्वारभेताग्निमन्वार-भामहे होतृवूर्यं पुरोहितम्। येनायमुत्तमᳲ स्वर्देवा अङ्गिरसो दिवम्॥ देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा अनुसᳲरभध्वमित्यथाध्वर्यवे नाम प्रभूते ऽथ दक्षिणमᳲसमभि पर्यावर्तत ऐन्द्रीमावृतमन्वावर्त इत्यथ होतृषदनमभिप्रजपति[1] ॥ २७ ॥

पयसोर्वीरᳲहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च ता मा रक्षन्तु ता मा गोपायन्तु ताभ्यो नम इत्यथासनात्तृणं निरस्यति शुष्कं वा प्रतिच्छिन्नाग्रं वा दक्षिणायै च पश्चिमनु प्रतीच्यै च निरस्तः परावसुरित्यथाप उपस्पृश्योपस्थीयोपविशतीदमहमर्वावसोः[2] सदने सीदामीति दक्षिणोत्तरं दक्षिणाद्गार्हपत्यं प्रतीक्षते विश्वकर्मᳲस्तनूपा[3] असि तन्वं मे पाहीत्युभौ समीक्षत आहवनीयं चाभाविष्णू मा वामवक्रमिषमीशो ऽशिष्टं[4] विजिहाथां मा मा संताप्तं । लोकं मे लोककृतौ कृणुतमित्यथ वा लोक इति मनागिवोदङ् सर्पत्यथ तिस्र[5] ऋचो[5] जपति विश्वे देवाः शास्तन मा

---

१ Thus BTH, ॰भिप्रजञ्जपति Be, ॰भिप्रजपति the other MSS.

२ संस्थीयैन instead of उपस्थीयं B Be H

३ Uncertain reading ॰कर्मैयतनूपा B; ॰कर्मंयतनूपा H; ॰कर्मेयतनूपा Be, ॰कर्मैतनूपा TF ॰कर्मंतनूपा J, comp Śānkh Śrs. I 8 11.

४ Thus BTJ, शिष्ट F शिष्टं Be, शिष्टं H

५ Thus Be FT, तिस्रचो J, ॰ततस्रचो H, B om the number.

यथेह होता वृतो मनवै यन्निषद्य। प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि ॥[1] तदद्य वाचः प्रथमं मसीय येनासुराꣳ अभि देवा असाम। ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम् ॥ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः। यजाम देवान्यदि शक्नवाम मा ज्यायसः शꣳसमा वृक्षि देवा इत्यथ स्रुगादापनेन स्रुवावादाय यथादेवतꣳ हविषो यजत्यथ वषट्काराणामनुमन्त्रणो[2] वषट्कार मा मे प्रवृक्षो अहं त्वां[3] बृहता मन उपह्वये मातरिश्वना प्राणान्मे वाचꣳ[4] हव्यं देवेभ्यो-ऽभिवहाम्योजः सहः सह ओजो वागिति' यद्यु[5] वा[5] अभ्यया[5] वषट्काराः[5] स्युरेतावतैवानुमन्त्रयत ओजः सह ओजो वागित्यथ होतुर्दिरङ्गुलावनक्ति' यत्पूर्वाक्[6] तदुत्तरोष्ठे मोहति वाचस्पतये त्वा हुतं प्राश्नामीपे प्राणायेति' सदसस्पतये त्वा हुतं प्राश्ना-

---

1 After वहानि B Be HT have one ṛc more, viz. RV X. 53 2. Is the number ( त्रिंश or चत्वार, P. 100, l. 17 ) an interpolation?

2 अनुमन्त्रणो Be FJ

3 मा/मेप्रवृक्षो अर्वाञ्चं BH ( but मा H ), मामेप्रवृक्षो अर्वाञ्चं Be; मप्रवृक्षोनदर्वाञ्च J, F totally corrupt, comp Āp XXIV 14 12

4 Uncertain reading, comp. Āp. l.c, Aś. BV III. 8, Ath. S V. 10 8 प्राणाम्मेवाचꣳ H Be and B pr. m; B sec. m सभोजसो, प्राणाम्मेवाच J; प्राणान्मवाच F; प्राणाम्मोवाचं T

5 Uncertain reading यद्युवा अप्यया वषट्कारा T, यद्युदार्श्वयावषट्का J; यद्युदात्ययिवषट्कारा F, यद्युवा अभ्यवषट्कारा B Be H

6 Thus BJ, पूर्वाङ्ग H Be, पूर्वेति ( i e पूर्वाङ्ग ? ) F, पूर्वाभि T

मूर्ध्नि ऽपानायेत्यधरोष्ठे ऽपोष्ठर्यथाप उपस्पृश्य चतुरवान्तरेडा-मवदापयते ऽवहतेन पाणिनाममस्तेमेडां मुखसंमितामुपह्वयते[1]

॥ २८ ॥

उपहूतꣳ[1] रथन्तरꣳ सह पृथिव्या सहाग्निना सहाश्वाचेन सह वाचोप मा रथन्तरꣳ सह पृथिव्या सहाग्निना सहाश्वाचेन सह वाचा ह्वयतामुपहूतं वामदेव्यꣳ सहान्तरिक्षेण सह वायुना सह प्राणेन सह पशुभिरुप मा वामदेव्यꣳ सहान्तरिक्षेण सह वायुना सह प्राणेन सह पशुभिर्ह्वयतामुपहूतं बृहत्सह दिवा सहादित्येन सह चक्षुषोप मा बृहत्सह दिवा सहादित्येन सह चक्षुषा ह्वयतामुपहूतꣳ स्थास्नु भुवनमुप मा स्थास्नु भुवनꣳ ह्वयतामुपहूतं चरिष्णु भुवनमुप मा चरिष्णु भुवनं ह्वयतामुपहूताः सप्त होत्रा उप मा सप्त होत्रा ह्वयन्तामुपहूता गावः सहाशिरोप मा गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सहर्षभोप मा धेनुः सहर्षभा ह्वयतामुपहूतेडा हविरुप[2] मामिडा हविर्ह्वयतामुपहूतो भक्षः सखोप मा भक्षः

---

1 Be: ०दापयत एवेन प्रहतेन पाणिनेडामुपह्वयते मुखसंमितमुपहूतम्ꣳ; B. ०दापयत एवेन प्रहतेन पाणिनेडामुपह्वयते मुखसंमितमुपहूतम्ꣳ, J ०दापयत्येवहतेन पाणिना समयेव चामुखसंमितामुपह्वयत उपहूतम्ꣳ, H. ०दापयत एवेन प्रहतेन पाणिनेडामुपह्वयते मुखसंमितामुपहूतम्ꣳ; F: ०दापयते प्रहतेन पाणिना समयेवानडामुखसंमितामुपह्वयते । उपहूतम्ꣳ, T ०दापयते पहतोपाणिना समक्षेम वो मुखसंमितामुपह्वयत उपहूतं ।

2 Instead of हविर् JFT have मधुरिर् comp Sānkh śrs I 11. 1: मधुरि ।

सखा [1]ह्वयतामुपहूताऽ२ं हो इडोपहूता हे साथि जुपस्व मेड इत्युपांश्वङ्कोचैर्निरुक्तामुपह्वयते स यदि सर्वो प्राशित्वस्यात्पाणौ स्तानि प्राश्य चमसादेव प्राश्नीयादथ यदि द्विसेदा[2] निधित्सेत[3] वा पुरोडाशशकलमवच्छिद्यैव प्राश्नीयादिडासि सोमासि सोमकृत्वा नो रायस्पोषे सुप्रजास्त्वे धा सुधन्य त्वा धुन्वाय सुरभ्यामुखाय[4] प्राश्नामीति प्राश्याप आचम्य प्राचीं वोदीचीं वोदकराजिं निनयति तूष्णीमिति स्वेवाप्यस्य[5] वचो[6] ऽथापरेतं जपं जपति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञऽ२ं समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तामित्यनूयाजानिडा संयुवाकमुक्त्वा[7] बर्हिष्यञ्जलिं

---

१ The following passage runs thus in the MSS.: ह्वयतामुपह्वतारो उपह्वतां । धो इडैवाधिजुपस्व उपत्युपांशु० Be; ह्वयतामुपह्वताऽ२ं धो इडोपह्वतोपह्ववेतार्न जुपस्वमेडा इत्युपांशु० B; ह्वयतामुपह्वतऽ२ं धोपह्वताधिताधिजुपस्व-मेडाउपाऽ२ंशु० J; ह्वयतामुपह्वतऽ२ं धोइडोपह्वताधताधिजुपस्व इत्युपाऽ२ंशु० F; ह्वयतामुपह्वतंधोइडोपह्वताविताधिजुपस्व मेडा इत्युपांशु० T; ह्वयतामुपह्वताऽ२ं धो उपह्वताधोइडैवाधिजुपस्व मे १ मे १ इत्युपाऽ२ंशु० H

२ Thus T; द्विषेदा Be J H F; द्विदोषा B

३ निनिद्सेत B, निनित्सेत H, द्विधीत्सेत T; निनिधिचेत Be; निनिधियेत J, निनिधिषत F

४ Corrected acc. to S'ânkh. śra. I. 12 5; H सुरभ्यमुखाय, the other MSS more or less corrupt, some omit the word

५ Thus Be T; ०वाधस्य B, ०वाजस्य HF, ०वाज्य J, Bh. seems to read name of the ṛṣi वाय ।

६ Thus T; वचावचा F, वाचोवा० H B Be; वावावा० J

७ Be om these two words, इडां instead of इडा BHF.

हुत्वा निह्नुते यज्ञ शं च म उप च मे प्रजापते यज्ञ यत्ते न्यूनं यदु तेऽतिरिक्तं कर्म प्रजापतौ[1] यज्ञ तदिदं च दक्षिणार्धे[2] वेद्यै वेदं[3] निधाय[3] यजमानं वाचयति ॥ २९ ॥

येन त्वं देव वेद[4] देवेभ्यो वेदोऽभवस्तेनास्मभ्यं वेद एधि। वेदोऽसि वित्तिरसि विदेयाहं प्रजां पशून्स्वर्गं लोकम्। कर्मासि करुणमसि क्रियासमहं पुण्यं कर्म। सनिरसि सनितासि सनेयमहमदो घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमिति' पत्नीसंयाजानिष्ट्वा फलीकरणोमे हुते वेदे पत्नीं वाचयति वेदोऽसि वित्तिरसि विदेयाहमदः। कर्मासि करुणमसि क्रियासमहमदः सनिरसि सनितासि सनेयमहमदो घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमिति' विस्रस्य वेदमर्धानि पत्न्यै प्रयच्छति' तानि पत्न्यन्तरोरू वा न्यस्यति[5] दक्षिणेन

---

१ Thus BT ( only with यदतिरिक्तं instead of यदुवैतिरिक्तं T ); सजप-यत प्रजापते यज्ञस्ते न्यूनं यदतिरिक्तं कर्मप्रजापतौ Be, सजपयते प्रजापते यज्ञयतो न्यूनं यदतिरिक्तं कर्मप्रजापतौ M ; यजयतजयत प्रजापते यज्ञयते न्यूनं यदतिरिक्तं कर्मप्रजापते J , मजपयप्रजापतेयज्ञं यत्ते न्यून यदरिक्तं कर्मप्रजापते F.

२ Thus BTJ , दक्षिणार्धे F , दक्षिणा H ; दक्षिणार्धे M ( which omits वेद्यै )।

३ Thus BTHF , वेदं om. J Be , वेदं ins. after निधाय TB ; वेदं ins after निधाय Be

४ Thus ( देववेद ) Be H , BJ om. वेद , F om. देव।

५ Conjectural reading पत्न्यन्तरोरुपान्स्यस्य J , पत्न्यन्तरोरुपन्स्यस्य Be ; पत्न्यन्तरोरुपन्स्यस्य H , पत्न्यन्तरोरुप न्यस्यति B, पत्न्यन्तरोरोरुपधायास्ति T , पत्न्योरुपन्यास्य F.

वारुणेनोपनिष्क्रामति' ऽथेतराणि प्राङ्गच्छत स्तृणश्चेति तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्। अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनमित्यथ धान्यसि धिनुहि मानि मर्हिषि संन्यसात्यापूर्णो ऽसि संपृण प्रजया मा पशुभिरापृणेत्यथ यथायतनं निष्क्रम्याग्रेणाहवनीयं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन्नाहवनीयमुपतिष्ठते ऽयाडग्निः हविषो जातवेदा अदब्धो अमृतः पूर्वो अग्निर्विश्व। समन्धनिः सुविमुचा नो विमुच धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम्॥ एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा। उत प्रणेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या॥ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अग्निरिन्द्रो विष्णुर्विश्वे[1] मुञ्चन्तु मरुतः स्वर्का इत्येतयैव जपा दर्शपूर्णमासयोरिष्टीनां चातुर्मास्यानां पशुबन्धस्य सौत्रामण्या इति' ॥ ३० ॥

अथ पशूनुपधीयन्ते' यदाहाग्नये मथ्यमानायानुब्रूहीति तदेते ऋचौ जपति यद्वो वयं प्रमिनाम व्रतानि॥ यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः। अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजातीति' मैत्रावरुणदण्डे ऽध्वर्युर्यजमानं वाचयति ता गावो ऽत्यन्त राज्याय

---

[1] विश्वेदेवा B Be H, but comp Kauś. sū 97 8, Kāty. śrs XXV. I, 11.

स्नाꣳ च्यवन्त मरुतः स्वर्काः । वर्षं वचस्य ककुभि शिश्रियाण-
स्ततो न उग्रो विभजा वसूनीति' तमग्रे गृहीत्वा मैत्रावरुणाय
प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति'
तꣳ स सूनृतः प्रतिगृह्णाति मित्रावरुणयोस्त्वा प्रशास्त्रोः
प्रशिषा प्रतिगृह्णामीति दक्षिणोत्तरेणैनमूर्ध्वमुन्मार्ष्टि वक्रो ऽविधुरो
भूयासमिति' तमादाय संप्रेष्यति होता यक्षदग्निꣳ समिधा
सुषमिधा समिद्धमिति' प्रान्तं पशोः' ॥ ३१ ॥ दशमः ॥

इति तृतीयः प्रश्नः ॥



पशुना यक्ष्यमाणो भवति[1] स उपकल्पयते पौतुद्रवान्परिधीन्गुग्गुलु[1] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकां या पेत्वशान्तरा शृङ्गे द्वे रशने द्विगुणां च त्रिगुणां च द्वे वपाश्रपणी विशाखां चाविशाखां च हृदयशूलं कार्ष्मर्यमयान्परिधीनौदुम्बरं मैत्रावरुणदण्डं मुखेन संमितमिध्माबर्हिरिति प्रणयनीयं प्लक्षशाखामिडसूनं यवान्यवमतीभ्यः सन्नमुहोमाय पृषदाज्याय दधि हिरण्यमित्यथामावास्येन वा हविषेष्ट्वा मवचे वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा षड्ढोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याध्वस्वासीꣳ स्रुवां बर्हिर्हिरण्यमुदपात्रꣳ[1] क्रयन्ति तक्षाणꣳ सपरशुमाह्वेति[2] यजमानेति पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूप स्पष्टो भवति यत्र वा वेत्स्यन्मन्यते[1] स यः समे भूम्यै स्वाद्योने रूढो बहुपर्णो बहुशाखोऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठतेऽत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इत्यथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्त्वित्यूर्ध्वाय बर्हिरनूषक्तयत्योषधे त्रायस्वैनमिति[1] स्वधि-

---

१ Thus Keś, गुग्गुलु B, गुग्गुलु Be H, गुग्गुलु T, गुग्गुलु F.

२ Thus only Be H, the other MSS om आह।

तिरश्चा तिर्यञ्चं प्रहरति स्वधिते मैनꣳ हिꣳसीरिति ' यः प्रथमः शकलः परापतति तं प्रज्ञातं निदधाति ' तमपरिभिन्दन्नप्रच्छिन्नमङ्कं वृश्चति ' प्राञ्चं वोदञ्चं वा प्रपातयन्तमनुमन्त्रयते दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभवेत्यावृश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति वनस्पते शतवल्शो विरोह स्वाहेति ' सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशते ' ऽथयꣳ ग्राम्याः प्रसूदयति यं त्वायꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति ' यथारत्निं यूपं रुचेदि-त्यैव ब्राह्मणवतामवमर्शं परिव्रश्चपरमे[1] प्रादेशावमं चषालस्य कालं परिवासयत्यच्छिन्नो रायः सुवीर इति ' यदपरं भवति तस्य चतुरङ्गुलं चषालाय प्रच्छेदयति ' तं चतुरश्रिं वाष्टाश्रिं वा हत्वा वा रशनया[2] वा दारयत्योप्य निखिनत्यवटयथानामेव खरं कुरुते ' ऽथास्यैषा पूर्वधुरेव पाशुबन्धिकी वेदिर्विमिता भवति दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्ची ' तां परिस्तीर्य स्तम्बयजुर्हरति ' ॥ १ ॥

इदमेव प्रसिद्धं पौरोडाशिकं ' निर्वपति तूष्णीं चतुर्थं ' पूर्वं परिग्राहं परिगृह्णाति ' करणं अपत्युद्धन्युद्धतादाग्नीध्र-स्त्रिर्हरति ' यदाग्नीध्रस्त्रिर्हरत्यथ याचति स्फ्यमुदपात्रं बर्हिः

1 Thus ■ Be T, परिव्रंशमपर॰ B, परिम्बंशपर॰ F.

2 Thus Be H and the Aptoryāma-Sūtra, हत्वा वा रशनया वा दारयत्युप्य T, हत्वा वा रशनया वा दारयत्योप्य B, हत्वा वा रत्या वा दारयेनोप्य F.

शम्यामित्येतस्मादाद्याच्छेहि यजमानेत्युत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धत्यावोक्ष्य शम्यया चात्वालं परिमिमीते। वित्तायनी मे ऽसीति पुरस्तादुदीचीनकुम्बयान्तरेण स्फ्येनालिखति। तिक्तायनी मे ऽसीति दक्षिणतः प्राचीनकुम्बयान्तरेण स्फ्येनालिखत्यवतान्मा नाथितमिति पश्चादुदीचीनकुम्बयान्तरेण स्फ्येनालिखत्यवतान्मा व्यथितमित्युत्तरतः प्राचीनकुम्बयान्तरेण स्फ्येनालिखत्यथ चात्वाले बर्हिर्निधाय तस्मिन्स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो ऽस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति। खलोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति। खलोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति। खलोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। तूष्णीं चतुर्थꣳ हरति अथ बर्हिर्धायाध्वर्युः स्फ्येन चात्वालात्पुरीषमुद्धन्त्यथाग्नीध्रमाहाग्नीदितस्त्रिर्हरेति। ततस्त्रिराग्नीध्रो हरति। यदाग्नीध्रस्त्रिर्हरत्यथाध्वर्युरुत्तरवेद्यै पुरीषꣳ संप्रयौति सिꣳहीरसि महिषीरसीति। प्रथयत्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति। स्फ्येन सꣳहन्ति ध्रुवासीत्यथैनामद्भिरवोक्षति देवेभ्यः शुन्धस्वेति। देवेभ्यः शुम्भस्वेति सिकताभिरनुप्रकिरति। तां प्रादेशमात्रीं

चतुरश्रां[1] निधाय शम्यया परिमिमीत। उत्तरनाभिमुख्यामाधायैनां प्रतिष्ठायाभिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति। तया यूपावटं परिलिखति यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धं परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदिमं यूपावटं खनोपरसंमितं प्राक्पुरीषमुद्वपतात्चतुरङ्गुलेनोपरमतिखनतादिति। तꣳ स खनति वा खानयति वा। यावदेवाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाताभ्यादधातीध्मं प्रणयनीयमुपोपयमनीः कल्पयन्ति[2] चात्वालादातामैन्द्रघोषवतीः प्रोक्षणीरध्वर्युरादत्ते। परिकर्मिणे पञ्चगृहीतमाज्यं प्रयच्छति। अग्नावपि संभारा भवन्त्यथ संप्रेष्यत्याहाग्नये प्रणीयमानायानुब्रूह्याग्नीदेकस्फ्ययानुसंधेहीति। पितृकायामुपचरन्ते। होतुर्वशं यन्त्युत्तरेण वेदिं प्रतिपद्यन्ते। धारयन्त्येतमग्निमथाध्वर्युरिन्द्रघोषवतीभिः प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति। ॥ २ ॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति पुरस्तान्मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः। प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति पश्चाद्विश्वकर्मा त्वादित्यैरुत्तरतः पात्वित्युत्तरतो। ऽथ यत्प्रोक्षणीनामुच्छिष्यते तद्दक्षिणत उत्तरवेद्यै निनयति। यदेव

---

१ Thus B T, चतुरश्रां the other MSS.

२ Thus B Be T F, कल्पयति H

तत्र क्रूरं तत्तेन शमयतीति ब्राह्मणमथैनाꣳ हिरण्यमन्तर्धायाज्यस्थाल्या पञ्चगृहीतेन व्याघारयति । सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणेऽꣳसे । सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्याꣳ श्रोण्याꣳ । सिꣳहीरसि रायस्पोषवनिः स्वाहेति दक्षिणस्याꣳ श्रोण्याꣳ । सिꣳहीरस्यादित्यवनिः स्वाहेत्युत्तरेऽꣳसे । सिꣳहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्ये । ऽथ भूतेभ्यस्त्वेति स्रुचमुद्गृह्याथ पौतुद्रवान्परिधीन्परिदधाति । विश्वायुरसि पृथिवीं दृꣳहेति मध्यमं । ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणमच्युतक्षिदसि दिवं दृꣳहेत्युत्तरमथातिष्ठन्संभारान्निवपति गुल्गुलु¹ सुगन्धितेजनꣳ शुक्लामूर्णास्तुकामग्नेर्भस्मास्यग्नेः पुरीषमसीत्यथैनाꣳ स्रुवेणाभिघारयत्यथ² प्रदक्षिणमावृत्येमं प्रतिष्ठापयति यज्ञ प्रतितिष्ठ सुमतौ सुशेवा त्वा वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन्नधामृतेन जरितारमङ्ग्धीत्यथैनं विश्वस्याक्षतिषाहं कृत्वाध्वराहुतिभिरभिजुहोत्यग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रभूतायज्ञं प्र प्र यज्ञपतिं तिर स्वाहा ॥ वायुर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रभूतायज्ञं प्र प्र यज्ञपतिं तिर स्वाहा ॥ सूर्यो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रभूतायज्ञं प्र प्र यज्ञपतिं तिर स्वाहा ॥ यज्ञो यज्ञं

---

१ Thus F, गुग्गुलु B Be H, गुल्गुलु T (Grantha!)

२ ॰भिजुहोत्यथ Be F.

मयेतु प्रजानन्मेनं यज्ञहनो विदन् । देवेभ्यः संभृतार्घश्च प्र यज्ञपतिं तिर स्वाहेत्यथैतां यजमान एव स्वयं जुहोत्यग्निरन्नादो ऽन्नपतिरन्नाद्ये स मे ऽन्नं ददातु स्वाहा । वायुः प्राणदाः प्राणस्येशे स मे प्राणं ददातु स्वाहा । आदित्यो भूरिदा भूयिष्ठानां पशूनामीशे स मे भूयिष्ठान्पशून्ददातु स्वाहेत्यग्निवत्सुतरं परियाह परिविष्टस्य योयुपिला तिर्यञ्चं स्फ्यं कृत्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं स्वधितिं स्रुचश्च[1] संमृड्ढि तूष्णीं पृषदाज्यधान्यौ पत्नीं संनह्याज्येन च दध्ना चोदेहीत्याहृतासु प्रोक्षणीषूद्धृत्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङुद्धृत्य स्रुवं स्वधितिं[2] स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यधान्यौ । पत्नीं संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रविद्धमाज्यानि गृहीत्वा पृषदाज्यधान्यामुपस्तृणीते महीनां पयोऽसीति । विश्वेषां देवानां तनूरिति द्वितीयं । बर्हिषी अन्तर्धाय दध्यानयत्यथास्य पृषतीनां ग्रहं पृषतीनां ग्रहो ऽसीत्यपोद्धृत्य बर्हिषी अथाभिघारयति विष्णोर्हृदयमसीत्येकमिष विष्णुस्त्वानुविचक्रम इति द्वितीयम् ॥ ३ ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति । वेदिं प्रोक्षति बर्हिः प्रोक्षति । बर्हिरासन्नं प्रत्यगुपनिनीय पुरस्तात्प्रस्तरं

---

1 Thus B Be T, स्रुवेण instead of स्रुवं H; स्रुवं च स्वधितिं च F and Srautapad p 161.

2 स्रुवं च स्वधितिं च F

स्तृणाति । पञ्चविधं बर्हिः स्तीर्त्वा[1] प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति । विधृती तिरश्ची सादयति । विधृत्योः प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतराः । एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः प्रोक्षणीर्बर्हिःप्रस्तरमाज्यमाज्यस्थालीꣳ स्रुवाꣳ स्वरुमञ्जनं मैत्रावरुणदण्डं यूपशकलं हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रक्रामयति यत्ते शिक्वः परावधीत्तक्षा हस्तेन वास्या । आपस्ते तद्गमयते ऽपनुदन्तु[2] शुन्ध्यन्तीरिति । यूप एष प्रक्षालितः प्रयतः संपन्नशाखः प्रागवटादुपमीते । समुत्तरेणाहवनीयं तिष्ठन्पराञ्चं प्रोक्षति पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेत्यवटे ऽपो ऽवनयति शुन्धतां लोकः पितृषदन इति । यवानवस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति । बर्हिर्दंसं व्यतिषज्यावस्तृणाति पितृणाꣳ सदनमसीत्यथैनद्धिरण्यमन्तर्धाय[3] स्रुवाज्येनाभिजुहोति पितृभ्यः स्वाहेति । यूपशकलमवास्यति स्वावेशो ऽस्यग्रेगा नेतॄणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्तादित्यथ पादत आज्यस्थालीꣳ स्रुवाꣳ स्वरुमञ्जनं मैत्रावरुणदण्डमुदपात्रमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूचौ पल्ययेन यूपं परीत्य दक्षिणत उदङ्मु-

---

१ अथ ins. H Be (see m.)

२ Thus B, [illegible] the other MSS

३ Thus (कृणु) all, see Bh.

खास्तिष्ठन्ति पूर्वः स्रुवाध्वर्युरपरो यजमानोऽपरा पत्न्यथ मदन्त्या चषालं यूपस्याग्रमनक्ति देवस्त्वा सविता मध्वानक्त्वित्यन्तरतश्च षालतश्च । स्वभ्यक्तं कृत्वा चषालं प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यथ स्रुवेणाग्निष्ठामश्रिमभिघारयन्नाह यूपायाज्यमानायानुब्रूहीत्यान्तमनक्त्यन्तमेव यजमानं तेजसानक्ति । नोपरमनक्ति । पन्युपरमनक्ति । सर्वतः परिमृशत्यपरिवर्गमेवास्मिन्तेजो दधातीति ब्राह्मणमुच्छ्रयन्नाहोच्छ्रीयमाणायानुब्रूहीत्युच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳहेत्यथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति ते ते धामानि विष्णोः कर्माणि पश्यतेति द्वाभ्याꣳ । स यथाग्निष्ठामग्निमाहवनीयेन संपादयति तद्वत्स्य चषालं परेक्षयति तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमित्यथैनं प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति । मैत्रावरुणदण्डेन संहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यथैनमनतिरिक्तं परिव्ययत्यौदपाचमुपनिनीयाथैतां त्रिगुणाꣳ रशनां त्रिः संभुज्य मध्यमेन गुणेन नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति । त्रिः प्रदक्षिणं परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या इत्युपान्ते व्यतिषजत्यौन्तं प्रवेष्टयत्यभिमनति स्वधितिमवधत्यथोत्तरेणाग्निष्ठामग्निं मध्यमे गुणे स्वरुमवगूहत्यन्तरिक्षस्य त्वा सानाववगूहामीति । स्वरुवन्तं यूपमुत्सृजति । ॥ ४ ॥ प्रथमः ॥

स्तात्तं विश्वदेवꣳ सत्यमापो देवीः स्वदन्तैनमित्युपरिष्टात्प्रोक्ष्याधस्तादुपोक्षति । सर्वत एवैनं मेध्यं करोतीति ब्राह्मणमुद्धृत्य प्रोक्षणीधानम् ॥ ५ ॥

अथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं । परि समिधꣳ शिनष्टि । वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे स्रुग्भ्यामुत्तरेणाग्निꣳ स्थायं स्रुचावुदङत्याक्रम्य जुह्वा ध्रुवाꣳ समनक्ति । सं ते प्राणो वायुना गच्छतामिति ललाटे । सं यजत्रैरङ्गानीति ककुदि । सं यज्ञपतिराशिषेति दक्षिणस्याꣳ श्रोण्यामेव यथायतनꣳ स्रुचौ सादयित्वा प्रवरं प्रवृणीते । अग्निꣳ होतारं वृणीते । इत्याश्रावयत्यो श्रावयास्तु श्रौषडिति मैत्रावरुणौ प्रशास्तारौ प्रशास्तादित्यसौ[1] मानुष इति मैत्रावरुणस्य नाम गृहीत्वाश्रावयति । यजमानायाश्रावयत्यो[2] श्रावयास्तु श्रौषडग्निर्दैवीनां विशां पुरएतायं यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳ हिमा द्वा यू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति । सीदति होता । प्रवरमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधः प्रेष्येति । वषट्कृते जुहोति प्रेष्य प्रेष्येति । चतुर्थाष्टमयोः समानयमानोऽष्टमे सर्वꣳ समानयते । परि स्वाहाकृतीभ्यः षꣳस्रावꣳ शिनष्टि । दश प्रयाजानिष्ट्वो-

१ Thus all MSS and Keś. except Be, which has प्रशास्तादि॰ ।

२ Thus B; the words ॰श्रावयति यजमाना om. TF; H Be om. ॰यति, but comp. Bh

दक्षिणत्याक्रम्य स्वरुं च शासं च याचति । तौ जुह्वामङ्क्त्वा[१] ताभ्यां पशुꣳ समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति । प्रयच्छति शासमध्वर्यवे गृह्णाति स्वरुमेव यथायतनꣳ स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीत्यथैष आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरेण शामित्रदेशमयेण पशुं जघनेन स्रुच इत्येवं त्रिः प्रदक्षिणं पर्येत्यथानुपरिसरणमपाव्यानि जुहोति प्रजानन्तः प्रतिगृह्णन्ति पूर्वे येषामीशे पशुपतिः पशूनां ये बध्यमानमनु बध्यमाना य आरण्याः पशवो विश्वरूपाः प्रमुञ्चमाना भुवनस्य रेत इति । निधायाग्नीध्र उल्मुकं यथेतं त्रिः पुनः प्रतिपर्येत्यथोल्मुकमपयमाः[२] प्रतिपद्यन्ते । ऽस्वक्कृतमिता[३] पशुना । पशुमध्वर्युर्वपाश्रपणीभ्यामन्वारभते । वपाश्रपणी यजमानो । ऽथाश्राव्य संप्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इत्यथैतं[४] पशुमन्तरेण चात्वालोत्करावुदञ्चं नीयमानमनुमन्त्रयते नाना प्राणो यजमानस्य पशुना रेवतीर्यज्ञपतिं प्रियधाविशतेति द्वाभ्याꣳ । स[५] यत्रैतदाग्नीध्र उल्मुकं निदधाति तदग्रेण चोत्तरेण वा पशवे निहन्यमानाय बर्हिरुपास्यति पृथिव्याः संस्पृशः पाहीति । तदेतं पशुं प्रतीचीनशिरसमुदीचीनपादं निपत्त्यावहत्य माायुः संज्ञपयतेत्युक्त्वैनमेव यथेतमेत्य पृषदाज्यावकाश आसत इह

---

१ Thus all ( F चमका )।

२ FR om प्रति॰ ।

३ Thus Be ; स्वकृपिता R, स्वकृमिता the other MSS.

४ Thus T Be, यथैवं the other MSS.

५ om BF.

प्रजा विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माँ अवन्तु पयसा घृतेनेति । संज्ञप्तं प्राङ्जुहोति संज्ञप्ताहुतिं यत्पशुर्मायुमकृतेत्यथाभ्येति[१] शमितार उपेतनेति । पाशात्पशुं प्रमुच्यमानमनुमन्त्रयते ऽदितिः पाश[२] प्रमुमोक्त्वेतमित्यथ विपाशयोपसंन्येमां दिशं निरस्यत्यरातीयन्तमधरं करोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमित्यथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्यापेनामादित्यमुदीक्षयति नमस्त आतानेत्यथैनामन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य[३] प्राचीमुदानयन्वाचयत्यनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्यागतामध्वर्युरपो वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाँ ऊढ्वं शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति । आनुपूर्व्यं[४] पशोः प्राणानाप्याययति । वाक्त आप्यायतामिति वाचं । प्राणस्त आप्यायतामिति प्राणं । चक्षुस्त आप्यायतामिति चक्षुः । श्रोत्रं त आप्यायतामिति श्रोत्रमेतानेव पुनः संमृशति या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्त एतेन शुन्धतामिति । नाभिस्त आप्यायतामिति नाभिं । पायुस्त आप्यायतामिति पायुं । संमृश्य पदः प्रक्षालयति शुद्धा-

---

१ Thus TH Be, ˚भ्येति BF

२ T gives the first two pādas of this stanza (TS. III. 1, 4. 1), perhaps rightly.

३ Thus B Keś, ˚निष्क्रमय्य Be TH ˚निष्क्रम्ये F.

४ ˚पूर्वं THF Ke.

यन्ते ऽथ संप्रैषमाहाग्नीदुत्तरबर्हिरुपसादय प्रतिप्रस्थातः पशौ संवदस्वेत्यथैव आग्नीध्रः प्लक्षशाखायामिडसूनमुपगूहति । तदुत्तरबर्हिर्निर्वर्त्य प्रतिप्रस्थाता पृषदाज्यं विहृत्य शृताꣳ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य पृच्छति शृतꣳ हवीः३[1] शमितरिति । शमितैव उत्तरतो हृदयशूलं धारयꣳस्तिष्ठति । स शृतमिति प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याहाथ शमितुर्हृदयशूलमादाय तेन हृदयमुपवृह्य तꣳ शमित्रे संप्रदाय पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहेति । विशूः कृत्वा हरतेत्युक्त्वैतेनैव यथेतमेत्य पात्र्यामुपस्तृणीते जुहूपभृतोरिडाधाने वसाहवन्यां वसाहोमं यदीव्यन्भवत्याहरन्ति तं पशुमन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं चापातिहृत्य तं[2] दक्षिणतः पशुश्रपणमासादयत्येतेनैव यूपाहरण्येतेनैवेडसूनमथ प्लक्षशाखायाꣳ हृदयं निधाय स्वधितिना तस्यापि ऽवद्यमाह ॥ ८ ॥

मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति । हृदयस्यैवाग्रे द्विरवद्यत्यथ जिह्वाया अथ वक्षसो ऽथ मतिस्नो ऽथ वृक्कयोरथ सव्यस्य दोष्णो ऽथ दक्षिणस्य पार्श्वस्याथ सव्यस्याथ दक्षिणायै श्रोणेरथ गुदे । त्रैधं गुदं कृत्वाणिमत्स्विष्टकृते निदधाति

1 With plati sign only Be.

2 H om , Be sec m del.

स्वधितिमदुपयड्भ्यो मध्यं[1] द्वैधं कृत्वा गुदकाण्डमवद्यत्यथ हृदयमेदो यूपन्नवधाय तेन जुहूं प्रोर्णोति। यूष्णोपसिञ्चत्यभिघारयत्यथोपभृति स्विष्टकृते सर्वेषां त्र्यङ्गाणाꣳ सकृत्सकृत्समवद्यति। सकृद्दक्षिणस्य दोष्णः पिशितं मध्ये तथावद्धाति सकृत्सव्यायै श्रोणेरणिमद्गुदत्र्यथ हृदयमेदो यूपन्नवधाय तेनोपभृतं प्रोर्णोति। यूष्णोपसिञ्चति[2]। द्विरभिघारयत्यथ हृदयं जिह्वां वक्षस्तनिम मतस्नौ[3] वनिष्ठुमितीडापात्र्याꣳ[4] समवधाय यूष्णोपसिञ्चत्यभिघारयत्यथ[5] कुम्भ्ये वा चमसे वा वसाहोमं गृह्णाति। यूष्णोपसिञ्चत्यभिघारयत्यथ पशोरवदानानि संमृशत्यैन्द्रः प्राणो अङ्गेअङ्गे निदेध्यदैन्द्रोऽपानो अङ्गेअङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ। देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्यथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति क्षुम्बतः श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्या इति। संमृष्टस्य पशोः प्रतीचीं जाघनीꣳ हरन्ति। प्रतिपरिहरन्ति पशुमथ जुहूपभृतावादाय आहेन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीत्यथाश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येति। प्रतिप्रस्थातैव उत्तरतो

---

१ Thus Be H T Keś, मध्यमं BF.

२ अथ ins. Be FH

३ Thus Be H F Keś. (see m), मतस्नू BT.

४ BH Bo, इति पात्र्याꣳ, F इडिपात्र्योꣳ, T totally corrupt

५ अथ after ॰सिञ्चति ins. Be F.

वसाहोमं धारयंस्तिष्ठति । अथो ऽर्धर्चे याज्यायै वसाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहेति । वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा । दिग्भ्यो नमो दिग्भ्यः स्वाहेत्यथ प्रदक्षिणमावृत्य पृषदाज्यात् स्रुवेणोपहत्याह वनस्पतये ऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ समावपमान आहाग्नये स्विष्टकृते ऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा होत्र इडामुपोह्याग्नीध्रे षडवत्तं । उपहूतायामिडायामग्नीध आदधाति षडवत्तमर्धं वनिष्टुमथार्धं वनिष्टुं । मेदस्त्वामाग्नीध्र मार्जयस्वे । ऽथाह ब्रह्मणे वसः परिहरेति । तद्ब्रह्मा प्रतिगृह्णाति ॥ ८ ॥

समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्येति । वषट्कृते जुहोति प्रेष्य प्रेष्येत्येवमेवोपयष्टोपयजति गुदस्य मध्येदꣳ समुद्रं गच्छ स्वाहेत्येतैरेकादशभिरग्निं वैश्वानर गच्छ स्वाहेति सर्वमन्ततोऽनुप्रहरत्यथ बर्हिषि हस्तौ निमार्ष्ट्यद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छेत्यथास्य धूममन्वीक्षते तनूं त्वचं पुत्रं नप्तारमशीयेत्येकादशानूयाजानिष्ट्वोद्धृत्याक्रम्य जुह्वाꣳ स्रुवमवधाय पुरस्तात्प्रत्यङ् तिष्ठञ्जुहोति दिवं ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहेत्यथ यथायतनꣳ स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति । संयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[1] विसृज्य आघन्या पत्नीः संयाजयत्याज्यस्यैव सोमं च त्वष्टारं च यजत्युत्तमायै आघन्यै देवानां पत्नीर्यजति । नीच्याः[2] अग्निं[2] गृहपतिमुत्तमायै आघन्यै होत इडामवद्यति । नीच्याः[2] अग्नीधे[2] षडवत्तं । प्राश्नीतो । मार्जयेते । अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं कृत्वा[3] न पत्नीकरणहोमेन चरत्यथ प्राङेत्य ध्रुवामाप्याय्य त्रीणि समिष्टयजूꣳषि[4] जुहोति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति । स्रुवेणैव द्वितीयमेष ते यज्ञो यज्ञपते सहसूक्तवाकः सवीरः स्वाहेति । स्रुचा

---

१ स्रुचौ Be H.

२ Thus only Be, the other MSS have नीचाग्निं and नीचाग्नीधे।

३ जुहोति Be.

४ Thus [illegible]।

ततीयं देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं नो देव देवेषु यज्ञं स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युद्द्रवति जुहूमथ याचति स्फ्यमुदपात्रं हृदयशूल- मित्येतत्समादायावेहीति यजमानेत्यध्वर्युर्यजमानो ऽनूचौ पत्न्यन्त- रेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्यापेण यूपं स्फ्येनोद्धत्यावोक्ष्य शुष्कस्य चार्द्रस्य च सन्धौ हृदयशूलमुद्वासयति ॥ १० ॥

शुगसि तमभिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्चेत्यथा- प्रतीचमायन्ति वरुणस्यान्तर्हित्यै[1] प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्येतयाहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषं रसेन समसृक्ष्महि । पयस्वां अग्न आगमं तं मा सं सृज वर्चसेत्यथैष्वभिज्ञे[1] ऽग्नौ बर्हिरुपोषति यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्- दग्ने अनृणो भवामीत्यथाञ्जलिनोपस्तीर्णाभिघारितान्सक्तूनादाय जुहोति विश्वलोप विश्वदावस्य त्वासञ्जुहोमि स्वाहेति । हस्तौ प्रध्वंसयते ऽघादेको ऽङ्गतादेकः समनादेकस्ते नः कृण्वन्तु भेषजं सदः सहो वरेण्यमिति[1] द्वितीयं जुहोति यान्यपा- मित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि । इहैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एनत्स्वाहेति[1]

---

१ Corrected acc. to Bh.; [illegible]

हस्तौ प्रध्वꣳसयते ऽघादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति ' तृतीयं जुहोत्यनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके अनृणाः स्याम। ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आक्षीयेम स्वाहेति ' हस्तौ प्रध्वꣳसयते ऽघादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमित्यथ देवता उपतिष्ठते ' ऽयं नो नभसा पुर इत्यग्निꣳ ' स त्वं नो नभसस्पत इति वायुं ' देव सꣳस्फानेत्यादित्यमथ यूपमुपतिष्ठत आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम्। बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेत्यथ पूर्वाग्निꣳ शकले समारोपयत्ययं ते योनिर्ऋत्विय इति ' तं मध्यमे ऽग्नावपिसृजत्यानुक्रान उद्बुध्यस्वाग्न इति द्वाभ्यामथ मध्यममग्निमुपसमाधाय मध्यमे ऽग्नौ पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति ' पूर्णाहुतौ वरं ददाति ' धेनुवरं[2] वानडुद्वरं[3] वा दद्यादिति ह स्माह बौधायनः ' संतिष्ठते पशुबन्धः संतिष्ठते पशुबन्धः ॥ ११ ॥ तृतीयः ॥

॥ इति चतुर्थः प्रश्नः ॥

---

१ अथ om B.

२ Thus BF, धेनू॰ H Be, धेनुं T.

३ Thus BTF, वानडुद्वरं B, वानडुहद्वरं Be, comp VII 4 a f.

वैश्वदेवहविर्भिर्यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां' नक्षत्रयोग इत्येक आक्षरोदगयन आपूर्यमाणपक्षस्य पुण्याहे प्रयुञ्जीतेति' स उपकल्पयते वेणोः शलाकां लोहितायसं च क्षुरं चतुष्टयानि पुरोडाशकपालानि यावन्तस्स्थालीस्तावन्ति मेक्षणानि दधं पयः पृषदाज्याय च[1] दधि हविरातञ्चनाय च वेधा बर्हिः संनद्धं तदेकधा पुनः संनह्य[2] प्रसूमयं प्रस्तरमित्यथोपवसथीये [3]ऽहन्निहविषमारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुं' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथास्यैतद्धविर्भ्यो देवेभ्यो वत्सा अपाकृता भवन्ति' वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य व्रतेन तूष्णीं वाथ 'प्रातरुदिते ऽग्निहोत्रे हुत्वा प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याः स्तीर्त्वापः प्रणीयाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति' हविष्कृता वाचं विसृजते' समानं कर्माधिवपनादध्युष्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपदधात्यथोत्तरतस्त्रिः पवित्रमप आनीय सौम्याय चरवे ऽधिश्रयत्यथोत्तरतः सावित्राय द्वादशकपाला-

१ T F om.

२ J recommences with संप्रसूमयं।

३ हनि Be J F H

न्युपधायोत्तरतस्तिरः पवित्रमप आनीय सारस्वतपौष्णाभ्यामधिश्रयत्यथोत्तरतो मारुताय सप्त कपालान्युपधायोत्तरतस्तिरः पवित्रं पय[1] आनीयामिक्षाया अधिश्रयत्यथोत्तरतो द्यावापृथिव्यमेककपालमुपधायाभीन्धते कपालान्युपेन्धते चरुस्थाल्योः। फलानि पृष्टानि संपुष्य संयुत्याथाधिषवण्यामाग्नेयमष्टाकपालं। तिरः पवित्रꣳ सौम्ये[2] चरव्यामावपत्यथाधिषवण्यां सावित्रं द्वादशकपालं। तिरः पवित्रꣳ सारस्वतपौष्णयोश्चरव्यामावपत्यथाधिषवण्यां मारुतꣳ सप्तकपालं। तिरः पवित्रं तप्ते पयसि दध्यानयति। सामिक्षा भवति। तां च एव कंस[3] कुम्भ्यः परीत्येन अपयित्वा विवाजिनां हलामतापे निदधात्यथाधिषवण्यां द्यावापृथिव्यमेककपालमिति। सर्वं पुरोडाशानां ग्राहयित्वा अपयित्वाभिवास्य प्राग्दीत्यायेभ्यो निनीय समयजुर्हरति। ॥ १ ॥

इदमेव प्रसिद्धं पौरोडाशिकं। निर्यजुषा तूष्णीं चतुर्थं पूर्वं परिग्राहं परिगृह्णाति। करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा निर्यस्यꣳ स्फ्यꣳ सम्भ्य संप्रेष्यति प्रोक्षणीरासादयेध्मावर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यपदर्णी पत्नीꣳ संनह्याज्येन च[4] दध्ना चोदेहीत्याहृतासु प्रोक्षणीषूदस्य स्फ्यं

1. Thus Be Keś, पवित्रमप the other MSS
2. Thus J F Keś, सौम्ये B Be H सौम्येचरव्याम् T
3. कथम Be, कथित् F.
4. B H om.

मार्जयित्वैषायर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवन्त्याज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति वेदिं प्रोक्षति बर्हिः प्रोक्षति बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तामसूनयं प्रस्तरं गृह्णाति चिविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृत्य काष्ठमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति विधृती तिरश्ची सादयति विधृत्योः प्रस्तुमयं प्रस्तरं प्रस्तरे जुहूं बर्हिषीतराः एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्वꣳ स्रुवौꣳस्युदासयत्युपस्तीर्णाभिघारितान्पुरोडाशानभिघार्य वरुणमसिद्धमा मारुतादेव कुम्भे वा चमसे वामिक्षां वृहृत्य वाजिनमाग्नीध्रायाभिघारयत्यथैककपालमुद्रास्य सकामीयाविःपृष्ठं करोत्यथैतानि सपरिस्थान्यन्तर्वेदिसादयति भूर्भुवः सुवरित्येताभिर्व्याहृतीभिर्हुत्करे वा विभ्ये वा वाजिनमेव निर्मन्थ्यमाहृता निर्मन्थ्येन चरति[1] प्रहत्याभिक्रम्य ॥ २ ॥

अथैनाग्निमिधमादद्रान आघारार्थे समिधमानायामुद्दीप्येष्मादधातीध्मं परि समिधꣳ शिनष्टि वेदेनोपवाजयत्यनूच्यमानासु सामिधेनीषु स्रुवेणाघारमाघारयति संसृष्टे स्रुग्भ्यामुत्तरमंसायऽस्यायस्रुचावुदङ्त्याक्रम्य जुह्वा ध्रुवाꣳ समज्य

१ °पूर्वं Be H F.

१ प्रचरति Be B, in the following khanda II has consequently प्रचं।

सादयित्वा स्रुचौ प्रवरं प्रवृणीते । प्रसिद्धꣳ होतारं वृणीते । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति । वषट्कृते जुहोति यज यजेति चतुर्थाष्टमयोः समानयमानो । ऽष्टमे सर्वꣳ समानयते । नव प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावेणानुपूर्वꣳ[1] हवीꣳष्यभिघार्यत्याग्नये सोमायेत्याज्यभागाभ्यां चरत्यथानुपूर्वꣳ[1] हविर्भिश्चरति । प्रसिद्धमा मारुता।द्विश्वेभ्यो देवेभ्यो ऽनुब्रूहि विश्वान्देवान्यजेत्यामिक्षया चरत्युपाꣳश्वेककपालेन चरति द्यावापृथिवीभ्यामनुब्रूहि द्यावापृथिवी यजेत्यथ स्विष्टकृता चरत्यथैतानि मेषणान्याहवनीये ऽनुप्रहरत्यथैनानि सꣳस्रावेणाभिजुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यति । ॥ ३ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । ऽथाह ब्रह्मणे प्राशित्रं परिहरेति । परि प्राशित्रꣳ हरन्त्यथापो ऽनु वेदेन ब्रह्मभागमथान्वाहार्यं याचति । तस्मिन्प्रथमजं वत्सं ददात्युपावसन्त्येतद्धविरुच्छिष्टमासादयन्ति धाजिनमथ संप्रैषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथाध्वर्युः पृषदाज्यं विहृत्य[2] जुह्वाꣳ समानीयात्याक्रम्याश्राव्याह देवान्यजेति । वषट्कृते जुहोति यज यजेति नवानूयाजानिष्ट्वोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ साद-

---

१ Thus Keś., °पूर्वꣳ the MSS

२ Thus T Be H F Keś.; विहत्य B.

यित्वा वाजवतीभ्याᳩ स्रुचौ जुहोति । शंयुना प्रस्तरपरिधि संप्रकीर्य संस्राव्य स्रुचौ विमुच्याथ कल्मषं वा श्यामं वानाज्य-स्विन्नं याचति । तमन्तर्वेदि निधाय तस्मिन्बर्हिषि विषिस्व-म्याजिनमानयथाह वाजिभ्यो ऽनुब्रूहीत्यथाश्राव्याह वाजिनो यजेति । वषट्कृते जुहोति वाजिभ्यः स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षᳩ स यावन्त ऋत्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रथमं भक्षयति यन्मे रेतः प्रसिच्यते यन्म आजायते यद्वा जायते पुनः । यदा मे प्रतितिष्ठति तेन मा वाजिनं कुरु तेन मा रेतस्विनं कुरु तेन मा प्रियमाविश तस्य ते वाजिपीतस्य वाजिभिः पीतस्येति वा मधुमत उपहूतस्योप-हूतो भक्षयामीति । निर्णिज्य पात्रं प्रयच्छत्यथाध्वर्युः प्रद-क्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि याज्ञसन्धिकानि[1] समिष्टयजूंषि जुहोति यज्ञ यज्ञं गच्छैव ते यज्ञो यज्ञपते देवा गातुविद इत्यथ पूर्णपात्र-विमुक्तैश्चरित्वा विसृजते व्रतमेव पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य वेष्या प्रवस्था लोहितायसस्य च क्षुरेण शीर्षणि च वर्तयते परि च वपत एतस्यैव परमेष्ठ्युतं मात्येति किं चन । एते समुद्र आसिन एते भूमिरियᳩ श्रिता ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा ॥ एतेनाह्न निवर्तये

---

१ Thus H B Be T J, याज्ञकानि F

मत्येम परिवर्तये। सुपथाश्चानुवर्तये त्रिवेमाश्चोपवर्तये ग्रम्मेमांश्याभिवर्तये ॥ ग्रीष्मंप्रद्गृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादैशान्ये ऽप दक्षिणतो ऽप पश्चादपोत्तरतो ऽप्योपरिष्टात्संतिष्ठन्ते वैश्वदेवहवींऽषि' संवत्सरीणाऽ स्वस्तिमाशास्त इत्याशास्ते' ॥ ४ ॥ प्रथमः ॥

अथातश्चतुर्षु मासेषु वरुणप्रघासहविर्भिर्यक्ष्यमाणो भवति' स उपकल्पयते मेषीऽ प्रतलौ लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि पञ्च चतुष्पालीस्तावन्ति मेषणानि द्वयं पयः पृषदाज्याय च[1] दधि चाविरातञ्चनाय च[1] शमीपर्णकरीरसक्तूनैषीकऽ शूर्पं सनागुप्तसामां यवानामवाखनपिष्टानां मतिपूरुषं[2] करम्भपात्राण्येकातिरिक्तानि भवन्ति' तेषामेव मेषीं च मेषं च कुर्वन्ति' श्मश्रुवान्मेषो भवत्यश्मश्रुका मेषी' तौ शुक्लाभिरूर्णाभिः संपृक्तौ भवतः' द्वावध्वर्यू' द्वयानि पञ्चपात्राणि' द्वयमिध्माबर्हिर्द्वे वेदी' तयोः पाशुबन्धिकीवोत्तरा दार्शपौर्णमासिकीव दक्षिणा' ते पश्चात्समे पुरस्ताद्विषमे पृथमात्राद्वेदी असंभिन्ने भवतः' ऽप्यात्रैतदवर्थया वत्सा अपाकृता भवन्ति मरुद्भ्यो वरुणायेति' द्वयं पयो दोहयित्वोपवसति सांनाय्यस्य वाहता तूष्णीं वाय प्रातर्हुते ऽग्निहोत्रे पृष्ठ्याऽ स्तीर्त्वापः प्रणीय निर्वपत्याग्नेयमष्टाकपाल-

---

1 Thus (च...च) Bo H T (दधि च the last), the first च om JF, the last B.

2 Thus (with म) BTH, comp TBr I. 6 4 5, with प्र the other MSS.

मिति पञ्च संचराण्यैन्द्राग्नमेकादशकपालं[1] मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालमिति । हविष्कृता वाचं विसृजते । समानं कर्मा पर्यग्निकरणादथैतानि करम्भपात्राण्यभिपर्यग्निकुर्वन्ति मेषीं च मेषं च शमीपर्णकरीरसक्तूनेषीकाः शूर्पमिति । अथ पुरोडाशानां धारयित्वा श्रपयित्वाभिवास्य प्राहेत्याप्येभ्यो निनीय स्नावयजुषी हरतो । ऽध्वर्युरेवोत्तरस्यां वेद्यां हरति प्रतिप्रस्थाता दक्षिणस्यां । तयोर्हरतोरध्वर्युः पूर्व एति पुनरायतोः प्रतिप्रस्थाता पूर्व एतीदमेव प्रसिद्धं पौरोडाशिकं । चिवंजुषा तूष्णीं चतुर्थं । पूर्वौ परिधी परिगृह्णीतो । ऽध्वर्युरेव करणं जपत्युत । सद्भूताभ्यामाग्नीध्रप्रविहरति[2] । यदाग्नीध्रप्रविहरत्यध्वर्युरेव चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरस्यामभिमुखायामग्नेरावृता हावग्नी[3] प्रणयतो । ऽध्वर्युरेवोत्तरस्यां वेद्यामग्निं निधायाध्वराहुतिभिरभिजुहोति । प्रतिप्रस्थाता दक्षिणस्यामग्निं निधायाभिजुहोति तूष्णीमग्निव्युत्तरौ परिधी परिदध्य योयुपित्वा तिर्यञ्चौ स्फ्यौ कृत्वाध्वर्युरेव संप्रैषमाह प्रोक्षणीरासादयतमिध्माबर्हिषी उपसादयतः स्रुवौ च स्रुचश्च संमृष्टं तूष्णीं प्रपदाज्यग्रहणीं पत्नीः संनह्याज्याभ्यां च दध्ना चोदेतमिन्द्राग्नेतास्तु प्रोक्षणीपूर्वस्य स्फ्यौ मार्जयित्वेध्माबर्हिषी उपसाद्य

1 Thus, with च, Be JHF, Bh, Keś; संचराणि H T.

2 Thus Be J, उद्धत्योद्धताभ्याम॰ T; उद्धत om. B H, सद्भूतहता:द॰ F.

3 Thus J H, हाग्नि Be, T om. ग्नी; B om. हाव ।

प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवौ च स्रुचश्च संमृष्टस्तूष्णीं[१] पृषदाज्यग्रहणीं पत्नीं संनह्याज्याभ्यां च दध्ना चोदेत आज्ये च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवन्त्येवाज्यान्यध्वर्युरुत्तरस्यां वेद्यां गृह्णीते दार्शपौर्णमासिकानि प्रतिप्रस्थाता दक्षिणस्याम् ॥ ५ ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठतः[२] इध्मौ प्रोक्षतो वेदी प्रोक्षतो बर्हिषी प्रोक्षतो बर्हिषी आसन्ने प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरौ गृह्णीतः पञ्चविधमेवाध्वर्युरुत्तरस्यां वेद्यां बर्हिः स्तृणाति त्रिविधं प्रतिप्रस्थाता दक्षिणस्यामथ प्रस्तरपाणी प्राञ्चावभिसृप्य कार्ष्मर्यमयान्परिधीन्परिधत्त ऊर्ध्वाः समिध आधत्तो विधृती तिरश्चीः[३] सादयतो विधृतीषु प्रस्तरौ प्रस्तरयोर्जुह्वौ बर्हिषोरितरा[४] एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतो [५]दक्षिणत एवाध्वर्युरुत्तरतः प्रतिप्रस्थातानुपूर्वं[६] हवींष्युद्वासयत आग्नेयप्रभृतीन्येवाध्वर्युरुद्वासयति प्रसिद्धमैन्द्राग्नमारुतौ प्रतिप्रस्थाता कंसे वा चमसे

---

१ Thus J only ; the other MSS mostly -ष्टं ।

२ उपोत्तिष्ठत F.

३ Corrected. विधृतीस्तिरश्चः T, विधृत्यास्तिरश्चः B ; विधृत्यस्तिरश्चः Be ; विधृत्यस्तिरश्चः H , विधृत्यास्तिरश्चः F , विधृत्यस्तिर- J

४ Thus B Be F T ; इतरे H J

५ The following words दक्षिणत . . प्रतिप्रस्थाता are found only in B, but comp. Srautapadārtha page 118

६ आनुपूर्व्यं H Be ; आनुपूर्वं J , अनुपूर्वं F , -नुपूर्वं B.

नीयात्याक्रम्याश्राव्याह देवान्यजेति । वषट्कृते जुहोति यज यजेति नवानूयाजानिष्ट्वोद्गात्राक्रम्य यथायतनꣳ स्रुचः[1] सादयित्वा वाजवतीभ्याꣳ स्रुचौ[1] व्यूहतः । अंशुना प्रस्तरपरिधि संप्रकीर्य संस्राव्य स्रुचौ[2] विसृज्य । तथैव कृष्णौ वा समसौ वासाज्यम्लिष्टौ यावतः । समानौ वाजिनयोर्याध्वर्युरेव प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोत्येकं प्रतिपद्यात दार्शपौर्णमासिकं द्वितीयं । अथ पूर्णपात्रविष्णुक्रमैश्चरित्वा न विसृजते व्रतमेव यावत्याज्यस्थालीꣳ सस्रुवाꣳ स्रुचं बर्हिः प्रतिवसनीये वाससी वारुणे निष्कासं तुषानित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यन्तरेण[3] चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यथापरत्रदग्नि । प्रसिद्धो ऽवभृथः । साम चैव नाह देवीराप एष वो गर्भ इति यथाप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै । प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्याहवनीये[4] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यंच

---

१ Thus Be H, the dual both times in TFJ; B has the first time the plural, the second time the dual

२ Thus B Be HJ, स्रुचो TF

३ Thus passage आहैहि .. अनूची पत्नी found thus only in B Be TH; J. has only आहैहि यजमानेति; F omits the words altogether.

४ Thus HF, ०स्येमाहवनीये BJ

विसृजते ऽत्रैव पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य श्येन्या शलल्या लोहितायसेन च क्षुरेण शीर्षणि च वर्तयते परि च वपते यद्धर्मः पर्यवर्तयदन्तान्पृथिव्या दिवः । अग्निरीशान ओजसा वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये । तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीर्षं तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संनिहन्ति वरुणप्रघासवदोꣳषि ' परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशास्ते ' ॥ ९ ॥ द्वितीयः ॥

अथातश्चातुर्मास्येषु साकमेधैरविभिर्यक्ष्यमाणो भवति ' स उपकल्पयते श्येनीꣳ शललीं लोहितायसं च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रश्चतस्रस्थालीस्तावन्ति मेक्षणानि पृषदाज्याय दर्भान् पौर्णमास्या उपवसथे ऽग्नये ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता ' सा प्रसिद्धेष्टिः संतिष्ठते ' ऽथ मध्यंदिने मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति ' सा प्रसिद्धेष्टिः संतिष्ठते ' ऽथास्यैतदहर्मरुद्भ्यो गृहमेधिभ्यो वत्सा अपाकृता भवन्त्यथ सायꣳ हुते ऽग्निहोत्रे सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंप्रच्छिन्नोद्धरति ' सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयान्तर्वेद्यासादयत्यथाग्नये सोमायेत्याज्यभागाभ्यां

चरत्यथोपस्तीर्य पूर्वार्धाच्चरोरवद्यन्नाह मरुद्भ्यो गृहमेधिभ्यो ऽनुब्रूहीति । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । प्रत्य-त्याक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति । वषट्कृते जुहोत्यथ स्विष्टकृता चरन्तीडान्तो गृहमेधीयः संतिष्ठते । पूर्णदर्व्याय[1] ग्रामकार्यं परिशिनष्टि । प्रतिवेशꣳ स्त्रीकुमारेभ्यः पचन्त्याचिता भवन्त्यञ्जते । ऽभ्यञ्जते । उत वत्सान्वासयन्ति । सवात्योरेवैताꣳ रात्रिं वत्सं वध्नन्त्यथाध्वर्युरपरराच आहुत्य नित्यवत्साये पयसाग्निहोत्रं जुहोत्यथैतां दर्वीं निर्णिज्योपस्तीर्य तस्यामेतꣳ सर्वेण एव ग्रामकार्यमवद्धाति । द्विरभिघारयत्यथ पुरोऽनुवाक्यामन्वाह पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो इति । यजति देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारमिन्नि मे हरा निहारं निहरामि ते स्वाहेत्यृषभ[2] एहीत्यृषभस्य रवथे[3] जुहु-याद्दध्यपो हिंकारे[4] इत्येतदपरं । गार्हपत्ये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ प्रख्याꣳ स्थौलायः प्रणीय मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यता । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ तदानीमेव प्रख्याꣳ स्थौलापः प्रणीय

---

१ पौर्णदर्व्यार्थे Be.

२ स्वाहा om TF

३ Thus H; रवथे F; रवते BT; रवे Be J; Comp Journ. Germ Or. Soc. LII, p 429.

४ Thus B Be F, मध्वपोभिर्हिंकार H; मध्वपोपाहिंकार J; माद्ध्वपोपाध-हिंकर T.

निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालमिति । त्वं पुरोडाशानां यावयित्वा श्रपयित्वाभिवास्य प्राङेत्याग्नेभ्यो निनीय सामयजुर्हरणीदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिधानं परिमृजाति । करणं जपत्युद्धन्युद्धतादाग्नीध्रस्थिर्हरति । यदाग्नीध्रस्थिर्हरत्यथ चात्वालदेशात्स्था चात्वालं परिषिञ्चत्युत्तरवेदेरास्तनोत्तरवेदिं निवपत्युत्तरनाभिमुखायामेरास्तारिं प्रणयत्यग्निवत्युत्तरं परिधानं परिदृश्य योयुपित्वा तिर्यञ्चꣳ स्तम्बꣳ सब्धा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यधान्यौ पत्नीꣳ संनह्याज्येन च दध्ना चोदेहीत्यासन्नासु प्रोक्षणीषूदस्य स्फ्यं मार्गयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य स्रुवं च स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यधान्यौ । पत्नीꣳ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं । यथा वैश्वदेवस्यैवꣳ संतिष्ठतेऽन्यत्र वाजिनाद्यत्र पूर्णपात्रविष्णुक्रमैश्चरित्वा न विसृजते व्रतम् । ॥ १० ॥ तृतीयः ॥

महापितृयज्ञं करिष्यन्नुपकल्पयते व्रीहीꣳश्च यवाꣳश्च षट्कपालान्यभिज्ञान्यार्थे दुग्धमर्धपात्रं द्वे नवे पात्रे इषुशलाकां[1] सौम्यपर्णेवाभ्ययमूलं बर्हिर्वर्णीयाꣳसमिधमिध्मात्परिश्रयणं कशिपूपबर्हणे चाञ्जनाभ्यञ्जने दर्भाꣳ स्तम्बमुदकुम्भौ यज्ञायुधानीत्यथ

१ Corrected, ०शलाका B, the other MSS. ०शलाङ्कुष or ०शलाकाः ।

गार्हपत्यं परिस्तृणाति' तमुत्तरेणैकैकशः संसादयति कृशि-पूपपर्वणे आज्यमाज्यस्थाने दृषदं स्रुवमुदकुम्भौ यज्ञायुधानीत्यथ यज्ञोपवीतं कृत्वोत्तरेण[1] गार्हपत्यमुपविश्य पवित्रवत्यामग्निहोत्र-हवण्या निर्वपति' देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सोमाय पितृमते जुष्टं निर्वपामीति चतुरो मुष्टीन्सोमीयाणां निर्वपत्येतासामेव प्रतिपदं कृत्वा पितृभ्यो बर्हिषद्भ्यो जुष्टं निर्वपामीति चतुरो यवानामेतासामेव प्रतिपदं कृत्वा पितृभ्यो ऽग्निष्वात्तेभ्यो जुष्टं निर्वपामीति चतुर एव यवानां' तेषां नीवारैरेव हविष्कृतमुद्वादयत्युपोषन्ते यवान्हविष्कृता वाचं विसृजते' समानं कर्माधिवपनाद्दक्षिणार्धे गार्हपत्यस्य षट्कपालानुपदधात्येतान्यवानुलूखले परिप्लुत्य गार्हपत्य एक-कपालमधिश्रित्य भर्जयन्ति[2]' यत्कृष्णा धानाः कृत्वा तेषामर्धा धाना अवशमयत्येतरान्सक्तून्कुर्वन्ति' एतानि पिष्टानि समुप्य संयुत्याधिष्णक्ति[3] पुरोडाशं षट्कपालमथोत्तरतो भस्ममिश्रा-नङ्गारान्निरूह्य तेषु मन्थं पात्रमधिश्रित्य तिरः पवित्रमाज्यमा-नीय तिरः पवित्रं धाना आवपत्येतदभिशाय्यै दुग्धमर्धपात्रं धावति' तस्मिंस्तिरः पवित्रं सक्तूनोप्य वेणुशलाकयोप-मन्थति' दक्षिणोपमन्थत्यनारभ्योपमन्थतीति ब्राह्मणमथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रयति' त्वचं पुरोडाशस्य

---

१ अपरेण instead of उत्तरेण T

२ om Be JF

३ Before अधिवपति H Be JF have अथ ।

पाशयित्वाभिन्नाप्यानैताप्येभ्यो[1] निनयति ' दक्षिणत एष सम स्थण्डिलः कृतो भवति ' तदेनां चतुरस्रां[2] वेदिमालिखत्येव न खनति ' तस्यै मध्यतो ऽन्वाहार्यपचनमुपसमाधाय सम्यक्- र्वरति ' ॥ ११ ॥

इदमेव प्रसिद्धं पौरोडाशिकं ' त्रिर्यजुषा तूष्णीं चतुर्थं ' पूर्वं परिग्राहं परिगृह्णाति ' करणं जपत्युद्धतादुद्धतादाग्नीध्रस्ति-र्हरति ' यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य प्रोक्षणीः निधाय स्फ्यं कृत्वा सम्प्रेष्यमाह प्रोक्षणीरासादयेध्माबर्हिरुप-सादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्यासाद्य प्रोक्षणीषू-द्धृत्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य स्रुवं च स्रुचश्च संमार्ष्ट्याज्येनोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं पञ्चगृहीतानि वा चतुर्गृहीतानि चाज्यानि गृहीत्वा प्रोक्षणी-भिरुपोक्षितहवींषि प्रोक्षति ' वेदिं प्रोक्षति ' बर्हिः प्रोक्षति ' बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्समूलं प्रस्तरं गृह्णाति तूष्णीमेव प्राचीनावीतं कृत्वा त्रिरप्रसव्यैः परिस्तृणन्पर्येति ' संतरामिवाग्रे ' ऽथ वितरामेव वितरामेव यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपर्येत्याथ[3] प्रस्तरपाणिर्द्वौ परिधी परि-दधाति मध्यमं चैव दक्षिणं चोर्ध्वे समिधावादधाति ' विधृती तिरश्ची सादयति ' विधृत्योः समूलं प्रस्तरं न्यस्यति तूष्णीं '

---

१ *After* पाशयित्वा Bo TJH have नयित्वा ।

२ Thus T, -स्रां the other MSS

३ प्रति om. BF.

प्रस्तरे जुहूं बर्हिषीतरे एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्वं[1] हवींष्युदासयत्युपस्तीर्णाभिघारितं पुरोडाशमभिघार्य[2] धानाः करम्भमिति तेषामेकैकमनूचीनान्युदाहरन्ति दक्षिणतः पुरोडाशमासादयत्युत्तरतो धाना उत्तरतः करम्भं दक्षिणत एतत्परिश्रयणं कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशां स्तुकामिति निदधात्युत्तरत उदकुम्भी दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतो ऽध्वर्युश्चाग्नीध्रश्च ॥ १२ ॥

अथेध्मात्समिधमाददान आवायये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं सकृद्वा त्रिर्वा परि समिधं मिनष्टि वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति संमृष्टे जुह्वामुत्तरमाघारं स्रुग्भ्यां संस्पृश्योदङ्ङत्याक्रम्य[3] जुह्वा ध्रुवां समज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते[4] ऽत्याश्रावयत्यो श्रावयास्तु श्रौषडग्निर्देवो होता देवान्पितॄन्यक्षदग्नीदेर्षितावाणप्रवरः सीदति होता प्रथममाकाङ्क्षति प्रसूतः स्रुवावाद्यायत्याक्रम्याश्राव्याह समिधो यजेति वषट्कृते जुहोति यज यजेत्यपबर्हिषश्चतुरः प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य संस्रावे-

१ ॰पूर्वं all

२ After पुरोडाशम् Bo HF ins उद्वासयति।

३ Thus Bo HF, ॰ष्य उद॰ J, ॰ष्युपादुद॰ T, ॰ष्या उद॰ B.

४ BH ins अग्निं होतारं हवीमहे but comp TB I 6.9 1.

पानुपूर्वꣳ[1] हवीꣳष्यभिघार्याथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राचीनावीतानि कुर्वते । विपरिक्रामन्त्येत ऋत्विजो । विपरिहरन्ति हवीꣳष्युत्तरतः पुरोडाशमासादयति । दक्षिणतः करम्भमाग्नेय[2] एव धाना भवन्त्युत्तरत उपविशतो ब्रह्मा च यजमानश्च दक्षिणतो ऽध्वर्युश्चाग्नीध्रश्चाथैनमपरिश्रयन्ति । तस्योदीचीं द्वारं कुर्वन्ति । स यो ब्रह्मवाꣳस्तमाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन्परीहीति । स तथा करोति । निधाय कुम्भं पर्येतं त्रिः पुनः प्रतिपर्येत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्याव-द्यन्नाह ॥ १२ ॥

सोमाय पितृमते ऽनु स्वधेति । पूर्वार्धात्पुरोडाशस्यावद्यति । पूर्वार्धाद्धानानां । पूर्वार्धात्करम्भस्याभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यो[3] स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । सोमं पितृमन्तꣳ स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा[4] । स्वधा नम इति वषट्करोति । वषट्कृते

---

१ ॰पूर्वꣳ all

२ Thus FJ (?); चाग्नेया HBT , यथा Be.

३ Here and in the corresponding passages some of the MSS. have चत्याश्रावयति instead of चति॰ and चा instead of चो।

४ Thus here and in the four corresponding passages BT ; JF Be have every time ये स्वधामह इत्यागूर्भवति instead of ये स्वधेत्यागूर्य स्वधामह इति वा; H has this passage four times thus - ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोति ये स्वधेत्यागूर्य स्वधामह इति वा।

जुहोत्यथोपस्तीर्य मध्याद्धानानामवद्यन्नाह पितृभ्यो बर्हिषद्भ्यो ऽनु स्वधेति । मध्याद्धानानामवद्यति । मध्यात्करम्भस्य । मध्यात्पुरोडाशस्याभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामन्नों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄन् बर्हिषदः स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्यापरार्धात्करम्भस्यावद्यन्नाह पितृभ्यो ऽग्निष्वात्तेभ्यो ऽनु स्वधेत्यपरार्धात्करम्भस्यावद्यत्यपरार्धात्पुरोडाशस्यापरार्धाद्धानानामभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामन्नों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄनग्निष्वात्तान्स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्य दक्षिणार्धात्पुरोडाशस्यावद्यन्नाहाग्नये कव्यवाहनाय स्विष्टकृते ऽनु स्वधेति । दक्षिणार्धात्पुरोडाशस्यावद्यति । दक्षिणार्धाद्धानानां । दक्षिणार्धात्करम्भस्य । द्विरभिघारयति । न प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामन्नों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयत्यग्निं कव्यवाहनꣳ स्विष्टकृतꣳ स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते दक्षिणार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणꣳ शलाकामित्यग्नावनुप्रहरत्यथैने बर्हिषावेक्षणमभिजुहोत्यथ दक्षिणतो ऽत्याक्राम्य यथायतनꣳ स्रुचौ सादयित्वा यज्ञोपवीतानि कुर्वते । विपरिक्रामन्त्येत ऋत्विजो । विपरिहरन्ति हवींषि । दक्षिणतः

पुरोडाशमासाद्यत्युत्तरतः करम्भपात्र[1] एव धाना भवन्ति[2]। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतो ऽध्वर्युराग्नीध्राय प्राशित्रमवदायेडामवद्यति । ॥ १४ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं । निर्वप[3] भक्षयित्वा बर्हिषि संन्यस्यन्त्यथ प्राचीनावीतानि[4] कृत्वा पुरोडाशं धानाः करम्भमिति पात्र्याᳲ संनयन्ति । तिसृषु स्रक्तिषु[5] पर्णमेषेषु चौन्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्विति दक्षिणस्याᳲ श्रोण्यामेतत्ते पितामहासौ ये च त्वामन्विति दक्षिणे ऽंसे । एतत्ते प्रपितामहासौ ये च त्वामन्वित्युत्तरे ऽंसे । उत्तरस्याᳲ श्रोण्यां लेपं निमार्ष्ट्या युष्माकमियमस्माकमिमा वयं जीवा जीवन्तो ऽनुसंचरन्तो भूयास्मेत्यथ पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य[6] यज्ञोपवीतानि कृत्वाहवनीयमुपतिष्ठन्ते सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि । प्र नूनं पूर्णवन्धुर स्तुतो यासि वशाᳲ अनु । योजा न्विन्द्र ते हरीमित्या समितोपतिष्ठन्ते । ऽथ गार्हपत्यमुपतिष्ठन्ते ऽक्षन-

---

१ Thus only F; मथा Be; चरथा the other MSS.

२ DT ins. उत्तरत उदङ्मुखो।

३ Thus (comp. Āpastamba's चर्वोष) T Bh Keś, the other MSS also Prayoga I.O निर्वेष।

४ Here and in the following passages the MSS. have sometimes the singular instead of the plural यज्ञोपवीत, प्राचीनावीत।

५ स्रक्तीषु Bo H

६ Bo JF ins च।

मीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी इत्यथ तमितोऽपतिष्ठन्ते ' ऽथ प्राचीनावीतानि कृत्वाहार्यपचनमभिप्रपद्यन्ते ऽत्र पितरो ऽमीमदन्त पितरो ऽतीतृपन्त पितरो ऽमीमृजन्त पितरः । परेत पितरः सोम्या इत्यथ तमितोऽपतिष्ठन्ते ' स यो बलवाङ्स्यात्तमाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन् परीहीति ' स तथा करोति ' निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्यत्याहरणमीत्येव[1] अभिपूपवर्हणे आञ्जनाभ्यञ्जने ददात्यथ वासांसि ददात्यथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते ' ऽथ वीरं याचते ' ऽथैनानुत्थाय प्रत्यङ्ख तिसृभिर्मनस आह्वयते मनो न्वाह्वामहे आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथैतान्पिण्डान्सह पर्णशवैरग्नावनुप्रहरति ' अथ विच्छिन्दन्ति परिश्रयणमथ यज्ञोपवीतानि कुर्वते ' ऽथ[2] संप्रैषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथ जुहूपभृता-वादायात्याक्रम्याश्राव्याह देवौ यजेति[3] ' वषट्कृते जुहोति ' यज[4] यजेत्युपबर्हिषौ द्वावनुयाजाविद्धोद्धृत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति ' अंशुना प्रस्तरपरिधि संप्रकीर्य समस्य स्रुचौ विमुच्यापैव समिष्टयजुर्हो-

---

[1] Thus B Be HF. Ke4 ; °ाहरत्यप्रीत्येव T; J corrupt.

[2] Thus Be JF , °नीमं समाप the other MSS.

[3] यजयजेति Be H.

[4] om. Be F.

त्यथैतेषाꣳ शस्त्राणां द्वेद्वे उदाहरन्त्यथ यज्ञोपवीतानि कृत्वा प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठन्ते प्रजापते न त्वदेतान्यन्य इत्यथैतां द्वितीयां जपति यदन्तरिक्षं पृथिवीमुत द्यामिति' संतिष्ठते महापितृयज्ञः' ॥ १५ ॥ चतुर्थः ॥

यावदेवाध्वर्युः स्वेष्टेति तावदेव प्रतिप्रस्थाता प्रतिपूरुषं त्रैयम्बकानेककपालानेकातिरिक्तान्गार्हपत्ये श्रपयित्वाभिघारितानुद्वास्य शते वा शरावे वा जरत्कोशबिले वा मनुष्योपान्ते' ऽथ याचति नीललोहिते सूत्रे अन्तमं[1] पर्यन्तमागारादेकोल्मुकमुद्यामित्यथैतत्समादाय गार्हपत्यमुपतिष्ठन्ते यावन्तो गृह्याः स्युस्तेभ्यः कामकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छेत्यथोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य नित्यसंपन्नचतुष्पथ स्पष्टो भवति' यद्यु वै न भवत्यनसा वा रथेन वा वियान्ति' तदेतदेकोल्मुकमुपसमाधाय[2] संपरिस्तीर्यान्तमे पर्णे सर्वेषां त्रैयम्बकानाꣳ सकृत्सकृत्समवदाय जुहोत्येक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथासति सुगं मेषाय मेष्या अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम्। यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्स्वाहेत्यथैतदन्तमं पर्णं यं द्वेष्टि तस्य

---

१ Here and infra the MSS have sometimes चरिम॰।

२ स्मम् only FJ, the other MSS om

संचरे पशूनां न्यस्यति । यदु वै न देवावटे[1] न्यस्यत्यथैतेषां त्रैयम्बकाणामेकैकं व्युत्प्रयच्छति द्वौ यजमानायाथैतमग्निं त्रिः प्रदक्षिणं परियन्ति[2] दक्षिणानूरूनुपाघ्नानास्त्र्यम्बकं[3] यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादिति । मध्यपरीत्योत्तरतस्तिष्ठन्त्युत्खिदन्ति[4] । भगाय त्वेति क्षिपन्त । एवमेव द्वितीयं परियन्त्येवं तृतीयमथैषा पतिकामा[5] त्रिरपसलैः पर्येति सव्यमूरुमुपाघ्नाना[6] त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति । मध्यपरीत्योत्तरतस्तिष्ठन्त्युत्खिदति । भगाय त्वेति क्षिपत । एवमेव द्वितीयं पर्येत्येवं तृतीयमथैनान्यजमानस्याञ्जलावावपति ॥ १६ ॥

प्रजया मा संसृजामि मा घरेण सरामिवेति । तान्यजमानः प्रत्यवजत्यावपति प्रजया मा पशुभिः संसृजामि मा घरेण सरामिवेति । तान्यस्यै दुहित्रे भगकामायै प्रयेन

---

१ Thus Bh.; वाग्वटे T; वावटे B; the other MSS. वावटे, comp. X. 48.

२ Thus only Be, the other MSS. write पर्येति।

३ Thus BH; उपघ्नाना॰ J Be, उपघ्नानो F; उपनिघ्नानस्व् T; उपघ्नाना Keś.

४ Thus BH; उत्खिदंति (as TBr. I. 6. 10. 5) the other MSS., but comp. Dvaidhasūtra: त्रैयम्बकानुत्खिदन्ति।

५ Instead of अथैषा पतिकामा BF have अथ दुहिता भगकामा।

६ Thus BH, उपघ्नाना Be JF Keś

क्षा मङ्क्ष्यामि भ्रमरेण सुरामिवेत्यथैनान्मूत ओप नील-लोहिताभ्याꣳ सूत्राभ्यां विग्रथ्य शुष्के वा स्थाणौ विशाखायां वा अवसायेष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतो ऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासा इत्यभिमन्त्र्य उपतिष्ठन्ते उद्यामो ऽग्नितिधिन्व परास्य पापमयं समाया आयन्ति समादाद्यमेतेनैव अयेनेत्यादित्यं अर्कं पुनरेत्य निर्वप-णीयं वा अद्भिरवैवैव प्रतिष्ठन्तीति ब्राह्मणं। सा प्रसि-द्धेष्टिः संतिष्ठते। अथ विसृजते अनमंय पौर्णमासवैमृधाभ्यामिष्ट्वा अग्नामाताथतन उपविश्य येषा प्रजया लोहितायसस्य क्षुरेण श्मश्रूणि च वपते परि च वपते य इमां महीं पृथिवी-मृतुभिः पर्यवर्तयथो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः। अग्नेरीशान ओजसा वरुणो धीतिभिः सह॥ इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये॥ तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभि-वर्तये॥ औदुम्बरे कृतं तत्त्वं तद्धुतं तत्कृतेयं तेन यकेयं तेन साध्यामसिति पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते शाकमेधहवीꣳष्यौदावकरीणाꣳ स्वस्ति-मागमस इत्याधास्ते॥ १७॥ पञ्चमः॥

अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो[2] भवति

[1] Thus Bo HP, Dvaidha, Bh., Keś., विशाखायां BT.

[2] Some MSS. read here and *infra* शुनासीर्ये॰।

स उपकल्पयते श्येनीꣳ शलली लोहितायसस्य च क्षुरं पञ्चत-यानि पुरोडाशकपालानि पञ्च चरुस्थालीस्तावन्ति मेक्षणानि पृषदाज्याय दधीत्यथास्यैताꣳ[1] रात्रिं वायवे वत्सा अपाकृता भवन्ति। प्रातर्वायव्यं पयो दोहयति[2] सांनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुते ऽग्निहोत्रे प्रचर्याग्नीꣳ स्तीर्त्वापः प्रणीय निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालमिति। सर्वं पुरोडाशानां पाकयित्वा अपवित्राभिघार्य प्राङ्केत्याप्येभ्यो निर्णीय समयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं। चिर्यशुपा तूष्णीं चतुर्थं। पूर्वं परिग्राहं परिगृह्णाति। करणं जपत्युद्धन्त्युद्धतादग्नीध्रस्त्विहरति। स यद्युत्तरवेदिं करोति यथा महाहवीꣳष्येवꣳ संतिष्ठते। यद्यु वा उत्तरवेदिं न करोति यथा वैश्वदेवहवीꣳष्येवꣳ संतिष्ठते ऽन्यत्र वाजिनादथ पूर्णपात्रविष्णुक्रमेभ्यश्चरित्वा विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य श्येण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षण्णि च वर्तयते परि च वपत एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः। तेनाभ्यो मह आवहदमृतं मर्त्याभ्यः॥ प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्। येन मासा अर्धमासा ऋतवः परिवत्सराः॥ येन ते ते प्रजापते

१ इति found only in BH, the word is missing in all the MSS also supra page 141, 15

२ दोहयित्वा TF.

ईजानस्य न्यवर्तयन् । तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ॥
अग्निर्भ्राजस्वेन शोचिषा तप आक्रान्तमुष्णिहा[1] शिरस्तपस्याहितं
वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये[1] तपसा-
स्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शौष्णंसद्धुतं
तत्सत्यं तद्धुतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुर-
स्ताद्देवाये ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्सं-
तिष्ठन्ते शुक्रामन्थीरीयद्वीऽर्ध्वंसुब्रह्मरीणाऽ स्वस्तिमायास इत्या-
मास्ते[1] ॥ १८ ॥ षष्ठः ॥

॥ इति पञ्चमः प्रश्नः ॥



अग्निष्टोमेन यक्ष्यमाणो भवति । स उपकल्पयते कृष्णाजिनं च कृष्णविषाणां च वाससी मेखलां च मैत्रा ऊर्ध्वी वेणीकार्या भवति त्रिवृदेकतःपाशा द्वाविंशतिं च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च मद्रूलां च शरेषीकामौदुम्बरं च[1] दण्डं चमसं च[2] व्रतप्रदानं स्थालीं सम्भिक्याः प्रलेखणमेतानि पर्योदस्य यजमानस्यान्वेव पत्नीमभितो भवन्ति कुम्भं च कुरीरं च वाससी योक्त्रं चापरिमितानि च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च मद्रूला च शरेषीकामृन्मयश्च पात्रः शङ्कुश्च स्थाली मन्थिका प्रलेखणा । जुष्टे देवयजने शाला कारिता भवति । पुरोहविषि देवयजने याजयेदित्येतेषां यद्धोपयते । प्राचीनवंशा दिक्षतीकाशा दक्षिणतो वर्षीयसी । तस्यै चतस्रो द्वारः कुर्वन्ति प्राचीं दक्षिणां प्रतीचीमुदीचीं । दक्षिणतो व्रतश्रपणागारं कुर्वन्ति पश्चात्पत्नीशालमथ[3] यदि दूरे तीर्थं भवत्युत्तरेण शालां द्वौ कटपरिवारौ कुर्वन्ति पूर्वं यजमानायापरं पत्न्यै । तयोः प्राची द्वारौ कुर्वन्ति । तदुदकुम्भौ निधापयत्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वारण्योरग्नीन्समारोह्य शालामभिप्रेत्योत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य मध्यमे वंशे राजानं प्रबध्नन्ति । परिस्तृणन्ति । दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाय

१ च only P, the other MSS. om the word, except F which has चमसं ।

२ च om HF.

३ Thus TJ, ॰शालाय॰ HBP; ॰शालीम॰ F.

मुखमेव प्रथममभ्यङ्क्ते महीनां पयो ऽसि वर्चोदा असि वर्चो मयि धेहीत्यनुलोममा पादाभ्यामन्वो ऽस्य घृतमभ्यनक्त्यथाक्षै-तदाञ्जनं पिष्टं तूपमुपयन्ति मद्गूला च शरेषीका ' तस्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्ति तृणस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहीति विरनि-धावं ' त्रिरुत्तरमेवं पञ्च कृत्व आङ्क्त इति ब्राह्मणं ' पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमथैनमेकविंशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति ' यजमानमभिवाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्यथैनं सर्वे प्राणावभिपाद्य शालामानयत्या वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इति ' पूर्वया द्वारा शालां प्रपाद्य-तीन्द्राग्नी द्यावापृथिवी आप ओषधीरित्यथैनमपरेणाहवनीयं पर्याणीय दक्षिणत उदङ्मुखमुपवेश्याहवनीयमीक्षयति त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहीत्यात्मानम् ' ॥ २ ॥

यावदेवावाध्वर्युर्वपति तावदेव प्रतिप्रस्थाता पत्न्यै दक्षिण-मुपपक्षमद्भिरुनत्ति तूष्णीं ' तूष्णीमूर्ध्वाग्रं बर्हिरनूक्षयति ' तूष्णीं स्वधितिं तिर्यञ्चं निदधाति ' तूष्णीं प्रवपति ' तूष्णी-मुप्तान्प्रत्यभिगृह्णन् ' एतयैवावृतोत्तरमुपपक्षमद्भिरुनत्ति तूष्णीमेव ' नापिताय क्षुरं प्रयच्छन्नाह नापितेमावुपपक्षौ मे निकृन्तनखौ प्रकृतादिति ' तां तथा प्राञ्चीमथैनामद्भिरभिषिञ्चति

तूष्णीं' तूष्णीꣳ संप्रधाव्य रजः प्रस्रावयति तूष्णीमद्भिरुदेति[1] तूष्णीं' वसनस्यान्तेन प्रतिष्क्राद्याप आचामति' तूष्णीं[2] प्रदक्षिणमहतं वासः परिधत्ते' तूष्णीमभ्यङ्क्ते' तूष्णीमाङ्क्ते' ऽथैनामपरिमितैर्दर्भपुञ्जीलैः पवयति तूष्णीं तूष्णीमेवाथैनामग्नीषापरया द्वारा प्राचीं प्रपाद्य प्राचीमुदानयन्वाचयति प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इहेत्यथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमित्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयामिष्टिं निर्वपति' तस्यै दशतयमुत्सीदति न यजमानं व्रतमुपनयति न पत्नीꣳ संनह्यति न यजमानभागं करोति न ब्रह्मभागं न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याचति[3] न फलीकरणहोमेन चरति न समिष्टयजुर्जुहोति न पूर्णपात्रे यजमानं वाचयति न विष्णुक्रमान्क्रमते' ऽथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य पत्नीः संयाज्य साडेत्य ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यवनीयाज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति ॥ ३ ॥

आकूत्यै प्रयुजे ऽग्नये स्वाहा मेधायै मनसे ऽग्नये स्वाहा दीक्षायै तपसे ऽग्नये स्वाहा सरस्वत्यै पूष्णे ऽग्नये स्वाहेत्यथ

---

१ अद्भिर् ( Instr ) all, instead of the Abl, that was to be expected; H omits the word

२ तूष्णीं twice BF

३ Thus HTJF, याचयति B.

स्रुचि चतुर्गृहीतं गृहीत्वा स्रुचा प्रथमां जुहोत्यापो देवी-र्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहेत्यथापरं चतुर्गृहीतं गृहीत्वाथास्य पूर्णाꣳ स्रुचमौद्ग्रहणं जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यम्। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेत्यथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथैनमग्रेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छति कृष्णाजिनं च कृष्णविषाणां च वाससी मेखलामौदुम्बरं दण्डं वसनमुष्णीषꣳ यद्वस्य प्रतिप्रस्थाता पत्न्यै प्रयच्छति कुम्बं च कुरीरं च वाससी योक्त्रं च शङ्कुं च ॥ १ ॥ प्रथमः ॥

अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तस्य शुक्लकृष्णे संधयति शुक्ले ऽङ्गुष्ठौ भवति कृष्णे ऽङ्गुलय इत्यृक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृच इत्यथ दक्षिणं जान्वाच्याभिपर्यतीमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमेत्यथोपस्थं कृत्वा प्रदक्षिणं मेखलां पर्यस्यत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छेति पाहि मा मा मा हिꣳसीरिति निष्टर्क्यं ग्रन्थिं पश्चार्धेसंधिकाले प्रतिप्रस्थाता योक्त्रेण पत्नीꣳ संनह्यत्याशासाना सौमनसꣳ सं त्वा नह्यामीति द्वाभ्यामथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छेति वसनस्यातीकाशेषु वाचयति नक्षत्राणां मातीकाशात्पाहीति प्रतिहृत्य वसनस्यान्तादक्षिणमुष्णीषेण शिरो वेष्टयति श्रिया

ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसायेत्येतस्मिन्काले प्रतिप्रस्थाता पत्न्यै कुम्बकुरीरमध्यूहति तूष्णीमथास्यै कृष्ण-विषाणां चित्रलिर्वा पञ्चवलिर्वा मायवा रज्ज्वा परिहृषा मण्डचरवदिषिषिता[1] तां यजमानाय प्रयच्छतीन्द्रस्य योनिरसीति मा मा हिंसीरिति यजमानः प्रतिगृह्णाति तां वसनस्यान्तमायां[2] दशायां बद्धा तयान्तर्वेदि कोष्टमुद्धन्ति कृष्यै त्वा सुसस्याया इति सुपिप्पलाभ्यस्त्वौषधीभ्य इति दक्षिणं गोदानं कण्डूयत एतस्मिन्काले प्रतिप्रस्थाता पत्न्यै शङ्कुमावध्नात्येतेन कण्डूयस्वेत्यथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितꣳ सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णात्यथैनं यज्ञस्यारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इत्यथ मुष्टी[3] करोति वाचं[3] यच्छत्याप्राशादीक्षितायं ब्राह्मणो ऽसावित्यंगोत्रो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता नमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यश्च सोमपेभ्यः

---

१ The reading of these difficult words is not wholly certain : H reads as above, B मंडचरवहिताविष०, J मंडचरवडाविष०, T मण्डचरवड्डाविष०, F. मण्डचरडिताविष०, P मण्डचरवडिताविष०, comp the Bhāṣya (and Keś) मण्डचरवत् सावष्टम्भवत् वक्रा, where वक्रा is the periphrase of विषधिमा।

२ ऽन्तिकायां BJ.

३ Thus (without च) TJF, BH ins च after वाच and after मुष्टी, but comp. TS VI 1 4, 3

दर्व्यायास्मै कंसे वा चमसे वा निःषिच्य व्रतं प्रयच्छति। तद्दीक्षितः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नो ऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेति। यजुषा यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयत्ये-तस्मिन्काले प्रतिप्रस्थाता पत्न्यै पात्रे निःषिच्य व्रतं प्रयच्छति। तत्सा परिश्रित्य व्रतयति तूष्णीं। निर्णिज्य पात्रे प्रयच्छतो। ऽथ तथैव पुरा नक्षत्राणामन्तर्धानात्संप्रेष्य वाचंयमयोर्व्रते दीक्षयतो। ऽथोदित आदित्ये यजमानः कृष्णाजिनमादाय पूर्वया द्वारोपनिष्क्रम्य प्राङ् तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजते। समानो वाचो विसर्गः समानꣳ संप्रैषयजुः समानं संयुदयजुः समानमपामावमनꣳ समानं व्रतमथैव प्रत्येहाराग्निमक्षिणोति। स यं मन्यते न मा प्रत्या-ख्यास्यतीति तं प्रथममभि प्रक्षिणोति विश्वे देवा अभि मामावृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्व-सुदावेत्याहरन्तं दृष्ट्वा जपति नानाहरन्तꣳ रास्वेयत्सोमा भूयो भर मा पृणन्पूर्त्या विराधि माऽहमायुषेति। स यथारूपं प्रतिगृह्णाति ॥७॥

चन्द्रमसीति हिरण्यं वस्त्रमसीति वास। उस्रासीति गाꣳ हयो ऽसीत्यश्वं। छागो ऽसीति छागं। मेषो ऽसीति मेषमथ यत्रा-म्नानेनानादिष्टं भवति प्राजापत्यमसि मम भोगाय भवेत्येव तत्प्रति-गृह्णाति। ताः समुदायुत्य[1] रक्षन्ति। तासां या नश्यति वा म्रियते

[1] Thus BTJ; समुदायित्य H; समुदायेत्य F.

वा वायवे त्वेति तामनुदिशति । यान्त्सु वा पाशे वा वरुणाय त्वेति तां । या स्वं वा शीर्यते गर्तं वा पतति निर्ऋत्यै त्वेति तां । यामहिर्वा व्याघ्रो वा हन्ति रुद्राय त्वेति तां । तासां तिस्रः पराचीः । अथ येयं नष्टा यदि विन्देयुः कथꣳ स्यादित्येतदनुदिष्टैव[1] स्यादित्येतदेकं । कमस्या[2] अतः[3] श्रेयाꣳसं[3] प्रतिपत्तीतारं लभेत । दक्षिणाभिरेवैनाꣳ[4] सह दद्यादित्येकं । वायव्ययैवैनया[5] यजेतेत्येतदपरम्[5] । ॥ ८ ॥ द्वितीयः ॥

अथातः प्रयाणस्यैव मीमाꣳसा । दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते संसृजन्ति व्रते । संवध्नन्ति व्रतदुघयोर्वत्सावादधाति[5] यदाधेयं भवति शीडे गार्हपत्यं प्रउग आहवनीयमपि वारण्योरग्नीन्समारोह्य बृहस्पतिवत्यर्चा प्रयाति भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्यथ यत्रैनं यान्तं व्रतमवेलोपाधिगच्छत्युत्तरतोऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयति । तूष्णीं तृणोदकाद्यावस्त्वित्यथ यदपर्याणा[6] अप उपाधिगच्छति तज्जपति देवीरापो अपां

---

१ Thus BF (J om this passage), अनुदिष्टैव T, अनुदिष्टेव H.

२ Thus T; कमस्यातश्रे॰ BJ, कमस्याः नतः श्रे॰ F, कमास्याः श्रे॰ H.

३ स्व om HTF.

४ Thus JF (but ॰वयायजेते॰) [illegible] (but ॰वैनयजे॰), B वायव्ययैवैनय-जयेत्ये॰; T: वायव्यैवैवेनयायजतेत्ये॰।

५ Thus only T and Bh, ॰दधाति the other MSS

६ Thus all the MSS and Keś, also the citation in the Dvaidha-sūtra. I did not venture to correct अपर्याणा, as only the Vivaraṇa reads

ऽस्तमयोदितेषु नक्षत्रेषु यजमानः कृष्णाजिनमास्थाय पूर्वया द्वारोपनिष्क्रम्य प्राचीं तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजते । ज्योतिषीनामुपस्थासेति । वनस्पतिवतीं विचक्षणवतीं वाचं वदति । स यद्यु हामेध्यमुपाधिगच्छति तदभिपश्यतीदं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरित्यथ यद्येनमभिवर्षत्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्येव तत्र जपति । तस्यैते यजुषी परिमिते वा महत्साये भवतो । ज्यायसे निपतः[२] काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[३] । स यदि वक्ष्यमुपस्तीर्णं भवति कृष्णाजिनादेवानन्तर्हितः संविशत्यथ सर्वेशयनमुपस्तृणाति ॥ ६ ॥

अग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि । गोपाय नः स्वस्तये प्रबुधे नः पुनर्दद इति । दक्षिणतः शय एतद्वै यजमानस्यायतनꣳ स्व एवायतने शये अग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शय इति ब्राह्मणमेवा पत्नी जघनेन गार्हपत्यꣳ संविशति तूष्णीमथाध्वर्युरुत्थाय प्रबुद्ध्य यजुर्वाचयति त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्य इत्यथाथ वाचयति दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे

१ एव BTH.

२ निपत्त BH, निपतः T Keś., निवपन P; नि J, निपत्त. P pr. m.; निपतः sec m

३ F ins यदपरिस्तीर्णं भवति comp. Keś. यदास्तीर्णं भवति ।

नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं वो मा व्यक्रमिषम-च्छिन्नं तन्तुं पृथिव्या अनु गेषमिति[1] सं वा गाहते सं वा तरति[1] सेतुमेव कृत्वात्येतीति ब्राह्मणमथ यत्र वत्सम्भवति तदवस्थायेममवस्य वर आ पृथिव्या इत्यथादित्यमुद्यन्तमुपतिष्ठत आरे मधून्हनुषि सर्ववीर इत्यथ यत्र यक्ष्यमाणो भवति तदवस्थायेदमगन्म देवयजनं पृथिव्या इत्यान्तादनुवाकस्य[1] ॥ ९ ॥

अथातः क्रयस्यैवोपवसथः[1] पर्याश्रयते[1] स उपकल्पयते चर्म च छागं च कृष्णाजिनस्यावृषोत्तुके[2] उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयण्यौ सैवारुणा पिङ्गाक्षैकहायनी भवति सोमवाहनावनड्वाहौ सोमवाहनमनः प्रक्षालितमुद्धृतफलकं रोहितं चर्मानडुहं दर्भमिश्राणि बर्हींषि कार्ष्मर्यमयान्परिधीनाश्ववालं प्रस्तरमैक्षवी विधृती स्रावौ पञ्चदशौपसदानिध्मान्हिरण्य-मौदुम्बरौ राजासन्द्यौ तस्ये नाभिदघ्नाः पादा भवन्त्यरत्नि-मात्राणि शीर्षाण्यनूच्यानि[3] मौञ्जीभी रज्जुभिर्व्यूता भवत्यैकसराभिः सन्नाम्नवीयसीमिव यथासन्दीं यदि प्रवर्ग्य-वान्सोमो भवत्यथाध्वर्युरमरराव आहुत्य संप्राप्ति चित्तनमते

१ इव om T.

२ This seems to be also the reading of Bh. and Keś, presented here and infra VI 14 init by all the MSS, also P, except F, which reads both times, and T which reads once : कृष्णजिन्या कर्णात्तुके ।

३ Thus all, also P Bh. and Keś, only B has: शीर्षाण्यनूच्यानि ; comp Baudh X. 12

दोहयतेति। प्रातरुदित आदित्ये विसृष्टायां वाच्यपेण प्राञ्चौ तिष्ठन्देवयजनमध्यवस्यति यदि पुरस्तादनध्यवसितं भवत्यथाहैहि यजमानेति। पूर्वया द्वारा प्राञ्चौ प्रपाद्य पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयादित्यं चरुं प्रायणीयामिष्टिं निर्वपति। हविष्कृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूयाहवनीये स्रुवाहुतिं जुहोति कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः। येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान्स्वाहेत्यथोपनिष्क्रम्य संप्रैषमाह सोमविक्रयिण्सोमꣳ शोधयोपरवाणां काले रोहिते चर्मण्यानडुहे उपासन्ने ब्राह्मणो दक्षिणत आस्तां ता गावो दूरं मा गुर्यास्तु सोमक्रयणी च सोमवाहनौ चानड्वाहौ[1] सोमवाहनमनः प्रचालयतोद्धृतफलकमिति। यथासंप्रैषं ते कुर्वन्त्यथैतेनैव यथेतमेत्याथैतं चरुꣳ श्रपयित्वाभिघार्योदञ्चमुद्वास्य पद्वीषा प्रायणीयमासादयति। समानं कर्मा प्रयाजेभ्यः। पञ्च प्रयाजानिष्ट्वोद्धृत्याक्रम्य सꣳस्रावेण पञ्चहलो ध्रुवामभिघार्य चरुमभिघारयत्युपस्तमभ्नातो ऽथ चतुर आज्यस्य स्रुचान आह ॥ १० ॥

पथ्यायै स्वस्तय इत्युपाꣳश्वनुब्रूहीत्युच्चैरित्याक्रम्याश्राव्याह पथ्याꣳ स्वस्तिमित्युपाꣳशु यजेत्युच्चैर्वषट्कृते पूर्वार्धे जुहोत्यथ चतुर एवाज्यस्य स्रुचान आहाग्नय इत्युपाꣳश्वनुब्रूहीत्युच्चैरित्याक्रम्याश्राव्याहाग्निमित्युपाꣳशु यजेत्युच्चैर्वषट्कृते दक्षिणार्धे जुहो-

१ च only read in HB, the Vir. and Keś do not cite the saṃpraiṣa to the end.

त्यथ चतुर एवाज्यस्य गृह्णान आह सोमायेत्युपांश्वनुब्रूही-त्युच्चैरत्याक्रम्याश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते ऽपरार्धे जुहोत्यथ चतुर एवाज्यस्य गृह्णान आह सवित्र इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह सवितारमित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धे जुहोत्यथोपस्तीर्य पूर्वार्धाद्धरो-रवद्यत्यादित्या इत्युपांश्वनुब्रूहीत्युच्चैः[1] पूर्वार्धादवदाया-परार्धादवद्यत्यभिघारयति प्रत्यनक्त्यत्याक्रम्याश्राव्याहादितिमि-त्युपांशु यजेत्युच्चैर्वषट्कृते मध्ये जुहोत्यथ वै भवत्यदितिमिड्डा मारुतीमृचमन्वाह मरुतो यद्ध वो दिव इत्यथोपस्तीर्योत्तरा-र्धाद्धरोरवद्यत्यग्नये स्विष्टकृते ऽनुब्रूहीत्यथ वै भवत्यष्टावत्तः स्विष्टकृद्यावदवत्तेडा[1] द्विरभिघारयति न प्रत्यनक्त्यथैतन्मेक्षण-मधोऽधः स्रुचावाग्नीध्रायोन्मपच्छाद्याहातिवाजयतादेव मानु-महायौरित्यत्याक्रम्याश्राव्याहाग्निं स्विष्टकृतं यजेति[1] वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणमाहवनीये ऽतिसाध्याद्धिरभ्युक्ष्योत्तरतः सादयत्यथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यत्युपहूतायामिडाया-मग्नीध आदधाति षडवत्तं[1] प्राश्नन्ति[1] मार्जयन्ते[1] ॥ ११ ॥

अथ परिकर्मिणः सङ्ग्रास्त्वनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राचीनाप्येतां चरुस्थालीं सचामकायासैतन्मेचणसेतं वेदमेतद्दिर्हियत्वुदयमुदयनीयाय निधत्तादिति[1] संवन्तः[1] प्राय-

1 Thus B, सक्षम. T (Grantha!), मंयुवंतः J, सयुत. II, संदवत (प्रायवीणा) F

णीयः संतिष्ठते । अथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथैतद्ध्रुवाज्यमाप्याय्य स्रुचि चतुर्गृहीतं गृहीत्वा स्रुवेण हिरण्यं निष्टर्क्य बद्ध्वा दर्भनाड्यां प्रबध्य स्रुच्यवदधातीयं ते शुक्र तनूरिदं वर्चस्तया संभव भ्राजं गच्छेत्यथैतां दर्भनाडीꣳ स्रुग्दण्ड उपसंगृह्याहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचति स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानोऽनूची पत्नी स्थाली पद्धरणीमादाय पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेवꣳ हविरित्यथैनꣳ हिरण्यमन्तर्धायादित्यमुदीक्षयति सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चितेत्यथैताꣳ सोमक्रयणीमग्रेण शालामुदीचीमतिविसर्पन्ति । तामनुमन्त्रयते चिदसि मनासीत्यान्तादनुवाकस्याथास्य दक्षिणमेस्य[1] सप्तमं पदं जोषयध्वमिति । तस्यै षट्पदान्यनुनिष्क्रामति ॥ १२ ॥

वस्व्यसि रुद्रास्यदितिरस्यादित्यासि शुक्रासि चन्द्रासीति । सप्तमं पदमभिगृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिराचिकेत्वित्यथैतस्मिन्पदे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे घृतवति स्वाहेत्यपोद्धृत्य हिरण्यꣳ स्फ्येन वा कृष्णविषाणया वा

१ Thus BJH, दक्षिणेमस्य T, F corrupt

पदं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथैनत्स्फ्येनोपसंगृह्य यावन्मूतं पद्धुरस्याꣳ संवपत्यस्मे रायो ऽस्मे राय इति निंस्ते राय इति यजमानाय प्रयच्छति । तोते राय इति यजमानः पत्न्या । अथ पत्नीꣳ सोमक्रयण्या समीक्षयति सं देवि देव्योर्वश्या पश्यस्वेत्यथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशीत्यथ यजमानः सोमक्रयणीमीक्षते मा ऽहꣳ रायस्पोषेण वियोषमित्यथैनद्धिरण्यमद्भिः[1] प्रक्षाल्य मध्यमायामङ्गुल्यां बध्नीते । ऽथैनं[2] पदाग्रमद्भिरुपसृजन्त्युत्सृजन्ति[3] सोमक्रयणीं । नयन्ति पत्नीं । नि पदं दधति ।
॥ १३ ॥ तृतीयः ॥

अथास्मै निष्क्रयाणानि चक्रं च छागां च कृष्णायसचक्षासूर्णांस्तुके[4] उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीमित्यथ पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३[5] इति । क्रय्य इतीतरः

---

१ Thus ( with एनद् ) all, also Keś.

२ Thus all, also, a copy of the Nivaraṇa ; Keś : अथैनं ।

३ FH · उपसृज्य (or ज्या)तिनयंति सोम० ; B · उपसृजत्युत्सृजंति सोम० ; T: उपसृजत्युत्सृजन्तो सोम० ; J उपसृजन्ति सोम० ; P: उपसृजत्युत्सृजति ; Keś has: अथैनं पदाग्रं ... उपसृजति । सोमक्रयणीमुत्सृजंति The Somaprayoga I O. 1202 has · पदवैषे अपो निनीयातिनयंति ( thus ! ) सोमक्रयणीं । Are we to read . अतिनयन्ति instead of उत्सृजन्ति ?

४ FT ०वसुच्चार चर्मा०, the other MSS also P, च्चार्- comp. the note on page 166

५ The pluti sign is added in one of the MSS. only ( H ).

प्रत्याह सुविचितꣳ[1] राजानं पुरस्ताद्भागाभिहपतिष्ठत एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्यथैतद्रोहितं चर्मानडुहमुत्तरलोमास्तीर्याथैतद्द्विगुणं[2] वासः प्राचीनदशमुत्तरार्धे चर्मण उपस्तृणात्यथ हिरण्यवता पाणिना राजानमभिमृशत्यꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतो ऽमात्यो ऽसि शुक्रस्ते ग्रह इत्यथैनमतिच्छन्दसा मिमीत एकयैकयोत्सर्गं मिमीते ऽयातयाम्नियायातयाम्नियैवैनं मिमीते सर्वास्वङ्गुष्ठमुपनिगृह्णात्यभि त्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरिति पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं दशकृत्वो मिमानो[3]ऽर्धदेशाꣳ राज्ञो मिमीते ऽथातिशिष्टꣳ राजानं प्रजाभ्यस्त्वेत्युपसमूहति समुच्चित्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वेति व्यानाय त्वेत्यनुश्रन्थत्यथोपरिष्टादङ्गुष्ठस्यावकाशं कृत्वा यजमानमवेक्षयति प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्त्वित्यथैनं चर्मणि निदधाति तं ततः कौत्स आदत्ते ऽद्भिरभ्युक्ष्य

---

१ Thus HFP (comp. Padārthanirv p. 270, No 56); the other MSS. वचि॰।

२ The clause अथैतद्रोहित . . वासो om. PJTH. Keś. cites them

३ मिमामो JT

चर्मोदूहत्यथोपोत्थाय पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३[1] इति । क्रय्य इतीतरः प्रत्याह । मूजवता३[1] इति । मूजवतो नीतीतरः प्रत्याहार्धेन गवा पणते गवा ते क्रीणानीति । क्रीतः सोम इत्याह सोमविक्रयी वयाऽस्मि याचस्वेत्यैषा ते सोमक्रयणी चन्द्रं ते छागा ते वस्त्रं त इत्यथैनꣳ हिरण्येन पणते ॥ १४ ॥

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यवन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन संयत्ते[2] गोरित्युक्त्वास्मै चन्द्राणीति यजमानाय प्रयच्छत्यथैनं प्रतीचीनशीर्षयाऽजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीत्यस्मे ते बन्धुरिति यजमानमीक्षते । मयि ते रायः श्रयन्तामित्यात्मानमथैनां प्रदक्षिणमावर्त्याग्निरुद्गृह्योदीचीमुत्सृजति[3] । सैषा क्रीतस्य भवत्यथ क्रौश्चाद्राजानमादत्ते मित्रो न एहि सुमित्रधा इति । तं यजमानस्योरौ दक्षिण आसादयतीन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनमित्यथैनं प्रत्यपोर्णुते यजमानो । उद्गृह्य क्रौश्चाय वा परिकर्मिणे सोष्णीषं प्रयच्छत्यथ यजमानꣳ प्रस्तयोर्णास्तुकयाध्यस्यत्यस्मे ज्योतिरित्यथैतां कृष्णामुपग्रथ्नातीदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीति । तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इत्यथ सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते

१ Here again only H and Keś. have the pluti sign.

२ Some MSS have संयते the Mantramālā यत्ते।

३ Most of the MSS. have याचस्व instead of याचस्वे।

धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुराद्घच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः संस्कृतमिति[1] प्रदक्षिणꣳ राजानं परियन्त्यैतावञ्जसोपसंक्रामतो ऽध्वर्युश्च यजमानश्च यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्वित्यपरेण शालां तिष्ठन्नुह्यमानꣳ राजानं प्रतिमन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेत्यथैतꣳ सोमवाहनमनो ऽग्रेण शाला-मुदगीषमुपस्थापयन्ति[1] तदुपस्तभ्नोति वरुणस्य स्कम्भनम-सीति[1] वरुणस्य स्कम्भसर्जनमसीति शम्यामुद्वृहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रमेव वै भवति विमुक्तो ऽन्यो ऽनड्वानभवत्य-विमुक्तो ऽन्यो ऽथातिथ्यं गृह्णाति यज्ञस्य संततिं पत्न्यन्वारभत इति ब्राह्मणमथाहेहि यजमानेति[1] पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्याꣳ स्तीर्णायाः प्रणीयातिथ्यं निर्वपत्यन्वारब्धायां पत्न्यामथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा ॥ १६ ॥

अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा सोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वातिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वाग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा श्येनाय त्वा

1 Thus J, Keś, Padārthanirv.; the other MSS. ॰यन्ति।

सोमभृते विष्णवे त्वा जुष्टं निर्वपामीति । पञ्चकृत्वो यजुषा । हविष्कृता वाचं विसृज्योत्तरेणैवाहतोत्तरमनसाचं विमुच्यार्थ्यैते ब्राह्मणाश्चत्वार आसन्दीमाददते । अथ यजमानो नीडाद्राजानमादत्ते या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति । पूर्वे एवासन्द्या प्रतिपद्यन्ते । ऽन्वारब्धो यजमानो ऽन्वक्शूद्र[1] उदपात्रेण । पूर्वया द्वारा शालां प्रपादयन्ति गयस्फानः प्रतरणः सुवीरो ऽवीरहा प्रचरा सोम दुर्यानित्येतामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधति[2] । तस्यां कृष्णाजिनमास्तृणात्यदित्याः सदो ऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानमर्यैनमुपतिष्ठते वरुणो ऽसि धृतव्रतो वारुणमसीति । समुच्चित्य कृष्णाजिनस्यान्तान्समन्ध्यथ विग्रथ्य शूद्रे प्रयच्छति शंयोर्देवानाᳫं सख्यादित्यथापरावासन्दीपादावन्तरेण ब्राह्मणो ऽभिपिद्यति शूद्रः प्रचालयति मा देवानामपसश्छिदमहीत्यथैनं वारुण्या परिचरति तत्त्वा यामि ब्रह्मणा वन्दमान इत्यथैनᳫं प्रशास्ति मा राजानं चाहवनीयं चान्तरेण कश्चन संचारीदित्यैनᳫं सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषी मा साधस्ताद्यो ऽनुप्रपादीदित्यथास्मै मधुपर्कं च गां च प्राहर्तामध्वर्युर्विशास्ति ॥ १७ ॥ चतुर्थः ॥

श्रपयन्त्येतमातिथ्यं वैष्णवं नवकपालं । तेन सह मदन्तीरधिश्रयति । शिल्पवदेतदिध्माबर्हिरातिथ्यस्य भवति । कार्ष्मर्यमयैः

१ शूद्र F, शुद्र H; श्रूद्र PBJ, भूद्र ▮ (Grantha [1])

२ Thus only P, comp Keśava ( ब्राह्मणा एव निदधति ), निदधाति the other MSS

परिधिभिराश्ववालेन प्रस्तरेणैक्षवीभ्यां विधृतीभ्यां तेन शिल्पवत्त्वं पुरोडाशस्य याहयित्वा श्रपयित्वाभिवास्य[1] प्राङ्ङेत्याग्रेभ्यो निनीय स्रुम्वयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं चिर्यञ्जुषा तूष्णीं चतुर्थं पूर्वं परियाहं परिगृह्णाति करणं जपत्युन्मुंञ्चुसादामीधिर्हरति यदाग्नीध्रीर्हरस्यपीत्तरं परियाहं परिगृह्य योयुपित्वा तिर्यञ्चः स्फ्यः स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्योपतास्य प्रोक्षणीपूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमार्ग्याज्येनोदेत्याज्यं[2] च प्रोक्षणीश्चोत्पूय प्रसिद्धं चतुर्गृहीतानि वा पञ्चगृहीतानि वाज्यानि गृहीत्वा प्रोक्षणीभिरपोऽभिषिञ्चतीध्मं प्रोक्षति वेदिं प्रोक्षति बर्हिः प्रोक्षति बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति पञ्चविधं बर्हिः स्तीर्त्वा प्रस्तारपाणिः प्राङभिद्रुत्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैक्षवी विधृती तिरश्ची सादयति विधृत्योराश्ववालं प्रस्तरं प्रस्तरे जुहूं बर्हिष्युत्तरे एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याथैनं पुरोडाशमुपस्तीर्णाभिघारितं समुद्वास्य ▪ तुर्वीचातिथ्यमासादयत्यथ संभारान्व्याचष्टे ऽथ निर्मन्थ्यमाहृता निर्मन्थ्येन चरति प्रहृत्याभिहृत्यायेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं न समिधं परिधिनष्टि वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु

१ श्रपयित्वा om. HTB, read by PJF

२ उदेह्याज्यं BJ, उदेत्याज्यं the other MSS also P

स्रुवेणाघारमाघारयति । संमृष्टे स्रुग्भ्यामुत्तरमंसावसंस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवाꣳ समज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते । प्रसिद्धꣳ होतारं वृणीते । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति । वषट्कृते जुहोति यज यजेति । चतुर्थं यदुपभृत्येतदौपभृतमाज्यꣳ सर्वम एव जुह्वाꣳ समानयते । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य अꣳसावेव ध्रुवामभिघार्य पुरोडाशमभिघारयति नोपभृतमथाग्नये सोमायेत्याज्यभागाभ्यां चरत्युपाꣳशु हविषा चरति विष्णवे ऽनुब्रूहि[1] विष्णुं यजेत्यथ स्विष्टकृता चरतीडान्त आतिथ्यः संतिष्ठते । ऽथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथैतद्ध्रुवाज्यमाप्याय्य काꣳसं वा चमसं वा धारयति । तमन्तर्वेदि निधाय तस्मिन्नेतत्तानूनप्त्रं गृह्णाति ॥ १८ ॥

आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामीति । स यावन्त ऋत्विजस्त एतत्समवमृशन्त्यनाधृष्टमस्यनाधृष्यं देवानामोजो ऽभिशस्तिपा अनभिशस्तेन्यमिति । यजमानमतिवाचयत्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धा इति । स यावन्त ऋत्विजस्तेषूपस्तवमिद्धा यजमान एव चिरवासिष्यति प्रजापतौ त्वा मनसि जुहोमीत्यथैनदद्भिरभ्युक्ष्योत्तरतः सिञ्चत्यथाग्नीन्मदन्त्यापा३[2] इति । मदन्ति देवीरमृता ऋतावृध इति । नाभिराद्रवेत्यथ

---

१ THF ins. इति।

२ only H has the pluti sign.

मदन्तीरुपस्पृश्योत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययन्त्यꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति । यजमानमभिवाचयत्याप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेत्यथाप उपस्पृश्य यथायतनमुपविश्याथाध्वर्युर्वाजवतीभ्याꣳ स्रुचौ व्यूहति । विधृतीभ्यां प्रस्तरꣳ समुत्सृप्याप्रतिशृणꣳस्तेधानक्ति । न प्रस्तरायाश्रावयति । न बर्हिरनुप्रहरति । तं दक्षिणार्धे वेद्यै निधाय तस्मिन्दक्षिणोत्तरिणौ निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति । परिधिषु शकलानुपसंगृह्णाति प्रस्तरे बर्हिर्यावत्याचꣳ स्पन्द्यया विपथ्याहवनीये ऽतिवाच्याङ्गिरभ्युक्ष्योत्तरतः । सादयत्यथ यजमानमवान्तरदीक्षामुपनयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनꣳ सꣳशास्ति संतरां मेखलाꣳ समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पूर्वं[1] व्रतनꣳ सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातो ऽधि व्रतयेति । स एवमेवैतत्सर्वं करोति । ॥ १९ ॥

अथ प्रवर्ग्यस्यावृता प्रवर्ग्येण चरत्यथ स्फ्यमाददान आहाग्नीन्मदन्तीरधिश्रय हविरधिश्रयैह्युपसीदेत्येतास्वेव मदन्तीषु भूयसीरप आनयत्याज्यमधिश्रयति । तद्धविरथैतस्यैव

1 Thus Keś., Mantramālā, पूर्वमवं the other MSS also P.

बर्हिष स्तीर्णस्य पर्यवलोपं सम्वयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं ' त्रियजुषा तूष्णीं चतुर्थं ' पूर्वं परिग्राहं परिगृह्णाति ' करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति ' यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं कृत्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचौ च संमृड्ढि हविषोदेहीत्यासाद्य प्रोक्षणीरुद्धृत्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचौ च संमार्ष्टि ' हविषोदैति ' हविश्च प्रोक्षणीश्चोत्पूयाष्टौ कृत्वो जुह्वां गृह्णीते ' चतुरुपभृत्याज्यस्थाल्यां ध्रुवायामुपादाय प्रोक्षणीभिर्यथोत्तिष्ठतीध्मं प्रोक्षति ' वेदिं प्रोक्षति ' बर्हिः प्रोक्षति ' बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णात्येकविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिद्रुत्य काष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्येवं विधृती तिरश्ची सादयति ' विधृत्योराश्ववालं प्रस्तरं ' प्रस्तरे जुहूं ' बर्हिष्युत्तरे ' एते असदतामिति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य देवपत्नीर्व्याचष्टे ' अथैतेनैव यथेतमेत्याधेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधात्येवं सकृदा त्रिर्वा ' न समिधं परिशिनष्टि ' वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति ' संमृष्टे न स्रुग्भ्यामुत्तरमंसं प्रवरं प्रवृणीते ' ऽथाश्रावयत्यो श्रावयास्तु श्रौषट् सीद होतरित्येतावान्प्रवरः ' सीदति होता ' प्रणवमाकाङ्क्षति ' प्लुतः स्रुचावाददान आह ॥ २० ॥

अग्नय इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्निमित्युपांशु यजेत्युच्चैर्वषट्कृते पूर्वार्धे ध्रुवेला[1] जुहोत्यथाचैव तिष्ठन्नाह सोमायेत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते मध्ये जुहोत्यथ समानयमान[2] आह विष्णव इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह विष्णुमित्युपांशु यजेत्युच्चैर्वषट्कृते पश्चार्धे जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वाथाहाग्नीन्मदन्त्यापा३ इति। मदन्ति देवीरमृता ऋतावृध इति। ताभिरद्भिरेत्यथ मदन्तीरुपस्पृश्योपोत्थाय निह्नुत्य हिरण्यमवधाय राजानमाप्याययन्त्यꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति। यजमानमतिवाचयत्याप्यायय सखीन्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेत्यथाप उपस्पृश्य यथायतनमुपविशन्त्यथाध्वर्युर्वाजवतीभ्याꣳ स्रुचौ व्यूहति। विधृतीभ्यां प्रस्तरꣳ सꣳस्पृश्यामग्निष्टꣳ स्वेधामसि। न प्रस्तरायाश्रावयति। न बर्हिरनुप्रहरति। तं दक्षिणार्धे वेदेर्निधाय तस्मिन्दक्षिणोत्तरिणौ निह्नुवत एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति। मध्ये पाणी प्रस्तरꣳ समाहृत्याध्वस्थाल्याः स्रुवेणोपहत्य प्रथमामुपसदं जुहोति या ते अग्ने ऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति। परिधिषु प्रकलानुपसंस्पृशन्ति प्रस्तरे

1 Thus HTF, ॰ध्रुवेलया BJ

2 Thus J only, उपायमान HF; समानयमान M Ked.; समायमान T.

बर्हिर्यावन्मात्रं स्यन्द्या विपथ्याहवनीये ऽतिवाद्याह्निर-भुह्योत्तरतः सादयत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय चित्तनव्रतं[1] प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां । चित्तनव्रतं प्रयच्छत्यथापराह्ण अपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । तयोः समानी चर्यैतावदेव नाना । सद्योत्तरिणी निह्नुवते । ऽथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय चित्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां । चित्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । ॥ २१ ॥ पञ्चमः ॥

अथाध्वर्युरपररात्र आद्रुत्य षष्ठ्यामाह दित्तनव्रतं दोहयतेति[2] । प्रातरुदित आदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । एतामग्न्यामञ्च जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय दित्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां । दित्तनव्रतं प्रयच्छति । स आहवनीयादेवार्धे षट् प्राचः प्रक्रमान्प्रक्रामति । तच्छङ्कुं निहन्ति । स शालामुखीयः शङ्कुः । शालामुखीयाच्छङ्कोः षट्त्रिंशतं प्राचः प्रक्रमान्प्रक्रामति । तच्छङ्कुं निहन्ति । स यूपावटीयः शङ्कुः । शालामुखीयाच्छङ्कोः पञ्चदश दक्षिणा प्रक्रमान्प्रक्रामति पञ्चदशोदीचस्तच्छङ्कू निहन्ति । ते श्रोणी । यूपावटीयाच्छङ्कोर्द्वादश दक्षिणा प्रक्रमान्प्रक्रामति द्वादशोदीचस्तच्छङ्कू निहन्ति ।

---

१ Here and elsewhere F and the Mantramālā write चित्तनं व्रतं, दित्तनं व्रतं etc.; all the other MSS and Keś. write *one* word

२ T ins. अथ ।

तावद्भावर्येनामन्तरणया मानेन प्रमाय समन्तं स्पन्द्यया परितनोति । पृष्ठ्यामातनोति । यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति । तच्छङ्कुं निहन्ति । स मध्यम औत्तरवेदिकः शङ्कुर्मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा क्षुद्रपदानि प्रक्रामति पश्चोदञ्चि । तच्छङ्कुं निहन्ति । ते श्रोणी । यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि । तच्छङ्कुं निहन्ति । तावद्भावर्येनामन्तरणया मानेन प्रमाय समन्तं स्पन्द्यया परितनोति । पृष्ठ्यामातनोति[1] । मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यं षट् प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं । तत्पशं निदधाति । स उपरवाणां कालो । ऽथ महावेद्या उत्तराद्वंसीयाच्छङ्कोर्वेद्यन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं चयोदशं । तदाग्नीध्र उपसीदति । स उत्करस्य कालो । ऽथोपरवाणां कालात्तमयगुर्हरति । ॥ २२ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । स्फ्यंजुया तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीं रुद्रवतीमादित्यवतीं विश्वदेव्यावतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदिति । उद्धन्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथायेण शाखां तिष्ठन्संप्रेष्यमाह वेदिकारा वेदिं कल्पयत प्र स्तम्बानि भिन्दत प्रति निम्नान्पूरयत किंशारूणि निरस्यत प्राचीमुदीचीं प्रवणां निलिम्पतेति । यथासंप्रैषं ते कुर्वन्त्यथ महावेद्या उत्तराद्वंसीयाच्छङ्कोर्वेद्यन्तेन

१ BJT om. these two words.

धौष्णतीर्थः प्रक्रमान्प्रक्रामत्युदञ्चं चतुर्थं । तथा चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्पाद्यापैनां प्रतिच्छाद्यापराह्णिकीभ्यां[1] प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्योः सुब्रह्मण्यां । द्विस्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । ॥ २३ ॥ षष्ठः ॥

अथाध्वर्युरपररात्र आद्रुत्य संशास्त्येकस्तनव्रतं दोहयतेति । प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । हराग्रयामश्च जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यामर्धस्तनव्रतं प्रयच्छत्यथ तदानीमेवापराह्णिकौ[2] प्रवर्ग्योपसदौ समस्योपनिष्क्राम्य[3] संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यꣳ सꣳसादयोद्वासनायेति । वेधैतत्पदं कुर्वन्ति । गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधत्यथ प्रवर्ग्यस्यावृता प्रवर्ग्यमुद्वासयत्यग्नेरावृताग्निं प्रणयत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्येतावान्प्रैषो । इध्मेवैतद्बर्हिरनुसन्दाꣳ तृणानि यदेव तदेवेध्माबर्हिरग्नीषोमीयाय पशवे परिग्रयीतेत्येक आहुरथास्यैते अनसी प्रचालिते प्रपन्ने

---

1 After ॰ण्याय II ins चपरात्र ।

2 ॰पराह्णिके BH Keś

3 Thus JF, Bh., Keś. समस्यत्योप॰ the other MSS.

तावत्प्रमाणेनाभरण्या मानेन प्रमाय समन्तं रज्ज्वा परितनोति । पृष्ठ्यामातनोति । यूपावटीयाच्छङ्कोरनुसन्धं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति । तच्छङ्कुं निहन्ति । स मध्यम औत्तरवेदिकः । शङ्कोर्मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा क्षुद्रपदानि प्रक्रामति पञ्चोदञ्चि । तच्छङ्कू निहन्ति । ते श्रोणी । यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि । तच्छङ्कू निहन्ति । तावत्प्रमाणेनाभरण्या मानेन प्रमाय समन्तं रज्ज्वा परितनोति । पृष्ठ्यामातनोति[1] । मध्यमादौत्तरवेदिकाच्छङ्कोरनुसन्धं षट् प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा षष्ठं । तत्पदं निदधाति । स उपरवाणां कालः । अथ महावेद्या उत्तरादंसीयाच्छङ्कोर्विघन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं । तदाग्नीध्र उपसीदति । स उत्करस्य कालः । ऽथोपरवाणां कालात्तामयजुर्हरति । ॥ २२ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीं रुद्रवतीमादित्यवतीं विश्वदेव्यावतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदित्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण ग्रावाणं तिष्ठन्संप्रैषमाह वेदिकारा वेदिं कल्पयत प्र स्थलानि भिन्दत प्रति निखातान्पूरयत किंशाखानि निरस्यत प्राचीमुदीचीं प्रवणां निस्तिष्ठतेति । यथासंप्रैषं ते कुर्वन्त्यथ महावेद्या उत्तरादंसीयाच्छङ्कोर्विघन्तेन

---

1 DJT om. these two words.

वीप्रतीषः प्रक्रमान्प्रक्रामत्युदञ्चं चतुर्थं तथालाजस्याहृता चात्वालं परिलिखत्युत्तरवेदेराहृतोत्तरवेदिं निवपत्युत्तरमाभि-मुख्याद्यायैनां प्रतिष्ठाप्यापराह्णिकीभ्यां[1] प्रवर्ग्योपसद्भ्यां प्रचर-त्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय दिवस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां दिवस्तनव्रतं दोहयति तदर्धरात्रे प्रयच्छति ॥ २३ ॥ षष्ठः ॥

अथाध्वर्युरपररात्र आहुत्य मङ्गमास्येकस्तनव्रतं दोहयतेति प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति हरायामथ जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्म-ण्यामर्धस्तनव्रतं प्रयच्छत्यथ तदानीमेवापराह्णिकौ[2] प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य[3] संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रति-प्रस्थातः प्रवर्ग्यस्याहृता प्रवर्ग्यं सम्मादयोदासनायेति वेधैतत्पदं कुर्वन्ति गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधत्यथ प्रवर्ग्यस्याहृता प्रवर्ग्यमुद्वासयत्यग्नेराहृताग्निं प्रणयत्यग्नि-वत्युत्तरं परिधाहं परिमृह्य योपुपिला तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्येतावान्त्संप्रैषो उपै-वैतद्बर्हिरनुसन्त्यङ् स्तृणाति मह्देवं तदेवेध्माबर्हिरग्नीषोमीयाय पशवे परिशयीतेत्येक आहुरथास्तीर्ते अनमो प्रचालिते संपन्ने

---

१ After °ह्वाय B ins. वपराह्ण।

२ °पराह्णिके BH Kes.

३ Thus JF, Bh., Kes., समस्यात्योप° the other MSS.

योगृह्णते अभितः शालां तिष्ठतस्तयोर्दक्षिणं वर्षीय उत्तरं ह्रसीय उद्धूतफलकं दक्षिणमनुद्धूतफलकमुत्तरं तयोर्यदक्षे बद्धं तदवस्यत्यथैने अन्तर्विश्याभ्यावर्तयन्त्ययायेण[1] शालामरत्निमात्रमभित उक्ष्यात्स्थापयित्वाथैने प्रोक्षति वैष्णवी विष्णवे शुन्धेथामित्यथाहेहि यजमानेति पूर्वया द्वारा शालां प्रपाद्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ पात्र्याज्यस्थालीं स्रुवां स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्नी पदवृतीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हविर्धानस्य पश्चादक्षमुपस्थाय दक्षिणस्यां वर्तन्यां स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहेत्यथैतेषां पदपांसूनामर्धान्यल्प्यञ्जलावावपत्यथैनान्स्रुवेणाभिघारयति स प्राचीनोत्तानेन पाणिना दक्षिणमक्षधुरमुपानक्त्या नो वीरो जायतां कर्मण्यो यं सर्वे ऽनुजीवाम यो बहूनामसद्वशीत्यथापरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चादक्षमुपस्थायोत्तरस्यां वर्तन्यां स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय

१ Thus TF, comp. xv. 22 (आवर्त०); the other MSS. अभ्यवर्तयन्ति।

हविर्धानयोरुत्तरतो मेथीं निहन्त्यथैनाꣳ रज्ज्वा यूपनिबद्धामुपनिबध्नात्येतेनैव मन्त्रेणाथाध्वर्युर्दक्षिणस्य[1] हविर्धानस्य चतुष्कात्प्राञ्चमरत्निं मीत्वा लोके[2] न्यस्य गर्तं खानयत्यथ दक्षिणायुगान्तात्प्राञ्चं बाहुं मीत्वा लोके[2] न्यस्य गर्तं खानयति। तावुभावुत्तरेणान्यं गर्तं खानयत्येवमेव प्रतिप्रस्थातोत्तरतस्त्रीन्गर्तान्खानयत्येवमपरतस्तेषु प्राचीनकर्णा स्थूणा उच्छ्रयन्ति। तासूदञ्चौ वꣳशौ प्रोहन्त्यध्यस्यन्ति पुरस्ताद्रराटीं विष्णो रराटमसीति। विष्णोः पृष्ठमसीति मध्यमं करोति। वि ष्यति विष्णो श्नप्त्रे[3] स्थ इति ये अभितो भवतो। दक्षिणात्प्रभृत्योत्तरतस्तत परिश्रयन्ति। प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिष्टभ्य दर्भेण प्रग्रथ्नात्यन्वस्यंस्त्या विष्णोः स्यूरसीति। विष्णोर्ध्रुवमसीति ग्रन्थिं करोति। तं तदानीमेव विस्रंसयत्यकुर्वन्तो ग्रन्थीन्हस्तकौशलेनैव निस्तिष्ठतेत्येवमेवोत्तरं द्वार्बाहुमेवमपरे[4] द्वार्बाहू निस्तिष्ठत्यथैनदभिमृशति[5] वैष्णवमसि विष्णवे त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाहुत्य

1 अध्वर्युः om. JHF.

2 Thus all.

3 Thus BHF, Keś. (pr. m.); श्नप्त्रे T, Prayogamālā; the visarga of विष्णोः omitted by all the MSS. exc H

4 ग्रन्थीकरोति B.

5 अपरे BTHJP; अपरो F.

6 Thus (॰हत्य॰ or ॰हृत्य॰) all, except B, which has निस्तिष्ठतो (comp. Keś.: कुर्वतः) — अथैतद्॰ HF; अथैतम्॰ BTJP (Bh, Keś.: अथैतद्धविर्धानमभिमृशति)।

प्रासामुखीयाच्छङ्कोरनुसन्धाय षट् प्राचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं । तदभ्रिं निदधाति । स औदुम्बर्यै काल । औदुम्बर्यै कालादभ्रिमादत्ते ॥ २५ ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तयौदुम्बर्या अवटं[1] परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथोद्गातारमाहोद्गातरेतामौदुम्बर्या अवटं[2] खन प्राक् पुरीषमुद्वपतादिति । तꣳ स खनति वा खानयति वा । यो ऽत एव सदो विमिमीते । यथा त्रीणि छदीꣳषि तिर्यञ्च्येवं प्रक्रमो । यथा त्रीणि छदीꣳष्यन्वञ्च्येवमुदक्प्रक्रमो । ऽपि वा यथा द्वौ भागावुदक् सम्पाद्येयातामेको दक्षिणत इति । तस्य चित्रेणिगतांस्तामयमि[3] । यो ऽत एव प्राङ् द्रुत्वा[4] दक्षिणस्य हविर्धानस्य पुरो ऽक्षमुपरवान्विमिमीते प्रादेशमुखान्प्रादेशान्तरालानथोद्गातारमाहोद्गातरेतामुपरवा-

---

१ Thus only B; all the other MSS., here and infra, l 9, औदुम्बर्यावटं, the second time also the Mantramālā

२ Comp. note १

३ Uncertain reading चित्रेणी° B; चोचेषि° H; चोचोचेषि° T, चोषि° JF; चित्रेषि° P; comp. Padārthanirv p. 310 (No 174.). Keśava-svāmin glosses तस्य सदस मतेपक्षौ लिक्षः खानयति । Read: चोन्वेषि° ?

४ BH ins. अध्वर्यु; Keś. has not read the word, as he glosses · यो ऽध्वर्युः सदसः प्राच्यता etc.

खनन् प्रादेशमुखान्प्रादेशान्तरालान्बाहुमात्रानवाचो ऽधोभिन्नानुपरिष्टादधस्तात्संतृण्णानिति । तांश्च खनति वा खानयति वाथैषां पुरीषं दक्षिणस्य हविर्धानस्यापरेणोपस्तम्भनं निवपति । तं चतुरस्रं खरं करोत्यथैनꣳ सिकताभिराभ्राग्निं करोत्यथोपरवाणां कांस्यादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तया यूपावटं परिलिखति यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धं परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदिमं यूपावटं खनोपरसंमितं प्राक्पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमतिखनतादिति । तꣳ स खनति वा खानयति वा । यावदेवास्याध्वर्युरेष्यति तावदेव प्रतिप्रस्थातौदुम्बरीꣳ स्थूणां यजमानेन संमायाधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः प्रोक्षणीर्बर्हिर्हिरण्यमाज्यस्थालीꣳ स्रुवं मैत्रावरुणदण्डꣳ हिरण्यमुदपात्रमित्येतत्समादायाहैहि यजमानेत्यौदुम्बर्यैषा स्थूणा प्रक्षालिता प्रयच्छा प्रागवटादुपशेते । तां परस्तादर्वाचीं[१] प्रोहति ॥ २९ ॥

दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्यवटे ऽपो ऽवनयति शुन्धतां लोकः पितृषदन इति । यवान्प्रस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति । बर्हिःस्तम्बं व्यतिषज्यावस्तृणाति

१ Thus only Keś, T नामपरस्ताद् (Grantha!), the other MSS. ऽपरस्ताद् ।

पितॄणाꣳ सदनमसीत्यथैनद्धिरण्यमन्तर्धाय[1] स्रुवाहुत्याभिजुहोति पितृभ्यः स्वाहेत्यथैनामुच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳहेत्यथैनां प्राचीनकर्णां मिनोति द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्यथैनां प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति । मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रꣳ दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यनूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीयाथास्ये विगर्ते हिरण्यं निधाय स्रुवाहुत्याभिजुहोति घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहेत्यान्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसानक्तीति ब्राह्मणमथैनामुद्गातृभ्यः प्राक्संस्थां नयेऽन्ति यत्ते विदुरेतस्या उच्छ्रयणमनु प्राचीनकर्णां स्थूणामुच्छ्रयन्ति । तासूदीचो वꣳशानग्रोद्वꣳशेऽध्यस्यन्ति मध्यमं छदिरिन्द्रस्य सदो ऽसीति । विश्वजनस्य छायेति ये अभितो भवतो । नवच्छदि तेजस्कामस्य मिनुयादिति । त्रीणित्रीण्येव सर्वाणि भवन्ति[2] । दक्षिणान्युत्तराणि करोति । स दक्षिणानि[3] दक्षिणान्येवोत्तराणि करोत्यन्तर्वर्तान्करोति यावत्या इति । सन्धिषु दर्भशतान्यभिसमस्यति[4] । ते ऽन्तर्वर्ता । अथैनत्परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो

---

१ अथैन° all, also Ked, except B. which has अथैत°, but comp. page 170,11.

२ Thus DT ; करोति the other MSS also P

३ Thus BHJP ; दक्षिणा TF.

४ समवर्तान् or °वर्तान् BJTH , समर्वितान् FP

नखं प्रादेशमुखान्प्रादेशान्तरालान्बाहुमात्रानवाचो ऽसंभिन्दन्नुपरिष्टादधस्तात्संतृण्णानिति । तान्स खनति वा खानयति वाथैषां पुरीषं दक्षिणस्य हविर्धानस्यापरेणोपस्तम्भनं निवपति । तं चतुरश्रं खरं करोत्यथैनान्सिकताभिराभाञ्जिनं करोत्यथोपरवाणां चात्वालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तया यूपावटं परिलिखति यथान्तर्वेद्यर्धं स्याद्बहिर्वेद्यर्धं परिलिखितं रक्षः परिलिखिता अरातय इदमहं रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदेहीमं यूपावटं खनोपरसंमितं प्राक्पुरीषमुदस्याच्चतुरङ्गुलेनोपरमतिखनतादिति । तं स खनति वा खानयति वा । यावदेवाध्वर्युर्वेद तावदेव प्रतिप्रस्थातौदुम्बरीं स्थूणां यजमानेन संमायाधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य याचति यवमतीः प्रोक्षणीर्बर्हिरुल्पमाज्यस्थालीं स्रुवं मैत्रावरुणदण्डं हिरण्यमुदपात्रमित्येतत्समादायाहेहि यजमानेत्यौदुम्बर्येवा स्थूणा प्रक्षालिता प्रपन्ना प्राग्वटादुपास्ते । तां परस्तादर्वाचीं[1] प्रोक्षति ॥ २९ ॥

दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्यवटे ऽपो ऽवनयति शुन्धतां लोकः पितृषदन इति । यवानवस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति । बर्हिस्स्तम्बं यतिपन्नावस्तृणाति

1 Thus only Ked F मामपरस्तात् (Grantha I), the other MSS. ऽरस्तात् ।

पितृणाꣳ सदनमसीत्यथैनद्धिरण्यमन्तर्धाय[1] स्रुवाहुत्याभिजुहोति पितृभ्यः स्वाहेत्यथैनामुच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳहेत्यथैनां प्राचीनकर्णां मिनोति द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्यथैनां प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति। मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रꣳ दृꣳह प्रजां दृꣳह रायस्पोष दृꣳहेत्यथान्यूनमनतिरिक्तं परिश्रित्योदपात्रमुपनिनीयाथास्यै विशाखे हिरण्यं निधाय स्रुवाहुत्याभिजुहोति घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहेत्यथान्तमन्ववसावयत्यान्तमेव यजमानं तेजसानक्तीति ब्राह्मणमथैनामुद्गातृभ्यः प्राङ्संस्थां तचेष्टन्ति यत्ते विदुरेतस्या उच्छ्रयणमनु प्राचीनकर्णां स्थूणा उच्छ्रयन्ति। तामुदीचो वꣳशानत्यादधति मध्यमं छदिरिन्द्रस्य सदोऽसीति। विश्वजनस्य छायेति ये अभितो भवतो। नवच्छदि तेजस्कामस्य मिनुयादिति। त्रीणित्रीण्येव सर्वाणि भवन्ति[2]। दक्षिणान्युत्तराणि करोति। न दक्षिणानि[3] दक्षिणान्येवोत्तराणि करोत्यन्तर्वर्तान्करोति यास्त्वा इति। सन्धिषु तृणपर्णान्यस्यन्ति[4]। ते अन्तर्वर्ताः। अथैनत्परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो

---

१ अथैन॰ all, also Ked, except B. which has अथेन॰, but comp. page 170,11.

२ Thus BT; करोति the other MSS also F

३ Thus BHJP; दक्षिणा TF.

४ तृणपर्णान् or -पर्णान् BJTH—र्णान् FP

इन्द्रायुमस्तु इन्द्रयो जुष्टा भवन्तु जुष्टय इति । दक्षिणतश्चोत्तरतश्च परिश्रयन्ति । प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिमृज्य दर्भेणं प्रवयति दर्भेण सन्द्यामिन्द्रस्य स्यूरसीतीन्द्रस्य ध्रुवमसीति ग्रन्थिं करोति । तं तदानीमेव विस्रस्यावकुर्वन्तो ग्रन्थीन्हस्तकौशलैर्निखिप्तैर्व्येवमेवोत्तरं द्वार्बाहुमेवमपरे[1] द्वार्बाहू निखितव्यथैनदभिप्राण्यैन्द्रमसीन्द्राय त्वेत्यथ महावेद्या उत्तरादꣳसीयाच्छ्रोणेर्वेद्यन्तेमात्रादप्र प्रतीचः प्रक्रमान्प्रक्रामति । तदाग्नीध्रागारं विमिमीते यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धमथैनत्समुच्छ्रित्य परिश्रयन्ति । तस्य दक्षिणां द्वारं कुर्वन्त्याग्नीध्रागारस्य पार्श्वमानी पश्चारत्निरितेन मार्जालीयो व्याख्यातस्तस्योदीचीं द्वारं कुर्वन्ति ।

॥ २७ ॥ सप्तमः ॥

अथात्रैव तिष्ठन्त्याचत्यभ्रिं यवमतीः प्रोक्षणीर्बर्हिर्दामाज्यस्थालीꣳ स्रुवमधिषवणं चर्माधिषवणे फलके षट् कङ्कण्यावाणꣳ हिरण्यमुदपात्रमिन्धनमादायाहेहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य नीड एतस्मिन्नासादयति । पुरो ऽक्षमितराणि सꣳसाद्यान्यथोपरवाणां[2] कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददइत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तयोपरवान्परिलिखति पूर्वयोर्दक्षिणमेवाग्रे परिलिखितꣳ रक्षः परिलिखिता

---

१ अपरे again (as p. 166) F only, the other MSS, also P, अपरे।

२ सꣳसाद्यान्य॰ BTJP, ॰द्यस्य॰ the other MSS.

अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीति सर्वानेवानुपूर्वं । खनति रक्षोहणो वलगहनो वैष्णवान्खनामीति सर्वानेवानुपूर्वमथैभ्यः पांसूनुद्वपतीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो यो ऽसमानो ऽरातीयति गायत्रेण छन्दसेत्यवबाढो वलग इति यजमानस्याधस्तदं पांसूनुद्वपति पूर्वयोर्दक्षिणात्त्रैष्टुभेन छन्दसेत्यपरयोर्दक्षिणाज्जागतेन छन्दसेत्यपरयोरुत्तरादानुष्टुभेन छन्दसेति पूर्वयोरुत्तरादथैतान्पदपांसूनवस्करे परास्यत्यथ यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्याथैनानवमृशतो ऽध्वर्युश्च यजमानश्च पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशत्युत्तरं[1] यजमानो । ऽथ यजमानः पृच्छत्यध्वर्यो किमत्रेति । भद्रमिति । तन्नौ सहेत्यथाध्वर्युः पृच्छति यजमान किमत्रेति । भद्रमिति । तन्नौ सहेति । यमेवाध्वर्युः प्रजहाति तं यजमानो ऽवमृशति । दक्षिणयोरपरमेवाध्वर्युरवमृशति पूर्वं यजमानो । ऽध्वर्युरथ पृच्छत्यथ यजमानो । ऽपरयोरुत्तरमेवाध्वर्युरवमृशति दक्षिणं यजमानो । यजमानो ऽथ पृच्छत्यथाध्वर्युरुत्तरयोः पूर्वमेवाध्वर्युरवमृशत्यपरं यजमानो । ऽध्वर्युरथ पृच्छत्यथ यजमानो । यजमानः प्रथमः पृच्छति यजमान उत्तमो । ऽथैनानभिमृशति विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा

---

1. Here and infra F अभिमृशति instead of अवमृ° ।

विश्वाराडसि विश्वासां नाष्ट्राणां हन्तेति सर्वानेवानुपूर्वमथैनानद्भिः प्रोक्षति रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति सर्वानेवानुपूर्वमथैष्वपो ऽवनयति रक्षोहणो वलगहनो ऽवनयामि वैष्णवानिति सर्वेष्वेवानुपूर्वमथैषु यवान्प्रस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति सर्वेष्वेवानुपूर्वमथैनान्बर्हिषावस्तृणाति रक्षोहणो वलगहनो ऽवस्तृणामि वैष्णवानिति सर्वानेवानुपूर्वमथैनान्हिरण्यमन्तर्धाय स्रुवाज्येनाभिजुहोति रक्षोहणो वलगहनो ऽभिजुहोमि वैष्णवान्स्वाहेति सर्वानेवानुपूर्वमथास्यैते फलके दीर्घसोमे संतृण्णे भवतो ऽसंतृण्णे एकाहे ते सꣳसृष्टे[१] उपदधाति रक्षोहणौ वलगहनावुपदधामि वैष्णवौ इत्यथैने शङ्कुभिः परिणिहन्ति द्वाभ्यां पुरस्ताद्द्वाभ्यां पश्चाद्द्वाभ्यामभितो ऽनवमर्पणायाथैने प्रदक्षिणं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवौ इत्यथैने बर्हिषा परिस्तृणाति रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवौ इत्यथैने अभिमृशति रक्षोहणौ वलगहनौ वैष्णवौ इत्यथैतयोश्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[२] यत्र प्रतितिष्ठेति[३] वा तूष्णीं वा तिरश्चर्मं फलके पार्ष्णोह्लादयति ॥ २८ ॥

बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति नीड

१ सवृष्टे BTF Keś, Madh Vol I p 459, सꣳस्पृष्टे HJ, Bhav. seems to have read समृष्टे।

२ Thus PHJF, Keś, Mādh., आस्तृणाति B, ॰पस्तृ॰ T

३ Thus HTF, Bh Keś, प्रतिष्ठेति BJP

एतच्चमेत्वादयति । यावस्तु ग्रावाणमभ्यजेत्यथ दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं बर्हिर्मुष्टिमुपनिबध्नाति स्तोकेभ्यो । ऽथ याचति स्फ्यमुदपात्रं चात्वालात्पुरीषꣳ सिकता इत्येतत्समादायाहैति पवमानेत्याग्नीध्रं हुत्वा स्फ्येनोद्धत्यावोक्ष्य चात्वालात्पुरीषꣳ सिकता इति निवपति विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिꣳसीरिति । तं परिमण्डलं धिष्णियं[1] करोत्यथैनꣳ सिकताभिराभ्राम्यिणं करोत्यथाग्नः-सदनं धिष्णियान्निवपति होतुः प्रथमं वह्निरसि हव्यवाहन इति । श्वात्रो ऽसि प्रचेता इति दक्षिणतो मैत्रावरुणस्य । तुथो ऽसि विश्ववेदा इत्युत्तरतो ब्राह्मणाच्छꣳसिन । उशिगसि कविरित्युत्तरतः पोतुरङ्घारिरसि बम्भारिरित्युत्तरतो नेष्टुरवस्युरसि दुवस्वानित्युत्तरतो ऽच्छावाकस्याथ दक्षिणे वेद्यन्ते मार्जालीयं धिष्णियं[2] निवपति शुन्ध्यूरसि मार्जालीय इति । सर्वमेव रौद्रमनुवर्तयत्याग्नीध्रे ऽन्ततो निवपत्युदक्सꣳस्थानतया इत्यष्टौ न्यवाप्सीदित्यथापाष्टावनुदिशति । समाडसि कृशानुरित्याहवनीयमुपतिष्ठते । परिषद्यो ऽसि पवमान इत्यास्तावं । प्रतक्वासि नभस्वानिति चात्वालमसंमृष्टो ऽसि हव्यसूद इति पशुश्रपणमथ षट्मो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठत ऋतधामासि स्वर्ज्योति-

---

१ Instead of धिष्णियं (thus PBT Keś) HF have खरं, J धिष्ण्य खरं; the word धिष्णिय is found here and infra often written धिष्ण्य।

२ om HJF.

रिति ' ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्मसदनमभ्यावैव तिष्ठन्गार्हपत्यमुपतिष्ठते ऽजो ऽस्येकपादित्यहिरसि बुध्निय इति यं प्रहास्यन्तो भवन्ति ' ॥ २९ ॥

अथाचैव तिष्ठन्संप्रैषमाह स्तृणीत बर्हिः प्र मतं यच्छत समपिमताक्कयध्वमाप्तावं यज्ञलऽ स्तृणीत मद्दीषविधाने यजते ' स्तृणीतोप्सेतर्धाष्णो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय पत्नीशाले मध्यादाग्नीध्राध्यमधिश्रय प्रतिमच्यातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहरेति ' यथासंप्रैषं ते कुर्वन्त्यथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिं स्तृणाति देवबर्हिरूर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति ' तं यजमानं पुरस्तात्प्रत्यञ्च[1] स्तृणन्तो यन्त्यंपान्तःपात्रं पृषदाज्यवन्त्याज्यानि गृहीत्वा परिक्रम्याभ्य उपसद्य ब्रह्मणे राजानमनुप्रयच्छति ' तं ब्रह्मादायोत्तरत[2]स्तिष्ठन्नुत्तरतस्तिष्ठन्नग्निमन्वायत्युदग्ने[3] तिष्ठानु मादेहि विश्वैर्देवैर्यज्ञियैः संविदानः । सुवर्गे लोके यजमानं हि धेहि मासे[4] स्वाहा स्वाहेत्य याजुषेन इत्यथाभ्याद्धातीर्यो[5] प्रणयनीयसुपोपयमनीः कल्पयन्ति चात्वालात्संमार्गेभ्यःसमितेषु संप्रस्कन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय

१ Thus TH; प्रत्यंचः PJF, प्रत्यंचऽ B.

२ तिष्ठन्नुत्तरतस् om. TJF; according to the Prayoga and the Vivarana it is to be read.

३ ॰न्वायत्य उद्॰ PH, the Rc seems not to be found in any known Samhita.

४ Corrected, मासेस्वाहा MSS.

५ Thus TP; चयाद्धा॰ F, चयाद्धा॰ the other MSS.

स्रुचि चतुर्गृहीतं गृहीत्वा आग्नीध्रीये वैसर्जनानि[1] जुहोति त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहेति। स्रुवेणाज्यं प्रस्कन्दयति जुषाणो अप्तुराज्यस्य वेतु स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा अग्निमादायाग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति। विहृत्यायामुपगच्छन्तो[2]। होतुर्वंशं यन्त्येव वै भवति प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनांसि प्रवर्तयन्तीति[3]। पश्चात्तु प्राज्ञं भवति पूर्वं तेनाग्निमन्वञ्चन्त्यथाग्निप्रथमाः प्रतिपद्यन्ते ऽन्वयाच्या याज्यैवाग्न्यावपणी[4] वाचयति। पूर्वया द्वारोपनिष्क्रामन्त्ययं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं शत्रूञ्जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसाताविति। उत्तरेण सदः परीत्याग्नीध्रागारे ऽग्निं निधाय तथवत्यथाग्नीध्रे जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्येवैतद्यायोवाचयत्यꣳ[5] समुपसाद्योपातियन्ति राजा आग्नेय्यां ह्वनीये स्रुवाहुतिं जुहोत्युरु विष्णो

---

१ ०सर्जनं BTJ ; but comp. TS. VI 3 2

२ अनूच्चायामु० BF.

३ इति om BTJ, ०प्रवर्तयन्त चक्रा० T

४ Thus F; the other MSS यायो।

५ Thus BJHP; यायोवाचयत्यु० T, याम्योवाचयत्ता F; यायोवाचयानि Keś. The remarkable यायोवाचयम् occurs several times in the Karmānta sūtra. The Pronoun एतत् seems also to point to a neuter, but comp Bh. and Keś एतदिति श्रौतकर्मोपकरणार्थम् ।

विक्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति' ॥ ३० ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठन्ती'ध्मं प्रोक्षति' वेदिं प्रोक्षति' बर्हिः प्रोक्षति' बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति' पञ्चविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यै'क्षवी विधृती तिरश्ची सादयति' विधृत्योराश्ववालं प्रस्तरं' प्रस्तरे जुहूं' बर्हिषीतरा' एता असदन्निति समभिमृश्याथाप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदमित्यथ दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणात्यदित्याः सदो ऽसीत्य'-दित्याः सद आसीदेति कृष्णाजिने राजानमथैनं देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभदिति' संप्रदायोपतिष्ठत एतत्त्वꣳ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्सह प्रजया सह रायस्पोषेणेति' नमो देवेभ्य इति प्राञ्चमञ्जलिं करोति' स्वधा पितृभ्य इति दक्षिणा[1]न्यञ्चत्य'थोपनिष्क्रामतीदमहं निर्वरुणस्य पाशादित्य'थाहवनी-यमुपतिष्ठते सुवरभिविख्येषं वैश्वानरं ज्योतिरित्य'थ यजमा-नमवान्तरदीक्षां विसर्जयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानीत्य'थैनꣳ सꣳशास्ति

१ Thus DJ, Bh ; दक्षिणाम्यञ्चत्योप° H, दक्षिणमञ्चत्योन्याथोप° F, दक्षिणं-जान्वाचत्यथोप° T; दक्षिणाम्यंचमथोप° P.

प्रग्नीय मेखलां ॥ मुष्टी मारभ्य मैत्रावरुणाय दण्डं प्रयच्छ यजमान इति वाचयतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयन्निति स एवमेवैतत्सर्वं करोत्यथ यूपाहुतिꣳ हुत्वा यूपं यजुषा करोति यूपावटं यजुषा करोति तदेतद्यूपावटान्तम् ॥ ३१ ॥ अष्टमः ॥

अथ यूपस्याहुता यूपमुच्छ्रयति ऊर्ध्वं यूपमुच्छ्रित्याग्नीषोमीयं पशुमुपाकरोति तस्य प्रसिद्धं वपया चरित्वा वपाश्रपणी अनुप्रहृत्य अनुत्क्रम्य चात्वाले मार्जयन्ते ऽथ यो दीक्षितः सुभक्तं याचति तमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यथापस्तदभ्येति¹ नाम्नमा वहन्तीरस्येति स स्थावराणां गृह्णाति प्रतीपं तिष्ठन्गृह्णाति छायायै चातपतश्च संधौ गृह्णाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माꣳ आविवासति हविष्माꣳ अस्तु सूर्य इत्यथैना आदाय प्रदक्षिणमावृत्य मध्ये ऽꣳसे निधायेतेनैव यथेतमेत्योत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमौपसदायां वेद्याꣳ सꣳस्पृष्टाः² सादयत्यग्नेर्वो ऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्तेत्यथ पशुपुरोडाशं निर्वपतीडान्तः पशुपुरोडाशः संतिष्ठते पत्नीसंयाजान्तः पशुरिदृष्यशृतान्त इत्येके ॥ ३२ ॥ नवमः ॥

---

1. नदेति only T and Madh., यदेति the other MSS. also F and Ked.

2. Some of the MSS. have here and elsewhere सꣳस्पृष्टाः।

अथ वसतीवरीः परिहरिष्यन्नाह व्यपक्रामत मा वोऽभिपरिहारिषमिति[1] यजमानायतने यजमान उपविशति[1] जघनेन गार्हपत्यं पत्न्यैना आदाय दक्षिणया द्वारोपनिर्हृत्य सव्ये ऽꣳसे निधाय दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्य दक्षिणतो यूपेन सꣳस्पृष्टाः सादयतीन्द्राग्नियोर्भागधेयी स्थेत्यथैना आदायोदङ्ङाहृत्य दक्षिणे ऽꣳसे निधायैतेनैव यथेतमेत्य जघनेन गार्हपत्यमौपसद्यायां वेद्याꣳ सꣳस्पृष्टाः सादयति मित्रावरुणयोर्भागधेयी स्थेत्यथैना आदाय पूर्वया द्वारोपनिर्हृत्य दक्षिण एवाꣳसे निधायोत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याहृत्योत्तरतो यूपेन सꣳस्पृष्टाः सादयति विश्वेषां देवानां भागधेयी स्थेत्यथैना आदाय प्रदक्षिणमावृत्य सव्ये ऽꣳसे निधायैतेनैव यथेतमेत्य जघनेनाग्नीध्रीयं धिष्णियꣳ सꣳस्पृष्टाः सादयति यज्ञे जागृतेति[1] ॥ ३४ ॥

अथ पयाꣳसि विशास्ति या सन्नाय्यधुक् तस्यै दधिघर्माय दधि कुरुत या यजमानस्य तस्या आमिक्षायै या पत्न्यै तस्या आशिरे पयश्च सक्तूꣳश्च कुरुत श्वस्तनमादित्यग्रहाय दधि कुरुत पुरोडाशीयानि पिष्टानि कुरुत धाना हारियोजनीः कुरुत चतुरो 'ऽभूणाꣳस्तीनुदचनानयुज' एकधनाꣳस्त्यवमाने-

१ Most of the MSS. read °रिषम° ।

२ Thus PHBJ, Bh., Mantramālā, Keś., सदंयमान् F, Prayoga I.O., Padārthanirṇ., सदयान् T

पूर्वार्धे खरस्य दक्षिणाभिरश्मुपांशुसवनं निदधाति दक्षिणत उपांशुपात्रमुत्तरतो ऽन्तर्याम पात्रमुपसंस्पृष्टे असंस्पृष्टे अभिचरतः[1] पश्चाद्द्विदेवत्यपात्राण्यन्वञ्च्यैन्द्रवायवपात्रं मैत्रावरुणपात्रमाश्विनपात्रं[1] पश्चाच्छुक्रामन्थिनोः[1] प्रत्याञ्चं दक्षिणं शुक्रपात्रमुत्तरं मन्थिपात्रमर्षेण मन्थिपात्रमृतुपात्रे[1] पश्चादाग्रयणस्थालौ[1] दक्षिणस्यां खरश्रोण्यामादित्यस्थालीं सोपशयामुत्तरस्यां खरश्रोण्यामुक्थ्यस्थालीं सोपशयामुत्तरस्य हविर्धानस्यापेणोपस्तम्भनमनुपोसे ध्रुवस्थालीमन्तरेण पूतभृदाधवनीयौ समक्षान्दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशं दशापवित्रे इति निदधात्यथैनान्यभिमृशत्यग्निर्देवता गायत्री छन्द उपांशोः पात्रमसीति दशभिर्दशायाध्वर्युः स्वं वा बिभर्ति कर्माणि चानुप्रेक्षमाण आस्ते[1] ॥ २ ॥

अथ यत्र होतुरभिज्ञामाज्यभक्षया हस्तप्रशुराग्निरधाव्युलिपः। अपोजि मां सपश्च रथो द्यावामर्त्यो माध्वी मम श्रुतं हवमिति तमध्वर्युः स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः। शृणोत ग्रावाणो विदुषो नु यज्ञं शृणोतु देवः सविता हवं मे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा सर्पिरादाय संप्रेष्यमाणाह इध्म होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन एत नेष्टः पत्नीमुदानयाग्नीद्धोतुश्चमसेन च मा वसतीवरीभिश्च चात्वाले प्रत्युपतिष्ठस्वेति[1] यथासंप्रैषं ते

[1] Thus PTH Ke.; °णौ BJP.

चतुर्भ्यो नयति नेष्टा पत्नीं पावेजनं कलशमादाय प्रेहुदेहीत्येतेन निगदेनाथैनां पूर्वया द्वारोपनिष्क्रमय्योत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याणीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यथापस्तद्यन्त्यथाप्सु बर्हिः प्रास्याभिजुहोति देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भाग स्थ स्वाहेति मैत्रावरुणचमसेनाञ्जलिमपश्रावयति कार्षिरस्यपापां मृधमिति बर्हिषी अन्तर्धायोन्नयति समुद्रस्य वो ऽक्षित्या उन्नय इत्येकधनान्गृह्णातीन्द्राय वो जुष्टान्गृह्णामीति वा तूष्णीं वाथ पन्नेजनीर्गृह्णाति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीर्गृह्णामीति ताः पत्नी संप्रदायोदायनयत्यन्वारब्धे यजमान एतेनैव यथेतमेत्य चात्वाले होतृचमसं च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति पूरयति होतृचमसमनु मैत्रावरुणचमसे प्रस्कन्दयत्यथ होतृचमसं वसतीवरीर्मैत्रावरुणचमसमिति चयꣳ संनिधाय प्रतिस्तोमं प्रचरण्या समनक्ति सं ज्योतिषा ज्योतिरङ्क्ताꣳ सꣳ शुक्राः शुक्रेण सꣳ हविषा हविः सं यज्ञपतिराशिषेत्यथैना पत्न्येतेनैव यथेतमेत्य जघनेन गार्हपत्यमौपसदायां वेद्याꣳ संस्पृष्टाः सादयति तूष्णीम् ॥ ३ ॥

अथाध्वर्युर्होतुरुत्काशमेति होताध्वर्युं पृच्छत्यध्वर्यो ऽवेरपा३ इत्युतेमनन्नमुरुतेमाः पश्येतीतरः प्रत्याहाथ यद्यग्निष्टोमो जुहोति यमग्ने पृत्सु मर्त्यमावो वाजेषु यं जुनाः ।

स यन्ता ध्रुवतीरिषः स्वाहेत्यथ यद्युक्थ्य एतेनैव यजुषा मध्यमे परिधौ निमार्ष्ट्यथ यद्यतिरात्र एतदेव यजुर्वदन्प्रपद्यते । यज्ञक्रतूनां व्यावृत्त्या इति ब्राह्मणमथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे उपानिहत्य नीड उत्सादयत्यथोदुम्बराधवनीयं सर्वा एव मैत्रावरुणचमसीयाः पर्यस्यति । तृतीयं वसतीवरीणामवनयति । तृतीयमेकधनानां । पुरो ऽर्धं वसतीवरीः सादयति । पश्चादर्धमेकधनानामथान्तरेण हविर्धाने उपविश्यौदुम्बरं पात्रं चतुःस्रक्ति याचति । तस्मिन्बर्हिषी अन्तर्धाय प्राजापत्यं दधिग्रहं गृह्णात्युपयामगृहीतो ऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्यो ऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्य इत्यपोद्धृत्य बर्हिषी अथैनमादायोपोत्तिष्ठति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति । पूर्वया द्वारोपनिष्क्रामत्यपेन्द्र द्विषतो मनो ऽप जिज्यासतो जह्यप यो नो ऽरातीयति तं जहीत्यथैतमाहवनीये जुहोत्यन्वारब्धे यजमाने प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अच्छिद्रा[1] अजायन्त

---

1 Conjecturally. The best MSS. (BJ) and the Mantramālā read अक्खिद्रा which seems to mean: akhkhidrā, thus P. 'By adding a little stroke we get the reading I have put in the text on account of the usual form the verb छिदति has in the Taittirīy. texts ( छिद्यति ) Comp TS. III 5, 8, 0.

तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहेत्यथास्य संचालनमन्तःपरिधि निनयति' धेनुवरं[1] वानडुद्वरं वा दद्यादिति ह स्माह बौधायनो' द्वादश पष्ठौहीरित्याञ्जौगविरृषभमिति कात्यो' मणिकुण्डलमिति राथीतरः' ॥ ४ ॥ प्रथमः ॥

अथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य चर्मणि निदधाति' तासु निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुत आयुर्मे तर्पयतेति प्रतिपद्य गणा मे मा वितृषन्नित्याततां यजमानाय संप्रदायाथैतेषां ग्राव्णां यः सुजन्तुरिव तमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयते ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमित्यथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपाꣳशुसवनमभि मिमीत इन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वादित्यवत इन्द्राय त्वा विश्वदेव्यावत इति' पञ्चकृत्वो यजुषा' पञ्चकृत्वस्तूष्णीं' दशकृत्वो मिमानो ऽथैवैताꣳ राज्ञो मिमीते' ऽथातिरिक्तꣳ राजानमुष्णीषेण विग्रथ्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिष्ठत्य[2] नीड उत्सादयत्यथ मितꣳ राजानꣳ होतृचमसीयाभिरुपसृजति श्वात्रा स्थ वृत्रतुरो

---

१ धेमू॰ H, but comp. IV 11 (page 127, 14)

२ Thus BJTF, उपावहृत्य H

राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबत्विति अथैनꣳ संप्रयौति यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोच इति ' तिरश्चमंशुफलके अभिमृशति धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टमित्यथ इद्धीवापयत्यवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताꣳ सवनाय सोममिति ' संहृतस्य राज्ञः प्रतिप्रस्थाता सव्ये पाणौ षडꣳशून्त्सचते ' ऽथैतेनैव पाणिनोपांशुपात्रमादत्ते ' ऽथोपसृष्टꣳ राजानमष्टौ कृत्वो ऽभिषुणोति ' सो ऽꣳशौ स्कन्ने वाचयत्या मास्कान्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्यथाञ्जलिनोपहन्ति[1] तूष्णीमन्तर्दधाति प्रतिप्रस्थाता ' प्रथमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्वाचस्पतये पवस्व वाजिन्निति ' सप्त एतावꣳशू ' तथोपसृष्टꣳ राजानमेकादशकृत्वो द्वितीयमभिषुणोति ' नाचाꣳशौ स्कन्ने वाचयति ' तथाञ्जलिनोपहन्ति तूष्णीमेवान्तर्दधाति प्रतिप्रस्थाता ' मध्यमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्वृष्णो अꣳशुभ्यां गभस्तिपूत इति ' सप्त एतावꣳशू ' तथैवोपसृष्टꣳ राजानं द्वादशकृत्वस्तृतीयमभिषुणोति ' नैवाचाꣳशौ स्कन्ने वाचयति ' तथैवाञ्जलिनोपहन्ति तूष्णीमेवान्तर्दधाति प्रतिप्रस्थातोत्तमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्देवो

१ About the interpunction of this passage I am not sure.

देवानां पवित्रमसि येषां भागो ऽसि तेभ्यस्त्वेति । सचत एतावच्छः । अथैनमुपांशुसवनं[1] दशापवित्रेण परिमृज्य पूर्वार्धे खरस्य दक्षिणाशिरसं निदधात्यथ प्रतिप्रस्थातुर्ग्रहमादत्ते स्वांकृतो ऽसीति । ग्रहमपयच्छत्यथैनमवेक्षते[2] मधुमतीर्न इषस्कृधीत्यथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्यथैनमादायोपोत्तिष्ठति मनस्त्वाष्ट्वित्युर्वन्तरिक्षमन्विहीत्यथाहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा त्वा सुभवः सूर्याय स्वाहेति । कृत्वानुप्राणिति । वाचयति भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहीत्यथैनमवाचीनमवमृज्य प्रतीचा नीचा पाणिना मध्यमे परिधौ निमार्ष्टि देवेभ्यस्त्वा मरीचिपेभ्य इत्यथ प्रदक्षिणमावृत्यापयष्टाभ्यां ग्रहस्य संस्रावमवनयत्येष ते योनिरित्यथैतस्मिन्नुपांशुपात्रे ऽंशुं प्रास्यत्यथैनं[3] दक्षिणत उपांशुसवनेन संस्पृष्टं सादयति प्राणाय त्वेति व्यानाय त्वेत्युपांशुसवनं प्रत्यभिमृशते । ॥ ५ ॥

यावदेवाध्वर्युर्ग्रहेणैति तावदेव प्रतिप्रस्थाता राजन्येवांशूना दौहावपिसृजति यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति यत्ते सोम यत्ते सोमेत्यथाभिषोतारः सर्वा एव राजानं पर्युपविशन्ति । पश्चात्प्राङ्मुखो ऽध्वर्युरुपविशति । तस्य दक्षिणं पाकमस्तु यजमानो । दक्षिणतः

---

1 Thus (अथैनमु॰) all MSS.

2 ग्रहमपयच्छत्य॰ TH, the other MSS परसुप॰ ।

3 Thus TF Ked, अथैनमु B, अथैनम् PH.

प्रतिप्रस्थातोत्तरत आग्नीध्रो ऽन्तरेण प्रतिप्रस्थातारं चाग्नीध्रं च यश्चतुर्थो ऽभिषुणोत्यथोन्नेतारमाहाहरोपसृजेत्युपसृजत्युन्नेताधवनीयादुदचनेनोपर्यर्धे होतृचमसे ऽꣳशून्परिस्रावयन्ति प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब निष्परेत्येष निग्राभ । आप्याययन्ति । व्यपोहन्ते । ऽभिषुण्वन्ति । निग्राभमुपयन्त्याप्याययन्ति । व्यपोहन्ते । ऽभिषुण्वन्ति[1] निग्राभमुपयन्त्याप्याययन्ति । व्यपोहन्ते । ऽभिषुण्वन्ति[1] । स चतुर्थे निग्राभमुपयन्त्यथैनꣳ सुसंभृतꣳ संभरणाꣳ संभृत्योदेव उत्प्रयच्छति । तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत । एवं तृतीय । ऋजीषमन्ततो दशापवित्रेण परिवेष्योदेव उत्प्रयच्छति । तमुन्नेताधवनीये[2] विवाच्य प्रतीच्य दक्षिणस्य हविर्धानस्यान्तरेऽणोपावहत्य[3] चर्मणि निदधाति । तस्मिन्संमुखान्ग्रावणः कृत्वा चतुर्धेनदृजीषं ग्रावमुखेभ्यो व्यपोहत्यथोद्गाता वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपस्पृश्य प्राञ्चं ग्रावाणं द्रोणकलशमभ्यूहति । तस्मिन्नुदीचीनदशं दशापवित्रं वितन्वन्ति । तेन तथा कृतेनादित्यस्योदयमाकाङ्क्षन्त । उदित आदित्ये ऽन्तर्यामं गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतो ऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे

1 The passage निग्राभमु ..... ऽभिषुण्वन्ति, found in PHF, is missing in BTJ

2 Thus JP तमुन्नेता॰ TFB

3 Thus BJTP, उपानिहृत्य H, उपानिहृत्य F

मघवन्मादयस्वेति । स्वांकृतो ऽसीति पवमपयच्छत्यथैनमवेक्षते[1] मधुमतीर्न इषस्कृधीत्यथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्यथैनमादायोपोत्तिष्ठति मनस्त्वाष्ट्वि-त्युर्वन्तरिक्षमन्विहीत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा त्वा सुभवः सूर्याय स्वाहेति । ऊत्वाम्पानिति । वाचयति धूरसि श्रेष्ठो रश्मीनामपानदा अपानं मे पाहीत्यथैनमूर्ध्व-मुन्मृज्य मापोत्तानेन[2] पाणिना मध्यमे परिधावुन्मार्ष्टि देवेभ्यस्त्वा मरीचिपेभ्य इत्यथ प्रदक्षिणमावृत्याग्रयणस्थाल्यां ग्रहस्य संस्रावमवनयत्येष ते योनिरित्यथैनमुत्तरत[3] उपांशुसवनेन संस्पृश्य मादयाप्यपानाय त्वेति । व्यानाय त्वेत्युपांशुसवनं प्रत्यभिमृशति । ऽथोऽन्तर्यामाद्यायमन्तः संततमानयोपांशुं ग्रहा-न्यहीष्यामीत्यथादत्त ऐन्द्रवायवपात्रं । तदेतद्द्राप्यावत्परिधौवि भवति । तेन ग्रह्णात्यनिपवमानस्य राज्ञ आ वायो भूष शुचिपा इत्यनुद्रुत्योपयामगृहीतो ऽसि वायवे त्वा जुष्टं गृह्णामीत्यथैनमपयत्य[4] पुनरेवोपयच्छतीन्द्रवायू इमे सुता इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्रवायुभ्यां त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः सजोषाभ्यां त्वेत्यथादत्ते मैत्रा-वरुणपात्रं । तदेतत्पिलकावद्भवति[5] । तेन ग्रह्णात्यनिपवमानस्य

---

१ उपयच्छत्य° BTF Keś, अपय° HJ  २ एव ins. FJ.

३ अथैनमु° TF Keś, अथैनदु° BHJP.

४ अपयत्य H Bh., Keś, अपनयत्य B, अपनयत्यथ F, उपयत्य JT

५ Thus HJ Bh, Keś, पिलिकावत् P, पलकावद्द (sic, पुत्र°) B, पलका... F

राज्ञो ऽयं वां मित्रावरुणेत्यनुद्रुत्योपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति । बर्हिषी अन्तर्धाय पयसा श्रीणात्यपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य सादयत्येष ते योनिर्ऋतायुभ्यां त्वेत्यथोपातीत्याश्विनपात्रꣳ शुक्रपात्रमादत्ते । तदेतद्वैल्वं वा पालाशं वा स्रक्त्यं भवति । तेन गृह्णात्यतिपवमानस्य राज्ञो ऽयं वेनश्चोदयदित्यनुद्रुत्योपयामगृहीतो ऽसि शण्डाय त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्वीरतां पाहीत्यथादत्ते मन्थिपात्रं । तदेतद्वैकङ्कतꣳ स्रक्त्यं भवति । तेन गृह्णात्यतिपवमानस्य राज्ञस्तं प्रत्नथेत्यनुद्रुत्योपयामगृहीतो ऽसि मर्काय त्वा जुष्टं गृह्णामीति । बर्हिषी अन्तर्धाय सक्तुभिः श्रीणात्यपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य सादयत्येष ते योनिः प्रजाः पाहीत्यथादत्त आग्रयणस्थालीं । तया गृह्णात्यतिपवमानस्य राज्ञो ये देवा दिव्येकादशस्थेत्यनुद्रुत्योपयामगृहीतो ऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीत्यथैनां[1] त्रिरभिहिङ्करोति ॥ ६ ॥

हिं हिं हिं सोमः पवते सोमः पवते सोमः पवते ऽस्मै ब्रह्मणे पवते ऽस्मै क्षत्राय पवते ऽस्मै विशे पवत इषे पवत ऊर्जे पवते ऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते ऽस्मै सुन्वते यजमानाय पवते मह्यमित्युपांशुसवना ज्यैष्ठ्याय पवत

१ Thus PH, अथैन BIT, अथैनत् F, अथैन Keś

इत्युच्चैरेवैनमधिवदत्याग्रयणो ऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणेति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्युपब्दिमतो ऽत ऊर्ध्वं यथान्तर्ग्रहाति । द्विग्रहस्य गणिनो गृह्णन्त इति हृणवत्यर्थां भाक्षव्यतो गृह्णीयादिति ब्राह्मणमेयादृत्त उक्थ्यस्तोत्रौ । तया गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतो ऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वोक्थायुव इत्यथादत्ते ध्रुवस्थालीं । स आह ये पूर्वया द्वारा प्रापत्सत[1] प्राञ्चस्ते निष्क्रामन्तु ये ऽपरया प्रत्यञ्चस्ते मा वो ऽभिपरिहारिषमिति । जघनेनाभियोद्भ्योऽद्वकामभिपरिहृत्योत्तरत उदयच्छति[2] मूर्धानं दिवो अरतिं पृथिव्या इत्यनुद्रुत्योपयामगृहीतो ऽस्यग्नये त्वा वैश्वानराय जुष्टं गृह्णामीत्यथैनमधिवदते ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमो ऽच्युतानामच्युतक्षित्तम इत्यथैनदद्याहृतं[3] प्रतिपर्याहृत्योत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोन्ने सादयत्येष ते योनिरग्नये त्वा वैश्वानरायेति । ध्रुवेण राजानं परिदधात्यथोपर्यर्धे द्रोणकलशे परिस्रु पात्रं प्रास्य द्रप्सानु-

---

१ Thus emended  All MSS also P Bh., Mantramāla, Prayoga, IO, Padārthanirv. have प्रापत्सत, only T, Keś प्रापद्यत ।

२ Thus PBTH Bh , उद्यच्छ॰ F Keś

३ अथैनं instead of अथैनद् T, अथैनदाहृत P (pr m.), अथैनदा॰ P (sec m).

मन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इत्यथोन्नेतारमाहातिरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान्ग्रहीष्यामीति । तच्छुल्बोन्नेता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन्वा राज उदचनानानयत्यथातिरिक्ते पूतभृति पवमानस्य ग्रहान्गृह्णात्युपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतमथोन्नेतरित्याह प्राञ्चꣳ राजानं पूतभृततमभि संपवयताद्दशाभिराधवनीयं सृष्टा न्युब्जतादिति । स तथा करोत्यथाप उपस्पृश्य बर्हिषी आदायोपनिःसर्पति । तं निःसर्पन्तमन्वारभत उद्गातोद्गातारं प्रस्तोता । प्रस्तोतारं प्रतिहर्ता । प्रतिहर्तारं यजमानो । यजमानं ब्रह्मा[१] । प्रतिप्रस्थाता प्रथमः सर्पति । तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति ॥ ७ ॥

अग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशंभूः । स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम स्वाहेत्येनयाध्वर्यू जुहुतो । यथावेदमितरे जुह्वत्यथोदञ्चोऽभि पवमानꣳ सर्पन्ति । प्रह्व एवाध्वर्युः प्रथमो बर्हिषी धुन्वानः[२] सर्पति वाग्यता अप एतुङ्गा देवेभ्यो यशो मयि दधतो प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यथास्तावे यथायतनमुपविशन्त्यथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक्सामयो-

---

१ F (not BRP) ins प्रह्वां ; T ins च ।

२ Thus B, the other MSS more or less corrupt: धुवानः HF, धवान P.

स्पस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वाथोपाकरणं जपति वायुर्हिंकर्ताग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधत्वोꣳ स्तुध्वमिति। स एष त्रिवृद्बहिष्पवमानो भवति। तस्य पञ्चम्यां प्रस्तुतायां वाचयति श्येनो ऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथ दशहोतारं व्याचष्ट। उद्गीते साम्नि संप्रेषमाहाग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातः पशुरन्तिके ऽस्त्विति। यथासंप्रैषं तौ कुरुतो[1]। ऽथाप उपस्पृशाहैहि यजमानेति। पूर्वया द्वारा हविर्धानं प्रपाद्य यन्तꣳ राजानमुपतिष्ठते विष्णो त्वं नो अन्तम इत्यथादत्त आश्विनपात्रं। तदेतद्द्वयस्त्रि भवति। तस्मिन्गृह्णाति द्रोणकलशात्परिप्लुता पात्रेण या वां कशेत्यनुद्रुत्योपयामगृहीतो ऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिर्माध्वीभ्यां त्वेत्यथाप उपस्पृशाहैहि यजमानेत्याहवनीयं हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा सप्तहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथावकाशैश्चरति परिभूरग्निं परिभूरिन्द्रमित्येतेनानुवाकेनाथ प्रचरण्यां भवन्तो गृहीते। ऽथैष आग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं[2] धिष्णियेष्वङ्गारान्विहरत्यथ पुरस्तात्प्रत्यङ्ङासीनो विहृतान्धिष्णियान्व्याघारयति यथा-

१ कुर्वतो JF Ke4.
२ Thus JBHP, ( Ke- यथायथं ), आनुपूर्वं the other MSS.

ऽप्नत्याक्रतव इत्युपविशत्युचिवन उदुदनय गेयमित्यथेमे समीक्षेते पातं मा द्यावापृथिवी अद्याह्न इत्यथ दक्षिणार्धं परेक्षन्त आगन्त पितरः पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेत्यथोत्तरार्धं परेक्षन्त। उदकाꣳस्यताया इति। ॥ १० ॥

अथेमावध्वर्यू आहवनीयमभ्येत्यैवमेवाहवनीयमुपतिष्ठेते। एवमाग्नीध्रीयमेवꣳ होत्रीयमेवं प्राखावाहृत्य जपत। एवं प्रदक्षिणमाहृत्य पूर्वे द्वारौ सदसः संमृशत। एवꣳ सदः प्रपद्येते। एवमासनाभ्यां बहिःसदसं तृणे निरस्यतो। दक्षिणमेवाध्वर्युर्दामांडं ध्रियमाण उपविशत्युत्तरं प्रतिप्रस्थाताविमे समीक्षेते। एवं दक्षिणार्धं चोत्तरार्धं च परेक्षेते। उदकाꣳस्यताया इत्यथेमे वषट्कर्तार आहवनीयमभ्येत्यैवमेवाहवनीयमुपतिष्ठन्त। एवमाग्नीध्रीयं। तमुत्तरेण परियन्त्येवꣳ[2] होत्रीयमेवं प्राश्य। आहृत्य जपन्त्येवं प्रदक्षिणमाहृत्य पूर्वे द्वारौ सदसः संमृशन्त्येवꣳ सदः प्रपद्यन्ते। ऽपरेण धिष्णियानुत्तरेणाच्छावाकस्य[1] धिष्णियं परीत्यैवमासनेभ्यो बहिःसदसं तृणानि निरस्यन्त्येवꣳ स्वꣳस्वमेव धिष्णियमनुपविशन्त्येवमिमे समीक्षन्त। एवं दक्षिणार्धं चोत्तरार्धं च परेक्षन्त। उदकाꣳस्यताया इत्यथेमे सर्व उद्गातारो ब्रह्मा सदस्य इत्यवषट्कर्तार आहवनीयमभ्येत्यैवमेवाहवनीयमुपतिष्ठन्त। एवमाग्नीध्रीयं। तमुत्तरेण परियन्त्येवꣳ होत्रीयमेवं

---

१ BF ins च।

२ All the MSS. read here and infra पर्यन्ति।

यथावेदमितरे जुह्वत्यथाश्रावयत्याश्रावयास्तु श्रौषडग्निर्हि[1] दैवीनां विशां पुरएतायꣳ सुन्वन्यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳ हिमा द्वा यू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति' समानं कर्मा वपायै' वपया प्रचर्य वपाश्रपणी अनुप्रहृत्य संसुक्रम्य चात्वाले मार्जयन्तेऽथ यजमानमुत्करे स्फ्यविघनामुपस्थापयति ॥ ९ ॥

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृत स्थ ते मास्मिन्यज्ञ उपह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तामित्यथ नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुपतिष्ठते' नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं' नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमथ प्राङाहृत्य जपति दृढे स्थः शिथिरे समीची माꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहसस्पातु वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्य इत्यथ प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संस्पृशति देवी द्वारौ मा मा संताप्तमित्यथ सदः प्रपद्यते नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या इत्यथापमाद्दक्षिणःसदसं तृणं निरस्यत्यपे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद यो

१ Comp IV 6 (page 116, 13)

न्युप्तेऽन्ते: स यदु ह वा अन्यत्रमभिजुहोति मम त इत्याग्नीध्रे[1]ऽन्ततो जुहोति यदु वै स्वाहास्वाहेति स्वाहेत्येवान्तत आग्नीध्रीये[2] जुहोत्युदकमङ्गुलतायां इत्यथोत्तरस्य हविर्धानस्य ध्रुवके प्रचरणीं सादयत्यथ शांकाग्निनेव यथा पृष्ठ्याः तृणानि संततां गार्हपत्यादाहवनीयात् ॥ ८ ॥ द्वितीयः ॥

अथाध्वर्यू रशनाहस्तौ यूपमभ्येत्योदञ्चौ पूर्वाङ्ग् रशनां नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति स्रुवेण यूपमुत्सृज्याग्नेयं पशुमुपाकरोति समानं कर्मा प्रवरात्प्रतिग्निहोतारं वृणीते ऽपाश्रावयत्यो आश्रावयास्तु श्रौषडग्निराध्वर्यू आध्वर्यवादित्ययं चासौ च मानुषाविति प्रतिप्रस्थातुर्नाम गृह्णात्यथाश्रावयत्यो आश्रावयास्तु श्रौषण्मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादित्यसौ मानुष इति मैत्रावरुणस्य नाम गृह्णात्यथाश्रावयत्यो आश्रावयास्तु श्रौषडिन्द्रो ब्रह्मा ब्राह्मणादित्यसौ मानुष इति ब्राह्मणाच्छंसिनो नाम गृह्णात्यथाश्रावयत्यो आश्रावयास्तु श्रौषण्मरुतः पोत्रादित्यसौ मानुष इति पोतुर्नाम गृह्णात्यथाश्रावयत्यो आश्रावयास्तु श्रौषड् ग्रावो नेष्ट्रादित्यसौ मानुष इति नेष्टुर्नाम गृह्णात्यथाश्रावयत्यो आश्रावयास्तु श्रौषडग्निराग्नीध्रादित्यसौ मानुष इत्याग्नीध्रो नाम गृह्णाति तेषां प्रवृतःप्रवृत एव प्रवृताहुतीर्जुहोति जुष्टो वाचो भूयासमृचा स्तोमं समर्धय सूर्यो मा देवो देवेभ्यः पात्वित्येताभिरध्वर्यू जुह्वतो

---

1 आग्नीध्रीये PBH comp VI. 22 (page 193, 14)

2 आग्नीध्रे IJ

यथावेदमितरे जुह्वत्यथाश्रावयत्याश्रावयास्तु श्रौषडग्निरिदं[1] दैवीनां विशां पुरएतायꣳ सुम्नयजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳ हिमा द्वा यू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति । समानं कर्मा वपायै । वपया प्रचर्य वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते । ऽथ यजमानमुत्करे स्फ्यविघनानुपस्थापयति ॥ ९ ॥

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृत स्थ ते मास्मिन्यज्ञ उपह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तामित्यथ नमो ऽग्नये मखघ्ने मखस्य मा यशो ऽर्यादित्याहवनीयमुपतिष्ठते । नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं । नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमथ प्राङाहृत्य जपति हृदे त्वः शिथिरे समीची माꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहसस्पातु वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्य इत्यथ प्रदक्षिणमावृत्य पूर्वे द्वारी सदसः संमृशति देवी द्वारौ मा मा संताप्तमित्यथ सदः प्रपद्यते नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या इत्यथायतनाद्धविःषदं तृणं निरस्यत्यपेतो दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद यो

---

१ Comp. IV. 6 (page 116, 13)

धिरभिघारयति । न प्रयाजानूयाजा स्वाहाकाराः प्रातः प्रातः-सावस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोत्यथ समावपमान आहाग्नये ऽनुब्रूहीत्यथाश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा पात्र्यामिडां समवधाय प्रतीचः पुरोडाशान्प्रदिशत्यत्र हैके संयन्ति पशव इडेति वदन्तो । ऽथ प्राह्णयत्याह वायव इन्द्रवायुभ्यामनुब्रूहीति । तत्कृत्वा प्रतिप्रस्थातैन्द्रवायवस्य प्रतिनिर्ग्राह्यं[1] गृह्णाति द्रोणकलशात्परिप्लुता पात्रेणादित्यस्थाल्या वौपग्रये पात्र उपयामगृहीतो ऽसि वाचसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति । यदावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युरेवादत्त । उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं[1] प्रयच्छत्यथ वै भवत्यैन्द्रवायवमादायाघारमाघारयेदिति । स आज्यस्थाल्याः[2] स्रुवेणोपहत्यैन्द्रवायवमादायाघारमाघारयत्यध्वरो यज्ञो ऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरो ऽसि स पिन्वस्व घृतवद्देव सोम स्वाहेत्यथाश्रावयत्यो श्रावयास्तु श्रौषड्वायव इन्द्रवायुभ्यां प्रेष्येति । वषट्कृते ऽध्वर्युः पूर्वो जुहोति । द्वितीयं वषट्कृते प्रत्युभौ जुहुतो । हुत्वा वाचयति यो न

१ Here and infra, without y, BJT Bh. (Grantha MS. and Dev. MS.), प्रतिनिर्ग्राह्य FHP Draidha, Keś, Padārthanirv. (F once without y)

२ ॰स्थाल्या FH, ॰स्थाल्याः BT; ॰स्थाल्यां J

योपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्मुखाद्दत्ते । उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडश्विभ्यां प्रेष्येति । वषट्कृते सहोभौ जुहुतो । हुत्वा वाचयति यो नो ऽश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयत्युभयोर्धमध्वर्युः प्रतिप्रस्थातुः पात्रे ऽवनयति । तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेभ्यस्त्वा देवेभ्य इति । ॥ १२ ॥

स यद्यु हैतैः संस्रावैरुपर्यधा स्थाली भवत्येतैनां पात्रेणापिदधाति । यद्यु वै नोपर्यधा भवति द्रोणकलशादेनामुपर्यधां[1] कृत्वैतेनैव पात्रेणापिदधाति विष्णुरुरुक्रमैष ते सोमस्तꣳ रक्षस्व तं ते दुश्चक्षा मावख्यदित्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य होत्रे पात्रं प्रदाय प्राङायन्नाहोन्नीयमानेभ्यो ऽनुब्रूहि होतृचमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा तु समुन्नेष्ठाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपजम्भस्वेति । यथाप्रैषं ते कुर्वन्ति । द्रोणकलशादेव प्रथममुन्नयन्त्यथ[2] पूतभृतो । ऽथ द्रोणकलशात्तं उभयतःशुक्रा । होतृचमसमेव प्रथममुन्नयन्ति[3] । यथोपपादमितरान्संमुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथ[4] प्रतिप्रस्थाता चतुर्णाꣳ शकलानां द्वौ

---

1 Before °नामु° BFHP ins एव । 2 Thus BHTP; °यत्यथ F.
3 Thus BFHP °यति T 4 Thus BHFP Keś; सादयत्यथ JT.

प्रोक्षति । द्वावप्रोक्षितौ भवतः । प्रोक्षिताभ्यामपिधायाप्रोक्षिताभ्यामुपयच्छतः । शुक्रमेवाध्वर्युरादत्ते । मन्थिनं प्रतिप्रस्थाता । ग्रहावादायोपनिष्क्रामतो । दक्षिणमेवाध्वर्युर्द्वार्बाहुं निघ्नमान उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता । तौ जघनेनोत्तरवेदिं यन्तौ संधत्त आयुः संधत्तं तन्मे जिन्वतं प्राणꣳ संधत्तं तं मे जिन्वतमपानꣳ संधत्तं तं मे जिन्वतं व्यानꣳ संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतꣳ श्रोत्रꣳ संधत्तं तन्मे जिन्वतमिति । यष्टिः संधरभिः संधाय व्युत्क्रामतः । सुतो ऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्तु सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषेत्यध्वर्युर्दक्षिणेनोत्तरवेदिं परिक्रामति । सुतो ऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्तु सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेति प्रतिप्रस्थातोत्तरेणोत्तरवेदिं परिक्रामति । तौ पुरस्तात्प्रत्यञ्चावुत्तरवेदिमधिद्रवत इन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥ यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासमित्यन्तरेण यूपं चाहवनीयं च यन्तौ संधत्त आयु स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राण स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तमपान स्थो ऽपानं मे धत्तमपानं यज्ञाय धत्तमपानं यज्ञपतये धत्तं व्यान स्थो व्यानं मे धत्तं व्यानं यज्ञाय धत्तं व्यानं यज्ञपतये धत्तं चक्षु स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तꣳ श्रोत्रꣳ स्थः श्रोत्रं मे धत्तꣳ श्रोत्रं यज्ञाय

धत्तꣳ श्रोत्रं यज्ञपतये धत्तमिति षड्भिः संधाभिः संधाय व्युत्क्रामतः ॥ १३ ॥

तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यथाप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो निरस्तः षण्डः सहामुनेत्यध्वर्युर्यं यजमानो द्वेष्टि तं मनसा ध्यायति निरस्तो मर्कः सहामुनेति प्रतिप्रस्थाता यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्य प्रोक्षितावभ्याधत्तः शुक्रैषा ते समित्तया समिध्यस्व स्वाहेत्यध्वर्युर्मन्थिन्येषा ते समित्तया समिध्यस्व स्वाहेति प्रतिप्रस्थाता तस्मिन्काले चमसाध्वर्यवश्चमसानुपोद्यच्छन्ते ऽथाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषट् प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेति वषट्कृतानुवषट्कृते द्विरुपहूतस्यैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहुत्यथ संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तध्वꣳ होतुश्चमसाध्वर्यवुपरमेहि प्रतिप्रस्थातरुत्तरार्धमाहवनीयस्य मन्थिनः संस्रावं जुहुधीति यथासंप्रैषं ते कुर्वन्त्यथ प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति

वा तूष्णीं वाय प्रतिप्रस्थातोत्तरार्ध आहवनीयस्य मन्थिनः संस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिꣳ स्वाहेत्यथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनꣳ सादयति । चमस्येते[1] नराशंसा चमसा । अथैते होत्रकाणां चमसाध्वर्यवः सहत्यच्छ्रोत्रकचमसानभ्युन्नीयोपावर्तन्ते । तेषां मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति । वषट्कृतानुवषट्कृते द्विर्जुहोति । ब्राह्मणाच्छंसिन्यज पोतर्यज नेष्टर्यजाग्नीद्यजेति पञ्च होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याथैव होतारमुपविश्यत्याग्नीदिति । स भक्षमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीत्यथ होतादत्त ऐन्द्रवायवपात्रमात्तमेवाध्वर्युरन्वारभते । अन्वारब्धे ऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद । तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहीत्यथ होता भक्षयत्यथाध्वर्युरथैनद्धोत्रे ऽनुप्रजति । तद्धोता यथायतनꣳ सादयत्यथ होतादत्ते मैत्रावरुणपात्रमात्तमेवाध्वर्युरन्वारभते । अन्वारब्धे ऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद । तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुविद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीत्यथैनद्धोत्रे ऽनुप्रजति । तद्धोता यथायतनꣳ सादयत्यथ होतादत्त आश्विनपात्रमात्तमेवाध्वर्युरन्वारभते ।

---

1 Thus (चमसनिस्तेषे) PHT and Keś; the other MSS. चमसस्थेषे (B) or चमसस्थेने JF

ऽन्वारब्धे ऽध्वर्यौ होतोपहवमिच्छां भक्षयति यथा स वेद । तथान्वारब्धे होतर्यध्वर्युरुपहवमिच्छां भक्षयति मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीति । सर्वतः परिहारमाश्विनं भक्षयतीति ब्राह्मणमथैनद्धोत्रे ऽनुषजति । तद्धोता यथायतनꣳ सादयत्यथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ते । ॥ १४ ॥

उपहूयमानायामिडायामुपप्रसृपन्ति चमसांसुपहूतायामिडायां समाहितमग्नीध्रे भवत्यथैतानि द्विदेवत्यपात्राण्यतिरिक्तानि करोति । पुरोडाशशकलमैन्द्रवायवपात्रे मास्त्यामिक्षां मैत्रावरुणपात्रे । धाना आश्विनपात्रे । ऽथैतानि संपरिगृह्य पूर्वया द्वारोपनिष्क्रम्यापरया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयति । तान्या तृतीयसवनात्परिशेरे । ऽथाग्नीध्र आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । इडोपहूताꣳश्चमसान्भक्षयन्ति प्रेहि माविशेति दीर्घभक्षमनुद्रुत्य वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाꣳश्चिन्न स इत्यात्मानं प्रत्यभिमृशन्त । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधः[1] ऐन्द्राग्नायाथैषो ऽच्छावाको ऽपेण सद आस्ते । तस्मै प्रहत्पुरोडाशशकलमादधदाहाच्छावाक[2]

---

1 Thus PHJF Bh Ket., बदालब० B, बधा० or बपा० T (Grantha!)

2 Thus JHFP, बदधक्० B, बपद्दद० T

वेदस्य यत्ते वाचमिति । स यद्यच्छावाकस्याभिजानात्युपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमिति तदाह होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्वेति । तं होतोपह्वयते । ऽथ प्राह यस्माद्धोत्रीयमाणायानुब्रूह्यच्छावाकस्य चमसाध्वर्यु- श्रावयस्वोभयतःशुक्रं कुरुष्वेति । स तथा करोत्यथ गाहेत्या- च्छावाकचमसमादायाश्राव्याहाच्छावाक यजेति । वषट्कृतानु- वषट्कृते जुह्वा हरति भक्षं । स यद्यस्मिन्नच्छावाक उपहव- मिच्छत उपैवैनं ह्वयते । नो स्वेव संभक्षयतः[1] । सौदत्यस्य नाराशंसस्य आप्यायितो । ऽथाहाच्छावाक सीद नेष्टः पत्नीमु- दानयाग्नीदच्छावाकं मे यजं प्रभूतादिति । सीदत्येषो ऽच्छावाको जघनेन स्वं धिष्णियमानयति नेष्टा पत्नीं पत्नेजनीरादाय[2] नेष्टुर्देशीत्येतेन निगदेनायैनां पूर्वया द्वारोपनिष्क्रम्यापरया द्वारा पदः प्रपाद्य जघनेन नेष्टुर्धिष्णियमसंचरे सामपथे पत्नेजनीः[3] सादयति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः पत्नेजनीः सादयामि यज्ञाय वः पत्नेजनीः सादया- मीत्यथाग्नीध्रः सन्नो ऽच्छावाको ऽच्छावाकं सदस्युप पत्नेज- नीरसीषदन्नित्येतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्यग्ना स्यात्पत्नी पत्नीशाले । ॥ १५ ॥ चतुर्थः ॥

---

१ Thus HJF Bb Keś, °भक्षयति BT.

२ Thus F; पाद्नेजनी° BT; पात्नेजन कलशं instead of पत्नेजनीर् HP, comp VII. 3 (page 203 10).

३ Thus all except J, which has पात्नेजनीः।

अथर्तुपात्रे आददाते दक्षिणमेवाध्वर्युरुत्तरं प्रतिप्रस्थाताध्वर्युः
पूर्वो वायव्येन द्रोणकलशाद्गृह्णात्युपयामगृहीतो ऽसि मधवे त्वा
जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाता गृह्णात्युपयामगृहीतो ऽसि
माधवाय त्वा जुष्टं गृह्णामीति । ग्रहावादायोपनिष्क्रामतो ।
दक्षिणमेवाध्वर्युर्दार्वाङ्कं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रति-
प्रस्थाता दार्वाङ्कं निश्रयमाण उपरमत्यथाध्वर्युराश्रावयत्यो
श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव
प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युः । स गृह्णात्युपयामगृहीतो ऽसि
शुक्राय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु
श्रौषड्ऋतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । १
प्रपद्यते प्रतिप्रस्थाता । स गृह्णात्युपयामगृहीतो ऽसि शुचये त्वा
जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना
प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते
ऽध्वर्युः । स गृह्णात्युपयामगृहीतो ऽसि नभाय त्वा जुष्टं गृह्णा-
मीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । १
वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता ।
स गृह्णात्युपयामगृहीतो ऽसि नभस्याय त्वा जुष्टं गृह्णामीत्यथा-
ध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते
जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युर्विपर्यस्य
पात्रे । स गृह्णात्युपयामगृहीतो ऽसीषाय त्वा जुष्टं गृह्णामीत्यथ १
प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । वषट्कृते
जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य

पात्रं । स गृह्णात्युपयामगृहीतो ऽस्यूर्जाय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युः । स गृह्णात्युपयामगृहीतो ऽसि सहाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णात्युपयामगृहीतो ऽसि सहस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युर्विपर्यस्य पात्रं । स गृह्णात्युपयामगृहीतो ऽसि तपाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषडृतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य पात्रं । तमाह प्रतिप्रस्थातरुपेतेन पात्रेण रमेत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येत्यध्वर्यू यजतमित्याह प्रशास्ता । होतरेतद्यजेत्याहाध्वर्युर्वषट्कृते जुहोति । सो ऽत्रैवासीनं प्रतिप्रस्थातारमनुप्रपद्यते । प्रतिप्रस्थाताच पूर्वो गृह्णात्युपयामगृहीतो ऽसि तपस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युर्गृह्णात्युपयामगृहीतो ऽसि संसर्पो ऽस्यंहस्पत्याय त्वा जुष्टं गृह्णामीति । यथावादायोपनिष्क्रामतो । दक्षिणमेवाध्वर्युर्दोर्बाह्यं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता[1] । प्रतिप्रस्थाताच आश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । ऋतुपते यजेत्याह प्रशास्ता ।

---

१ om BT

होतरेतद्यजेत्याह गृहपतिर्वषट्कृते सहोभौ जुहुतो ऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति[1] तमाह प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाणेति तेन प्रतिप्रस्थातैन्द्राग्नं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेणैन्द्राग्नी आगतं सुतमित्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राग्निभ्यां त्वा जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत्पात्रं संभक्षयत्यृतुना पीतस्येति होत्रा पोत्रा नेष्ट्राग्नीधा ब्राह्मणाच्छंसिना मैत्रावरुणेनेत्यथ विपर्यस्य पात्रं होत्रैव चतुः संभक्षयत्यृतुभिः पीतस्येति होत्रा पोत्रा नेष्ट्राच्छावाकेनेत्यथ विपर्यस्यैव[2] पात्रं होत्रैव द्विः संभक्षयत्यृतुना पीतस्येति ॥ १६ ॥

अथ होतारं विपृच्छति प्रणवमुपांशुशंसं शंसिष्यामीश विषाहा३मिति स यथैनं होता प्रत्याह तच्छ्रुत्वा निगृह्य पात्रं पराङावर्तेत इडा देवहूरिति यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्यथैनमाह्वयते होता प्रत्याह्वयते ऽध्वर्युः शंसति प्रतिगृणाति यदुपांशु शंसति तदुपांशु प्रतिगृणाति यदुच्चैः शंसति तदुच्चैः प्रतिगृणाति संततं वा विग्राहं वा प्रसिद्धमुदर्यं प्रतिगीर्थं ओडेत्योपच्छन्त एतमैन्द्राग्नं ग्रहमनूपच्छन्ते नाराशंसमानयाश्रावयत्यो श्रावयास्तु श्रौ-षडुक्थशा यज सोमस्येति वषट्कृतानुवषट्कृते द्विर्जुहोति तथैव

१ H here and infra सस्रावम् instead of संस्रावम् (once संस्रावम्)।
२ एव om. JT

द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्येतस्यां नाराशंसा अन्वायत्ता अनुसवनमेव इन्द्राग्निभ्यां पीतस्येति । होता चैवाध्वर्युश्चैतस्यावꣳ संभक्षयतो नराशंसपीतेन[1] नाराशंसानराशंसपीतस्य[2] सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाञ्छिंस्व म इत्यात्मानं प्रत्यभिमृशन्त । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बसमधोऽधो वैश्वदेवार्थाय प्राक्रस्य शुक्रपात्रमाददान आग्नीध्रीयेतर्यदेमं वैश्वदेवं यद्वं गृहाणापोद्यवꣳ राजानं पूतभृतमभि संपवयताद्राभिर्द्रोणकलशं स्रक्ष्या न्युब्जतादिति । स तथा करोति । स शुक्रपात्रेण वैश्वदेवं कलशाद्गृह्णात्योमासश्चर्षणीधृत इत्यनुद्रुत्योपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तवते वैश्वदेवाय । होत एषोत्तमेति प्राक्सर्पतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शंसति । प्रतिगृणाति । समिद्धमुक्थं प्रतिगीर्य प्राङेत्योपस्कृत एतं वैश्वदेवं ग्रहमनूपस्कन्ते नाराशंसानथाश्रावयत्यो श्रावयाम्नु औषड्यजा यज्ञ सोमस्येति । वषट्कृतानु-

1 Thus PBH Bh Keś, नारा॰ the other MSS

2 Thus, नराशंसपीतस्य PB Bh, Keś Mantramāla.

वषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्येतत्पात्रं नाराशंसा अन्वायन्त्यनुसवनभक्षो विश्वैर्देवैः पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन[1] नाराशंसा-नराशंसपीतस्य[1] सोम देव ते मतिविदः प्रातःसवनस्य गायत्र-च्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चम-सान्त्सर्वभक्षा मार्जयन्ते । अथाह प्रतिप्रस्थातरिमे ऋतुपात्रे एतच्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपिसृजेति । स तथा करोत्यथ प्राङ्गायन्नाह ॥ १७ ॥

मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । मैत्रावरुणचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्त्समुन्नी-योत्तरवेद्यां सादयन्त्यथाह उक्थ्यस्थाल्या औपशयं पात्रं । तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं[2] यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति । पुनर्हविर-सीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिर्मित्रावरुणाभ्यां त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । मैत्रावरुणा-

१ The various readings as supra, page 229,3 , HJ om. the bhakṣaṇamantra

२ Here and infra the MSS have sometimes उक्थेभ्य and उक्थ्यायुवं ।

यैषोत्तमेति प्राङ्मैत्रावरुणस्य कालात्पराङावर्तते ऽध्वर्युरभ्येन-माह्वयते मैत्रावरुणः प्रत्याह्वयते ऽध्वर्युः शंसति प्रति-गृणाति प्रसिद्धमुक्थं प्रतिगीर्य प्राङ्त्योद्यच्छत एतं यज्ञ-मनूद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति वषट्कृतानुवषट्कृते द्विर्जुहोति तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहुत्यथ प्रदक्षिणमावृत्य मैत्रावरुणस्य चमसे यदस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा पैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो मित्रावरुणाभ्यां पीतस्येति मैत्रावरुणचमसमेवैते त्रयः समुपह्य भक्षयन्ति यथाचमसं चमसाश्विंश्च इत्यात्मानं प्रत्यभिमृशन्ते आप्याययन्ति चम-सान्सर्वभक्षा मार्जयन्ते ऽथाह प्रतिप्रस्थातर्यज्ञौ ते प्रचरेति तच्छ्रुत्वा प्रतिप्रस्थाता प्राञ्जायन्नाह ॥ १८ ॥

ब्राह्मणाच्छंसिनश्चमसमनून्नयध्वमुक्तेतः सोमं प्रभावयेति ब्राह्मणाच्छंसिचमसमेव प्रथममुन्नयन्ति यथोपपादमित-रान्समुन्नीयोत्तरवेद्यां सादयन्त्यथादत्त उक्थ्यस्थाल्या औपभृतं पात्रं तस्मिन्नेतस्य राज्ञो ऽर्धमेवा गृह्णाति उक्थ्यस्थाल्यां भवत्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुव-मुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राय त्वा जुष्टं गृह्णामीति पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति स्तुवते ब्राह्मणाच्छंसिन

एषोतमेति प्राङ्ब्राह्मणाच्छंसिनः काशात्पराङावर्तते प्रतिप्रस्थातारमेनमाह्वयते ब्राह्मणाच्छंसी । प्रत्याह्वयते प्रतिप्रस्थाता । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योदङ्ङत एतं यद्दमनूद्यच्छन्ते चमसानेवाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसान्जुह्वत्यथ प्रदक्षिणमावृत्य ब्राह्मणाच्छंसिनश्चमसे प्रहस्य षड्ढत्वाचमसमवनयति ऋतं त्वा ऋते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा चैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति । ब्राह्मणाच्छंसिनश्चमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्वि प्र इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्स्वैर्भक्षा मार्जयन्ते । ऽथ प्राङायन्नाह ॥ १९ ॥

अच्छावाकस्य चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातरुपेतेन यद्रेण रमैहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्यायैतद्धर्मं फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्र प्रतितिष्ठति वा तूष्णीं वा । तस्मिन्संभुत्राभ्यामवः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्यामथैनमुद्गृह्य प्राञ्चोऽग्निमस्तच्चेष्टन्ति यत्ते विदुर्थोदुम्ब्याधवनीयमर्धं वसतीवरीणामवनयत्यर्धमेकधनानां । पुरोऽर्धं वसतीवरीः सादयति । पश्चादर्धमेकधनानामच्छावाकचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांस्सर्वश एव राजानं

समुन्नीयोत्तरयेद्वाऽऽप्रसादयन्त्यथादत्त उक्थ्यस्थाल्या औपयजं पात्रं । तस्मिन्नेतत्सर्वत्र एव राजानं गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थायुवं यज्ञस्यायुष इन्द्राग्निभ्यां त्वा जुष्टं गृह्णामीति । नाप पुनर्हविरसीत्युक्थ्यस्थाल्यौ प्रत्यभिमृशति । इमाभिरेवैनां मृदा न्युब्जति । परिमृज्य सादयत्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यपाय उपसृत्य बर्हिषी आदाय वाचंयम प्रत्यङ् द्रुत्वा होत्रमुपाकरोति । स्तुवते । ऽच्छावाकायैषोत्तरेति प्राङुर्च्छावाकस्य कालात्पराङावर्तते प्रतिप्रस्थातान्येनमाक्रयते ऽच्छावाकः । प्रत्याक्रयते प्रतिप्रस्थाता । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राड्डेत्योपच्छन्त एतं यद्दर्भमूपच्छन्ते चमसान्याश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहुत्यथ प्रदक्षिणमावृत्याच्छावाकस्य चमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वाथैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुप्रसभक्ष इन्द्राग्निभ्यां पीतस्येत्यच्छावाकचमसमेवैते सर्वे भक्षयन्ति । यथाचमसं चमसानिन्व स इत्यात्मानं प्रत्यभिमृशन्तो । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते ऽयोक्थशा इत्याह । प्रातःसवनं प्रतिगीर्य प्रशास्तः प्रसुहीति । सर्पतेत्याह प्रशास्ता । सन्तिष्ठते प्रातःसवनम् । ॥ २० ॥ पञ्चमः ॥

॥ इति सप्तमः प्रश्नः ॥

प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वाराविल्यत एवोर्ध्वेन । संप्रसृप्तान्विदित्वाध्वर्युः प्राडायन्नाहाभिषोतार एत[१] क्षयत[१] ग्रावस्तुतमेहि[२] यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य होतृचमसे वसतीवरीभ्यो ऽध्यपो निःषिच्य तासु तथैव निग्राभ्यासु यजमानं वाचयति । तास्तथैव यजमानाय संप्रदाय ग्रावाणमादत्ते ऽन्यमुपांशुसवनात्तं तथैव प्राञ्चं प्रश्नित्य विस्रस्य राजानं ग्रावाणमभि मिमीत इन्द्राय त्वेन्द्राय त्वेति । पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं । दशकृत्वो मिमानः सर्वंश एव राजानं मिमीते । अद्भिरभ्युक्ष्य ग्रावस्तुत उष्णीषं प्रयच्छत्यद्भिरेवाभ्युक्ष्याध्वर्योरावसथं वासो हरन्ति[३] । तथा मितꣳ राजानꣳ होतृचमसीयाभिरुपसृजति । तथा संप्रयौति । तथा तिरश्चमंसफलके अभिन्यस्यति । तथा हृद्वीर्वाचयति । भाषाꣳशून्स्वपते । घोषवन्त एवाभिषुण्वन्तीहाꣳ इहाꣳ इहेति[४] । तदेव सदिनयन्तीहाꣳ[५] इह इहाꣳ इह इहाꣳ इहेत्यथ संभरणीये निष्कौडयन्तीहाꣳ इहाꣳ इहेत्यथैनꣳ सुसंभृतꣳ संभरण्याꣳ संभृत्योत्तेव उत्प्रयच्छति ।

---

१ Thus PB TH Mantramālā.

२ Thus PTFH Bh, Mantramālā, Padārthaniv, •स्तुतरेहि B. Keś.

३ Thus BHTP Bh, हरति F.

४ Here and l. 13, 14 BP have the pluti sign also after the last इह (thus इहाꣳ इह३).

५ Uncertain reading. BT तदेवसदिनयन्ती•, H तदेवसदिदियंती•; F तदेत्यदेवसदिवंदनी•, P तदेवसदिनयत इव, Bh. and Keś. give no help (विहृत्य नयन्ति, Bh.)

तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीयस्तृतीयस्य तृतीये बृहदुपयन्ति बृहद्बृहद्बृहदित्यृजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्रे प्रयच्छति तदुन्नेताधवनीये[1] विघाव्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य[2] घर्मणि निदधाति तस्मिंस्तथैव संमुखान्ग्राव्णः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहति तथोद्गाता[3] वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं ग्रावसु द्रोणकलशमध्यूहति तस्मिंस्तथैवोदीचीनदशं दशापवित्रं वितत्य प्रसिद्धं शुक्रामन्थिनौ ग्रहौ गृहीत्वर्तुपात्राभ्यां द्वौ मरुत्वतीयौ ग्रहौ गृह्णाति ॥ १ ॥

मरुत्वन्तं वृषभं वावृधानमिन्द्र मरुत्व इह पाहि सोममिति द्वाभ्यामथोपरिष्टादाग्रयणमानीयाधस्तादुपस्तृणाति तं तथैव त्रिरभिहिङ्कृत्य परिप्लव्य सादयति तथोक्थ्यं ग्रहात्युक्थ्येन राजानं परिदधाति तथोपर्यर्धे द्रोणकलशे परिप्लुपात्रं प्रास्य द्रप्साननुमन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इति तथोन्नेतारमाहाशिरं पूतभृतं कुरु पवमानस्य ग्रहान्ग्रहीष्यामीति तथाशिरं पूतभृति पवमानस्य ग्रहान्गृह्णात्युपयामगृहीतो ऽसीन्द्राय त्वेति द्रोणकलशमभिगृह्णातीन्द्राय त्वेत्याधवनीयमिन्द्राय त्वेति पूतभृतं तथोन्नेतरित्याह प्राञ्चं राजानं पूतभृतमभि संपवयताद्ग्रावभिराधवनीयं स्पृष्ट्वा न्युब्जता-

---

१ Some MSS · तदुन्नेता॰ ।

२ उपानिहृत्य F, उपावहृत्य BHP, comp ■ 208, 12.

३ अथोद्गाता H

दिति । स तथा करोति । तथापि उपस्पृश्य बर्हिषी आदायोप-
निःसर्पन्ति । तेषु तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं
जुहोति विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने
न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानां सुमतौ
स्याम स्वाहेति । तथाध्वर्यू जुहुतो । यथावेदमितरे जुह्वत्यथ ।
सदक्षिणमाहृत्य सदो ऽभि पवमानं सर्पन्ति । तथा[1] सदसि
यथायतनमुपविशन्ति । तथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी
प्रयच्छन्त्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा
तूष्णीं वा । तथोपाकरणं जपति वायुर्हिंकर्तेति । स एष पञ्चदशो
माध्यंदिनः पवमानो भवति । तस्याष्टम्यां प्रस्तुतायां वाचयति
सुपर्णो ऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथ
यजुर्होतारं व्याचष्टे । उद्गृते आग्नि संप्रैषमाहाग्नीदग्नीन्विहर
बर्हिः स्तृणाहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातर्दधिघर्माय
दध्याहरेति । यथासंप्रैषं तौ कुरुतस्तथापि[2] उपस्पृश्याहैहि
यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा ममाग्नि
राजानमुपतिष्ठते । तथावकाशैश्चरति । तथा प्रचरण्यां सदस्यन्ती
गृह्णीते । तथैव आग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं[3] धिष्णि-
येष्वङ्गारान्विहरति । तथा पुरस्तात्प्रत्यङ्ङासीनो विहृतान्धिष्णि-
यान्व्याघारयति । तथोत्तरस्य हविर्धानस्य चक्रे प्रचरणीं

१ समर्पन्त्यथ BJ.

२ Thus BT, हुवतोथाप the other MSS, J corrupt

३ Thus BJHP, यानपूर्वं F, यानुपूर्वं T

सादयति ' तथा सांकाशिनेन यथा पृष्ठ्याꣳ स्तृणाति संतता गार्हपत्यादाहवनीयात् ' ॥ २ ॥

अथान्तरेण हविर्धाने उपविश्य दधिघर्माय दधि याचति ' तदाहृतमवेक्षते ज्योतिरसि वैश्वानरं पृश्नियै दुग्धमिति ' बर्हिषी अन्तर्धाय कृष्णे वा चमसे वा गृह्णाति यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः । तावन्तमिन्द्र ते ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतमित्यपोद्धृत्य बर्हिषी अथैनꣳ श्रीणाति वाक् च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीताꣳ शृतोऽसि शृतंकृतः शृताय त्वा शृतेभ्यस्त्वा शृतं हविरित्यथाह होतर्यदस्व घर्मे वाचमित्यथैनमादायोपोत्तिष्ठन्नाह आसꣳ हविरित्यथाक्रम्याश्राव्याह दधिघर्मस्य यजेति ' वषट्कृते जुहोति यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वा स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षꣳ ' स यावन्तः सवर्यंस्त्वर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति मयि त्यदिन्द्रियं महन्मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यं त्रिशुग्घर्मो विभातु मे । आकूत्या मनसा सह विराजा ज्योतिषा सह । यज्ञेन पयसा सह ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह सत्येन तपसा सह । तस्य दोहमशीमहि तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि तस्य त इन्द्रेण पीतस्य मधुमत

उपहूतस्योपहूतो भक्षयामीति निर्णिज्य पात्रं प्रयच्छति तथा सवनीयान्पुरोडाशानासादयति तेषां तथैव समवदधाति माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति पूर्वार्धाद्वदायापरार्धाद्वदत्यभिघारयति प्रत्यनक्ति तथोपभृति स्विष्टकृते सर्वेषां सकृत्सकृदुत्तरार्धाद्वद्यति द्विरभिघारयति न प्रत्यनक्त्यत्याक्रम्याश्राव्याह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति वषट्कृते जुहोति तथा समानयमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोति तथोद्द्रुत्याक्रम्य यथायतनं स्रुचौ सादयित्वा तथैव पात्र्यामिडां समवधाय सर्वैः पुरोडाशानामिच्छोत्स्यंनु चैके संयन्ति यथव इडेति वदन्तो ऽथ सादायमाहोपहूयमानेभ्यो ऽनुब्रूहि ॥ ३ ॥

होतृचमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो ऽपि समुन्नयस्व प्रतिप्रस्थातर्ऋतुभिर्मा प्रकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपस्थस्वेति यथाकर्मैवं ते कुर्वन्ति समानं कर्माश्रावणादाश्रावण एव चोत्थायाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषण्माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मेति

1 Uncertain reading and interpunction, स्वर्वेत्याद॰ BJ; स्वै-त्यद॰ T Keś, स्व--त्यद॰ F, स्वैतिमया॰ HP, Bhavasvāmin: स्व चैति श्रियत इत्यर्थं A Prayoga स्वयति श्रियत इत्यर्थः (Grantha).

वषट्कृतानुवषट्कृते द्विर्जुहोति तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहोति । तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मण इति । तथा[१] प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा । तथा प्रतिप्रस्थातोत्तरार्धे आहवनीयस्य मन्थिनः संस्रावं जुहोति । तथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनꣳ सादयति । यत्रैते महर्त्विजां चमसास्तत्रैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तन्ते । तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति । वषट्कृतानुवषट्कृते द्विर्जुहोति । ब्रह्मन्यज पोतर्यज नेष्टर्यजाच्छावाक यजाग्नीध्रयजेति । षड्ढोत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यायेण होतारमुपविशत्ययाडग्नीदिति । स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति । तथाप उपस्पृश्य होत्र इडामुपोपह्वन्त । उपहूयमानायामिडायामुपसमृशन्ति चमसानुपहूतायामिडायामग्नीध्र आदधाति षड्वत्तं । प्राश्नन्ति । मार्जयन्त । इडोपहूताꣳश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्य रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व स इत्यात्मानं प्रत्यभिमृशन्त ।

१ तथैव H

आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सौदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधो[1]ऽधस्तृतीयाय सवनायैतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्यग्ना स्यात्पत्नी पत्नीशाले । ॥ ४ ॥ प्रथमः ॥

अथ दाक्षिणानि होष्यन्नादत्याज्यस्थालीꣳ सस्रुवाꣳ स्रुचं वाससस्यैतस्य वसनस्यान्तमायां दशायां हिरण्यमस्याः प्रग्रथितो भवत्यैतत्समादायाहैहि यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य पूर्वया द्वारा प्राञ्चौ प्रपाद्य समन्वारब्धेष्वपि-प्रतेषु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यान्तꣳ स्रुग्दण्ड[2] उपसंगृह्य[2] सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्युदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्यथाग्नीध्रे हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यैवान्तꣳ स्रुग्दण्ड उपसंगृह्य नयत्यथाग्नीध्रे जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथ दिवं गच्छ सुवः पतेति हिरण्यꣳ हुत्वोद्गृह्णाति । सृज्यन्ते दक्षिणा दक्षिणापथेनान्तरेण

१ Thus all and P, except B, which has ॰स्यावालम्ब॰ ।

२ स्रुग्दण्डमुप॰ BJ.

सदश्च गार्हपत्यं चान्तरेण सदश्चाग्नीध्रं चान्तरेण चात्वालोत्करावेवमुदीच्यः प्रतिपद्यन्ते । ताः प्रदक्षिणं कृत्वाभ्यैति रूपेण वो रूपमभ्यैमि वयसा वय इत्यथैना विभजति तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाक इतीदं सदो ऽभ्यैत्येतत्ते[१] अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीरिति । ॥ ५ ॥

अथैव आर्षेयो ऽग्रेण सद आस्ते । तमभ्यैति[२] ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यं सुधातुदक्षिणमित्यथैनमुत्क्रम्य पृच्छति क आर्षेय इत्ययमहमितीतरः प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति क आर्षेय इत्ययमहमित्येवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति क आर्षेय इत्ययमहमित्येवेतरः प्रत्याह । तस्य पाणौ हिरण्यमादधाति चन्द्र[३] मंहिष्ठेति यद्वान्यदुपकल्पते[४] । ऽथाग्नीध्रं हुत्वा हिरण्यस्रजमग्नीधे ददात्यथ सद आगत्य ब्रह्मणे ददाति होत्र उद्गात्रे । ऽथ हविर्धानं हुत्वाध्वर्यवे ददाति य उ चैनमन्ये ऽभितो भवन्त्यथ सद आगत्य प्रस्तोत्रे ददाति प्रशास्त्रे ब्राह्मणाच्छंसिने ऽच्छावाकस्य सदस्याग्नीध्रः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततो । यथासमुद्दिष्टं प्रसर्पकेभ्यो । ऽथाहेहि यजमानेत्याग्नीध्रं

---

१ Thus FHTP, Keś, चार्षोति BJ

२ Thus TPH, चाभ्येति the other MSS

३ चंद्र THF Mantramālā, चद्रं BP and a Prayoga, चन्द्रमंहेति Keś

४ उपकल्पयते the MSS

हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे पञ्च वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुरित्येतानि कामातीमोघेश्वरत्यग्निना[1] देवेन ये देवा यज्ञहन इत्येताभ्यामनुवाकाभ्यामथ यजमानं प्राचमीक्षयति वि सुवः पश्य व्यन्तरिक्षमित्यथैनꣳ सदस्युपवेशयति यतस्व सदस्यैरित्यथ दक्षिणाः समनुदिशत्यस्मद्राता देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान्देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतमिति । ॥ ६ ॥

अथ प्राङायमाऽइन्द्राय मरुत्वते ऽनुब्रूहीति । तच्छ्रुत्वा प्रतिप्रस्थाता यथावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्यथावादम् । उत्तरतस्तिष्ठते प्रतिप्रस्थाता ऽन्यतरं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्राय मरुत्वते प्रेष्येति । वषट्कृते सहोभौ जुहुतो । ऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सꣳस्रावमवनयति । तमाह प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाणेति । तेन प्रतिप्रस्थाता तृतीयं मरुत्वतीयं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुवा पात्रेण मरुत्वाꣳ इन्द्र वृषभो रणायेत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा मरुत्वत इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे तत्पात्रꣳ संभक्षयतीन्द्रेण मरुत्वता पीतस्येत्यथ निगृह्य पात्रं पराङावर्तत इडा देवहूरिति । यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्य-

---

१ कामोतीमो॰ TJHP Keś. (twice), कामिमो॰ BJ Keś. (once)

भ्येनमाह्वयते होता। प्रत्याह्वयते ऽध्वर्युः। गृह्णाति। प्रतिगृणाति। प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राहेत्योद्यच्छत एतं तृतीयं मरुत्वतीयं ग्रहमनूद्यच्छते नाराशंसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति। वषट्कृतानुवषट्कृते जुहोति। तथैव द्विर्द्विर्नाराशंसाननुकम्पयन्त्यथैतस्याचं नाराशंसा अन्वायन्त्यनुसवनभक्ष इन्द्रेण मरुत्वता पीतस्येति। होता चैवाध्वर्युश्चैतस्यावद्यं संभक्षयतो नराशंसपीतेन नाराशंसान्नराशंसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्भिन्द्य स इत्यात्मानं प्रत्यभिमृशन्ते। आप्याययन्ति चमसानाप्यायस्व समेतु त इति। सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[1] माहेन्द्राय। ॥ ७ ॥

अथ प्राञ्चेत्य शुक्रपात्रमाददान आहोन्नेतर्यदेमं माहेन्द्रं ग्रहं गृह्णाम्यथोदङ् राजानं पूतभृतमभि संप्लावयताद्ग्राभिर्द्रोणकलशं च द्वा न्युब्जतादिति। स तथा करोति। स शुक्रपात्रेण माहेन्द्रं द्रोणकलशाद्गृह्णाति महाँ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतो ऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते माहेन्द्राय।

---

१ B agnin [illegible]

हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे पशु वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुरित्यथातिक्रामतीमो चेद इत्यग्निना[1] देवेन ये देवा यज्ञहन इत्येताभ्यामनुवाकाभ्यामथ यजमानं प्राङ्मीक्षयति वि सुवः पश्य व्यन्तरिक्षमित्यथैनं सदस्युपवेशयति यतस्व सदस्यैरित्यथ दक्षिणाः समनुदिशत्यमहाणा देवता गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान्देवयानेन पथेत सुकृतां लोके सीदत तन्नः संस्कृतमिति ॥ ६ ॥

अथ प्राङ्गायत्रा इन्द्राय मरुत्वते ऽनुब्रूहीति तत्कृत्वा प्रतिप्रस्थाता यथावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्यथावादत्त उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे ऽन्यतरं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्राय मरुत्वते.. मैद्दिन्दस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति होतृचमसमेवैते भक्षः समुपहूय भक्षयन्ति यथाचमसं चमसांश्चिन्वन्त इत्याहाय प्रत्यभिमृशन्ते आप्याययन्ति चमसान्त्संभक्ष्य मार्जयन्ते ऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरन्यपर्यायैरिति तं तथैवोत्तमे ऽतिशिष्ट आदायाच्छावाकस्य चमसमनूक्षयत्युन्नेतः सर्वत्र एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातरुपैतेन ग्रहेण रमैहि यजमानेति पूर्वया द्वारा हविर्धानं प्रपाद्याथोदञ्चमाधवनीयं सर्वत्र एव वसतीवरीः पर्यस्यति सर्वत्र [2]एवैकधनान्पुरोऽञ्चमेव वसतीवरीकलशं

---

1 यथाप॰ all exc TP

2 एव om BJ.

आदित्यस्थाल्या आग्रयणं पात्रं । तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य आदित्यस्थाल्यां भवति कदा च न स्तरीरसीत्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीति । बर्हिषी अन्तर्धाय शृतातङ्क्येन श्रीणाति कदा च [illegible] प्रयुच्छसीत्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यपोद्धृत्य बर्हिषी अर्धवेलाङ् राज्ञो गृह्णाति यज्ञो देवानां प्रत्येति सुम्नमित्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यथैनं प्रविमत्त उपांशुसवनेन श्रीणाति विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामीत्यथैनमुद्गृह्णात्यथ विज्ञानमुपैति यदि तावत्प्रस्कन्दत्यनुर्वर्षुकः[1] पर्जन्यो भवति । यदि चिरमवर्षुको । न सादयतीति ब्राह्मणमथैनमुपांशुसवनं दशापवित्रेण परिमृज्य तेनाधस्तात्पात्रमुद्धन्त्यूर्मिकामविषिञ्चन् ॥ ९ ॥

आ समुद्रादा अन्तरिक्षात्प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो वर्षयन्तून्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिमित्यथैनमुपांशुसवनं[2] दशापवित्रेण परिमृज्य पात्रमपिसृजति । विवृण्वन्ति पूर्वां द्वारमपरां चाथैत[3] ग्रहं बर्हिर्भ्यामेनापिधायोपोत्तिष्ठन्नाहादित्येभ्यः[4]

---

१ Thus J only; ॰दत्यवर्षुकः F, ॰देवर्षुकः HP, the other MSS. are still more corrupt.

२ ॰थैनमु॰ all except H, which has ॰थैनमु॰ ।

३ Thus PHJ Ked., ॰चैव the other MSS

४ ॰पोपोत्तिष्ठ॰ TP ॰पोपोत्तिष्ठ॰ J, ॰पोत्तिष्ठ॰ B, ॰पोत्तिष्ठ॰ HF,

प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यो ऽनुब्रूहीत्युक्त्वाश्राव्याहादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्येति वषट्कृत ओषधीः प्रास्याग्नावादित्यं जुहोति सहदेव न हुत्वाभ्यीक्षते पर्यावृत्त एव प्रतिप्रस्थाता पात्रमादत्त एतस्मिन्काले प्रतिहर्ता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन्वा राज्ञ उदचनानानयत्यपणरोधाध्वर्युरादत्त आदित्यस्थाल्यां प्रतिप्रस्थाता सोपयामां संगृह्णाति तासां तिसृणां पञ्चानां वा¹ धाराणां तयोपरिष्टादादित्यपात्रमौषधस्तादुपगृह्णाति तं² तथैव चिरभिहिङ्कृत्य परिमृज्य सादयत्यपोद्धृत्य पवित्रं बर्हिषी अन्तर्धायाग्निरमवनयत्यन्वारब्धायां पत्न्यामस्मे देवासो वपुषे चिकित्सतेति पञ्चभिरनुच्छन्दसमपोद्धृत्य बर्हिषी पूतभृतो बिले द्रप्सानुमन्त्रयते । द्वौ पवमानस्य ग्रहौ गृह्णाति तयोरितरिस्थाह प्रावृष्ट राजानं पूतभृतमभि संप्रवयताद्द्याभिराधवनीयं महा न्युब्जतादिति । स तथा करोति तथाप उपस्पृश्य बर्हिषी सादयोपनिःसर्पति तेषु तथैव समन्वारब्धेष्वाधवनीये स्रुवाहुतिं जुहोति ॥ १० ॥

इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वनाः स्वरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहेत्येतयाध्वर्युर्जुहोति यथावेदमितरे जुह्वति तथा

¹ च T. ² तथा om THF ³ om T

प्रदक्षिणमावृत्य सदो ऽभि पवमानꣳ सर्पन्ति । तथा सदसि यथायतनमुपविशन्ति । तथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा । तथोपाकरणं जपति वायुर्हिंकर्तेति । स एष सप्तदश आर्भवः पवमानो भवति । तस्य नवम्यां प्रस्तुतायां वाचयति श्येनासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथ यज्ञहोतारं व्याचष्टे । उद्भुते वाचि सप्रैषमाहाग्नी-ञ्छालाकान्विहर बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रति-प्रस्थातः पशौ संवदस्वेति । यथासंदिष्टं तौ कुरुतस्तथाप उपसृज्याहेहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा समस्तꣳ राजानमुपतिष्ठते । नाभावकाशैश्चरति । तथा प्रचरण्यां नवक्लो गृह्णीते । तथैव आग्नीध्र आग्नीध्रीयाद्धिष्ण्यादनुपूर्वं[1] धिष्ण्येषु शालाकान्विहरति[2] । तथा पुरस्तात्प्रत्यङ्ङासीनो विहृताञ्छालाकानभ्याधारयति[2] । तथोत्तरस्य हविर्धानस्य युवुके प्रचरणीꣳ सादयति । तथा सौकाग्निनेन पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् । ॥ ११ ॥

अथ पशुना चरति मनोताप्रभृतिनेडान्तेन । तथा सव-नीयान्पुरोडाशान्याचति । तेषां तथैव समवदायाह तृतीयस्य

---

१ आनुपूर्वं T, अनुपर्व PBJ, अनुपूर्वां F, आनुपूर्व्यं H.

२ शालाकान् PTJ, शलाकान् BHF, शकलान् and शलाकान् H

सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति । पूर्वार्धादन्तरायापरार्धादवद्यत्यभिघारयति । प्रत्यनक्ति । तथोपभृति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यथाश्राव्याह तृतीयस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति । तथा समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोद्धृत्यावस्य यथायतनꣳ स्रुचौ सादयित्वा तथैव पात्र्यामिडाꣳ समवधाय प्रतीचः पुरोडाशान्प्रहिणोत्यनु हैके संयन्ति पशव इडेति वदन्तो ऽथ प्राञ्चमसान्होन्नीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वं तीव्राꣳ आशीर्वतः कुरुध्वमुन्नेतः सोमं प्रभावयेति । होतृचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्संमृन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथ प्राङेत्य होतृचमसमादायाश्राव्याह तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राꣳ[1] आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति श्येनाय पत्वने स्वाहेत्यनुवषट्कृते हम्यक्ताꣳ होत्रा मधोर्घृतस्य स्वाहेति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुह्वति । तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृदाशीर्वतो ऽभ्युन्नीयोपावर्तध्वमिति । यन्त्येते सहर्त्विजां चमसान्त्यैते होत्र-

---

१ विश्वेदे॰ BT, Mantramalā, the other MSS, also P, have विश्वदे॰ ।

काणां चमसाध्वर्यवः सकृत्सकृदाग्नीध्रतो ऽभ्युन्नीयोपावर्तन्ते । तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति । वषट्कृते जुहोति विष्टम्भाय धर्मणे स्वाहेति । परिधये जनप्रथनायेति[1] ब्राह्मणाच्छꣳसिन । ऊर्जे होत्राणामिति पोतुः । पयसे होत्राणामिति नेष्टुः । प्रजापतये मनव इत्यच्छावाकस्य-र्तमृतपाः सुवर्वाडित्यग्नीधस्य चमसं[2] चमसमेवानुवषट्करोति[3] वसन्ताꣳ होत्रा मधोर्घृतस्य स्वाहेति । सप्त होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याग्रेण होतारमुपविशत्यथाहाग्नीदिति । स भद्रम-करित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति । तथाप उपस्पृश्य होष इडामुपोपह्वयन्ते । उपहूयमानायामिडा-यामुपप्रवृञ्जन्ति चमसानुपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । इडोपहूताꣳश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्याश्विनवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्वम इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध[4]

---

१ BFP add स्वाहा also after °प्रथनाय ।

२ Thus, °अग्नीधस्य° HPT °अग्नीध्रस्य° or °आ° BJ

३ Thus TFPH Bh चमसमेवानुवष° J, चमसेवानुवष° B Kc

४ B again °वाशंस° ।

उपाममवन्तो वैश्वदेवाय ’ चमसायचमसायैव चौष्टस्तौष्पुरोडाशशकलानुपास्यति ’ नव होतृचमसे ’ तानत एवानुमन्त्रयते ऽत्र पितरो यथाभागं मन्दध्वमित्येतस्मिन्काले[1] आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति ’ यद्यग्ना स्यात्पत्नी पत्नीशाले ’ ॥ १२ ॥ तृतीयः ॥

अथ प्राङायन्नाह देवाय सवित्रे ऽनुब्रूहि प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रमाग्रयणाद्ग्रहं गृहीत्वोपास्व मा सीषद इति ’ तच्छ्रुत्वा प्रतिप्रस्थातान्तर्यामपात्रेण सावित्रमाग्रयणाद्ग्रहं गृह्णाति वाममद्य सवितरित्यनुद्रुत्योपयामगृहीतो ऽसि देवाय त्वा सवित्रे जुष्टं गृह्णामीति ’ न सादयतीति ब्राह्मणमसादयित्वैवोपनिष्क्रम्याश्राव्याह देवाय सवित्रे प्रेष्येति ’ वषट्कृते जुहोत्यथ वै भवति सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णातीति ’ स[2] सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णात्युपयामगृहीतो[3]ऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमो विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति ’ परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होता समीक्ष्य पराङावर्तत इत्था देवहूरिति ’ यावदेतस्य यजुषः पर्याप्नोति तावत्सपत्यभ्येन-

---

१ After मन्दध्वमिति HF ins. उक्त्वा।

२ स only in PH, F reads यत्।

३ The words सोमे सोममभिगृह्णाति om B (*are* they interpolated?); [redacted] also has them

माह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शंसति । प्रतिगृणात्यथ यच्च होतुरभिजानात्येकया च दशभिश्च स्वभूत इति सम्प्रतिप्रस्थाता द्विदेवत्यपात्राणि मार्जालीये मार्जयित्वा पात्रेष्वपिसृजत्यथ यच्च होतुरभिजानाति प्र[1] द्यावा यज्ञैः पृथिवी ऋतावृधेति तदन्यतोऽमदं प्रतिगृणात्योथा मोद इव मदा मोद इवेत्या याहावादथ यच्च होतुरभिजानाति तद्राधो यच्च सवितुर्वरेण्यमिति तदुभयतोऽमदसे[2] प्रतिगृणाति मदा[3] मोद इव मदा मोद इवेत्या याहावात्प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङ्व्योदङ्क्त एतं वैश्वदेवं चमसमनूद्यच्छन्ति नाराशंसमभ्याश्रावयत्यो श्रावयास्तु श्रौषडुक्त्वा यज सोमस्येति । वषट्कृतानुवषट्कृते हिङ्कृतेति । तथैव द्विदेवत्यान्नाराशंसाननुप्रकम्पयन्त्यथैतत्पात्रं नाराशंसा अन्वायन्त्यनुभक्षभक्षो विश्वैर्देवैः पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रात् संभक्षयतो नराशंसपीतेन नाराशंसान्नराशंसपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसः पितृपीतस्य

---

१ The reading of the words commencing with प्र is not wholly certain. B om. from प्र द्यावा to अभिजानाति (incl., line 6); instead of याहावाद् (thus JP, l. 6) F has याहावात् ।

२ उभयतो॰ FP, अन्यतोमद॰ BJ, but comp Padarthamer, page 378 (n°121) and Āp srs XIII, 13 8.

३ मदा ... इवेति om. TJ; B मदामोदेवमोदामोदेवित्य॰ ; most of the MSS. contract the word इव with the preceding vowel; so HPBJ, but comp TS. III 2, 9, 5

मधुमत उपहूतस्योपहूतो भक्षयामीति होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति यथाचमसं चमसान्दिन्व स इत्यात्मानं प्रत्यभिमृशन्ते नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते ॥ १३ ॥

अथ होतारं विपृच्छति परियक्ष्यसि सौम्यां३[1] न परियक्ष्यामी३[1] इति स यद्येनं[2] होता प्रत्याह तच्छ्रुत्वाप्रच[2] सौम्यमागच्छत्यथ स्रुचि चतुर्गृहीतं गृहीत्वात्याक्रम्याश्राव्याह हतस्य यजेति वषट्कृते जुहोत्यथोपस्तीर्य द्विस्सौरेवद्यति[3] पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति न[3] प्रत्यनक्त्यत्याक्रम्याश्राव्याह सौम्यस्य[4] यजेति वषट्कृते दक्षिणार्धपूर्वार्धे प्राचीनावीती सौम्यं जुहोत्यथैनं वैष्णव्यर्चा स्रुवाक्रम्याभिजुहोति विष्णो त्वं नो अन्तम इति यद्यु वै होताग्रवैष्णव्यर्चा परियजति संपन्नमिति नाद्रियेत तस्मिन्नाज्यमानीयावेक्षते पवित्रं वै सौम्य आत्मानमेव पवयन्ते य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वावेक्षेतेति तस्मिन्भूय आज्यमानीयावेक्षते यन्मे मनः परागतं यद्वा मे अपरागतम्। राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवात्मन्दधार न गतमना

1 Some of the MSS. om the pluti sign, F puts it both times behind the verb सौम्यान PBF, सौम्याम HJ.

2 Instead of चवद्यति B has, चवदायाह सौमायानुब्रूहीति।

3 om. HF.

4 सोमस्य BJ

भवतीति साध्वमंगैनमुद्गातृभ्यो हरन्ति । तमिन्द्रुमन्तश्चिष्टन्ति यत्ते विदुरथ प्राशायमाह प्रतिप्रस्थातरुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहं गृहीत्वोपास्व मा सीदत इति । तद्धृत्वा प्रतिप्रस्थातोपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहं गृह्णात्युपयामगृहीतो ऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ इति । अहिंसी सन्तधाय घृतेन श्रीणात्यहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार । यदन्तरिक्षं तदु मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानामित्यपोद्धृत्य अहिंसी न सादयतीति ब्राह्मणमंसादयित्वोपनिष्क्रम्याश्राव्याहाग्नीत्पात्नीवतस्य यजेति । वषट्कृते जुहोति सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्युपांशुमनुवषट्कृते[1] हुत्वा हरति भक्षम् । स यद्यग्निदाग्नीध्र उपहवमिच्छेत उपैवैनꣳ ह्वयते । नो नेत्र समभक्षयतो[2] । अथाहाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गातृभिः संख्यापय उपप्रवर्तयतादूरूणोपप्रवर्तयतादथ हस्तेनोरुमुपप्रवर्तयताद्धोतुश्चमसमनून्नयध्वमुन्नेतः सर्वत एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातर्होतृचमसे ध्रुवायावकाशं कुरुतादेहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति भूतमसि भूते मा धा मुखमसि मुखं भूयासमिति । होतृचम-

---

१ करोति instead of हुत्वे T

२ Thus HJP, ॰यति TB

ममैव प्रथममुन्नयन्ति । यथोपपादमितरान्सर्वेभ्य एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप[१] उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते यज्ञायज्ञियेनाथ मन्त्रहोतारं व्याचष्टे । प्रस्तुते ऽग्निं नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने वामीरनु संदृशि विश्वा रेतांसि धिषीयागन्देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमातिष्ठतानु वातस्य पत्मन्निड ईडिता इति । स यदेवैनामुद्गातोपमीवति[२] तदेवा[३] पत्न्यूरुणा पदेकमीरुपप्रवर्तयति । नग्नं कृत्वोरुमुपप्रवर्तयति ॥१४॥

होत एवोत्तमेति प्राकृहोतुः कालात्परावर्ततेऽध्वर्युरध्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शꣳसति । प्रतिगृणात्यथ यत्र होतुरभिजानाति स्वादुष्किलायं मधुमाꣳ उतायमिति तदुभयतो-मोदं प्रतिगृणाति मोदा मोद इव मदा मोद इवेत्या[४] व्याहावादथ यत्र होतुरभिजानाति तन्नु तन्वजमो भानुमन्विहीति तत्प्रतिप्रस्थाता ध्रुवं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यथैनं प्रच्यावयति

---

१ सꣳ found in HT, is omitted in most of the MSS

२ °मीयति HJFP Bh. (one MS) Keś; °मीवति BT Bh. (another MS)

३ Thus HBTJP, सदैषा F (सदा एषा Keś)

४ मोदामोद इवेत्या B, मोदादैवेत्या T, मोद इव मदा मोदै इवेत्या J, मोदा मोदै इव मोदा मोदैं इवेत्या F; मोदा मोदैव मदा मोदैवेत्या HP, Bh and Keś.- अर्धर्चे मोदा मोद इवेति प्रथमे मदा मोद इवेति ।

विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्वित्यथैनमाहरति दिवि देवान्दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवानित्यथैनꣳ होतृचमसे ऽवनयति ध्रुवं ध्रुवेण हविषाव सोमं नयामसि । यथा नः सर्वमिज्जगदयक्ष्माꣳ सुमना असत् ॥ यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् । यथा नः सर्वा इद्दिशो ऽस्माकं केवलीरसन्निति प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङ्ङेत्योद्यच्छत एतꣳ होतृचमसꣳसमुद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थ्यशा यज सोमानामिति वषट्कृतानुवषट्कृते द्विर्जुहोति तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहुत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यंसु सवनभक्षो ऽग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति यथाचमसं चमसाꣳश्चैव स इत्यात्मानं प्रत्यभिमृशन्ते नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते ऽथैताꣳश्च-मसानद्भिः पूरयित्वोत्तरेणाहवनीयं प्राचो वोदीचो वा सादयन्ति तेषु चीꣳस्तीꣳश्च दूर्वाग्रन्थीन्प्रास्यत्येकैक च दर्भपुञ्जील-मंयोक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य प्रशास्तः प्रसुहोति सर्पतेत्याह प्रशास्ता सर्पति तृतीयसवनम् ॥ १५ ॥

चतुर्थः ॥

अथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्संमृड्ढीत्या- १ हरन्त्येतानाग्नीध्रादौपयजानङ्गाराꣳस्तानग्रेण होतारं निवपत्युपसीदत्युपयष्टा गुदतृतीयेनाथाध्वर्युः पृषदाज्यं विहृत्य जुह्वाꣳ

जघनेन दक्षिणेन हविर्धाने[1] परीत्य दक्षिणेन मार्जालीयं धिष्णियꣳ स्फ्येनोद्धृत्यावोक्ष्य दक्षिणाग्रं बर्हिः स्तीर्त्वाद्भिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इत्यथ तिस्रो धाना ददात्येतत्ते ततासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये च त्वामन्वित्यथ[2] पितरो यथाभागं मन्दध्वमित्युक्त्वोदङ् पर्यावृत्याच पञ्चहोतारं व्याचष्टे ऽथाभिपर्यावृत्य तथैवाद्भिर्मार्जयित्वैतेनैव यथेतमेत्याग्नीध्रीये द्वे स्रुवाहुती जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्यामथाहवनीये शाकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि स्वाहा मनुष्यकृतस्यैनसो ऽवयजनमसि स्वाहा पितृकृतस्यैनसो ऽवयजनमसि स्वाहेत्यथाप्सु सोमाप्ययुंपविश्यावघ्रेण भक्षयन्त्यप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षितस्योपहूतस्योपहूतो भक्षयामीत्यथैना निनीयोपोत्थायादित्यमुपतिष्ठन्ते ॥ १७ ॥

अपाम सोममृता अभूमादर्श ज्योतिरविदाम देवान्। किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्येति यद्यु वा अस्तमित आदित्यो भवत्याहवनीयमेवैतेन यजुषोपतिष्ठन्ते ऽथाग्नीध्रं हुत्वाग्नीध्रे दधिद्रप्सान्भक्षयन्ति दधिक्राव्णो अका-

१ हविर्धाने PHBT; हविर्धानं JF.

२ इति om. HFP.

रयिमित्यथ सपत्नीमर्जनं जपन्त्युभा[1] कवी युवाना सत्या ता धर्मणस्पती। सत्यस्य धर्मणस्पते वि सख्यानि सृजामह इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य षडुर्मियाणि जुहोति धाता रातिः सवितेदं जुषन्तामिति' त्रीणि यजूंषि यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथ स्रुचि चतुर्गृहीतं गृहीत्वायुर्दां दशमीं जुहोत्यायुर्दा अग्ने हविषो जुषाण इत्येतस्मिन्काले चात्वाले यजमानः कृष्णविषाणां प्रास्यतीन्द्रस्य योनिरसि यज्ञस्य त्वा योनौ सादयामीति वा तूष्णीं वाथ प्रतिप्रस्थाता पत्नीमुदानयति सा चात्वाले शङ्कु प्रास्यति तूष्णीम्' ॥ १८ ॥ पञ्चमः ॥

अथैतमवभृथ्यूं[2] सङ्गादयत्यग्रेणाग्नीध्रमुच्छ्रायायां[3] वा चर्मणि वा' पत्नीशालाया आददते वारुणमुपस्तीर्णाभिघारितमाज्यस्थालीं सस्रुवां स्रुचं बर्हिः प्रतिवसनीये वाससी औदुम्बरीं राजासन्दीं' सदस औदुम्बरीं स्थूणां मैत्रावरुणदण्डं' हविर्धानाभ्यां पूतभृदाधवनीयौ चमसानधिषवणं चर्माधिषवणे फलके षद् छदूग्माल्णौ वायव्यानि स्थालीर्द्रोणकलशं[4] दशापवित्रमृजीषमित्येतत्सह कृष्णाजिनेन यत्किंचित्सोमलिप्तं भवत्यथ वै भवति यदा स्थालीरप्युदायव्यानि हरन्तीत्येतत्समादाय

---

१ जभत्यु॰ all except PBE and Bh, Keś - जपन्ति सर्वे।

२ अथैतद॰ JT.

३ Thus (or उच्छ्राय्यां) BP Bh Keś, उच्छ्रायां T, उत्राया JF, उर्वायां H.

४ स्थाली HJTF; स्थाली BP; स्थालीर Keś.

प्रस्तोतारमाह प्रस्तोतः साम[1] गायेति । साम्ना प्रस्तोतान्वेति । त्रिर्निधनमुपैति । पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणमेतावतान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्नुरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चिदिति । विषुवति द्वितीयं निधनमुपयन्त्यपः परास्याथ वाचयति शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मदित्युदकान्ते तृतीयं निधनमुपयन्त्यथापामन्तमभितिष्ठन्त्यभिष्ठितो वरुणस्य पाश इत्यथाप्सु बर्हिः प्रास्यत्यग्नेरनीकमप आविवेश । अपां नपात्प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्न इत्यथैनत्स्रुवाहुत्याभिजुहोति प्रति ते जिह्वा घृतमुच्चरण्येत्स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषश्चतुरः प्रयाजान्यजत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह ॥ १९ ॥

वरुणायानुब्रूहीति । पूर्वार्धादवदायापरार्धादवदायाभिघारयति । [3]प्रत्यनक्त्यत्याक्तस्याश्राव्याह[3] वरुणं यजेति । वषट्कृते जुहोत्यथोपस्तीर्य सर्वत एव वारुणमवद्यदाहाग्नीवरुणाभ्याꣳ स्विष्टकृद्भ्यामनुब्रूहीति । द्विरभिघारयत्यथाश्राव्याहाग्नीवरुणौ

---

१ Thus HTP Bh Keś, सामानि BJ Mantramālā

२ F ins च।

३ Instead of अत्याक्तस्य (thus TP) B has आक्तस्य; F om. the words अत्याक्तस्य ... द्विरभिघारयति।

स्विष्टकृतौ यजेति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषौ द्वावनूयाजौ यजत्यथाप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरित्यथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुताप इत्यथैतेनापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेम स्वाहेत्यथैनमवभृथं संप्रकिरन्ति यत्किंचित्सोमलिप्तं भवत्यवभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनो ऽयासिषमव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहीत्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति । तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्यान्नेतदृजीषं प्लावयन्ति[1] सह कृष्णाजिनेन देवीराप एष वो गर्भस्तं वः सुप्रीतं सुभृतमकर्म देवेषु नः सुकृतो ब्रूतादिति । बिन्दूनुपैव स्पृशति । न भक्षयत्यथासुपमज्जन्त्यन्योन्यस्य पृष्ठे धावयन्तो[2] विसस्य मेखले प्रतिवसनीये वाससी परिधायोन्नेतारमाहोन्नेतरुन्नो नयेति । समिद्भिरुद्यतीभिरुदायन्त्युद्वयं तमसस्पर्युदु त्यं चित्रमित्यथापामन्तं प्रतियौति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश इत्यथाप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । प्रपथे समिधः कुर्वत एधो

१ ०यंति HBF Keś, ०यति TP

२ Thus HJFP Bh, धावयित्वा BT Keś

ऽग्नेधिषीमहीत्यैत्याहवनीये[1] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेति' व्यवच्छिन्दन्ति परिश्रयणानि' विवर्तयन्ति[1] हविर्धाने दक्षिणेन दक्षिणमुत्तरेणोत्तरम्' ॥ २० ॥

यावदेवाचाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता प्रायणीयस्य निष्काम उदयनीयमभिनिर्वपत्येष एव वेद एतन्मेक्षणमेतद्बर्हिरेषैता स्थाल्यामीꣳ सवामकाषामुत्सिच्य[1] निर्णिज्य तयोदयनीयꣳ श्रपयति' तस्मिꣳस्तथैव श्रप्यमाणे ऽथानेन गार्हपत्यमोपसद्यायां वेद्याꣳ स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं' विषंजुपा तूष्णीं चतुर्थं' पूर्वं परिग्राहं परिगृह्णाति' करणं जपन्नुदुग्नुद्धताद्याभोभ्मिर्हरति'[2] समानं कर्म यथा प्रायणीयस्यैतावदेव नाना' पथ्यामसुच स्वस्तिं प्रथमां यजति तामिहोपोत्तमां यजति' सो तु द्विमध्यवन्तौ[1]' ऽथ पुरस्तात्स्विष्टकृतः स्रुवाङ्गिमुपजुहोति यास्ते विश्वाः समिधः सन्त्यग्न दर्शपूस्तरणाभिघारणाभ्यासेनैतद्ध्रुवाज्यं विच्छिन्दन्ति[1]' समि-

पृषदाज्यमु हैके जुह्वति । संस्थिता उदयनीयः संतिष्ठते । ऽथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथ पृषदाज्यवन्त्याज्यानि गृहीत्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते । नखानि निकृन्तते । सर्वसङ्ख्यां[1] पशोः कुर्वन्त्यथ यदि वशां न लभते मैत्रावरुणीमामिक्षां गार्हपत्ये श्रपयित्वा तयाहवनीये प्रचरति । आज्यभागप्रतिपत्त्येडान्ता[2] संतिष्ठते । ॥ २१ ॥

[3]अथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्याग्नेयमष्टाकपालमुदवसानीयामिष्टिं निर्वपति । श्रपयित्वासादयति । तस्याः पञ्चदश सामिधेन्यः । पञ्च प्रयाजाः[4] । वार्त्रघ्नावाज्यभागावथ हविषो ऽग्ने तमद्याश्वं न इति । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमाग्नानड्वाहं ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्य[5] पूर्वाणि देविकाहवींष्यपि निर्वपत्यनुमत्यै चरुं राकायै चरुं धात्रे

---

१ वशां TP, सङ्ख्या the other MSS, संस्थाः H.

२ Thus only J, ॰प्रतिपत्त्ये॰ B, प्रचरत्याज्यभागाभ्यां प्रचरतीडान्ता F; T altogether corrupt, प्रचरत्याज्यभागप्रचरतीडान्ता H.

३ This Khanda is given according to PBJT; HF differ materially, these MSS. treat firstly of the devikāhavīṃṣi, then of the udavasānīyā iṣṭi

४ प्रयाजानिष्ट्वा TJP

५ Instead of थारण्योर … विहृत्य P has: यथैतदाग्नीमेव स्वाङ्गुलीलपः प्रणीय ।

पुरोडाशं द्वादशकपालमित्यन्वाहार्यमासाद्य वत्सतरीं[1] ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ तदानीमेव पृष्ठ्याट् स्तौलापः प्रणीयोत्तराणि देविकाहवींष्यपि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं धात्रे पुरोडाशं द्वादशकपालमित्यन्वाहार्यमासाद्य वत्सतरं[2] ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथारण्योरग्नीन्समारोह्य स्वान्स्वानायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्य सायंप्रातरग्निहोत्रे प्रतिजुहोति । संतिष्ठते ऽग्निष्टोमः संतिष्ठते ऽग्निष्टोमः । ॥ २२ ॥ षष्ठः ॥

॥ इत्यष्टमः प्रश्नः ॥

1 Thus TJPBh., °तरं BP

2 Thus TBh., °तरीं PBJF.

प्रवर्ग्यं संभरिष्यन्नुपकल्पयते खादिरीमौदुम्बरीं वैणवीं वैकङ्कतीं वाभ्रिं व्याममात्रीं वारत्निमात्रीं वोभयतःक्ष्णुं मृदं च भाविता करणीयां कृष्णाजिनं वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा छागापयो ऽर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूनामधिकरणीं कर्तारं कुशलं वेणुकाण्डं मदन्तीरित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा पूर्वाह्णे प्राञ्चिसुपयन्ति नमो वाच इत्यथाग्रेण प्राञ्चं धनुर्मात्रे वेद्यै गर्तं खानयति। तद्भाविता मृदमवलेपयति। समां विलेपं करोति। तदुपसादयति वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा स्थाले छागापय इत्यथोत्तरतः पार्श्वतः संभाराणां प्राचीनाग्राणि तृणानि संस्तीर्य तेषूपरि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथोत्तरं प्राग्रसवङ्गमयेण[1] स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति। तं परिमण्डलं खरं करोत्यथैनं सिकताभिराभ्राग्निं करोति। तं कुशतरुणकैर्दूर्वाग्रन्थिभिरिति संप्रच्छाद्याथैनं परिश्रयन्ति। तस्योदीचीं द्वारं कुर्वन्ति। तदुपसादयत्यर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूनामधिकरणीं कर्तारं कुशलं वेणुकाण्डमित्यथ गार्हपत्ये मदन्तीरपो ऽधिश्रयत्यन्तर्वेद्यभ्रिं निदधाति। परिश्रयन्ति द्वाराणि। पत्नीशाले पत्नीं परिश्रयन्ति।

---

१ Thus all except B, which has प्रासामवङ्गम॰।

परिस्तृणन्ति' दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ पूर्वाᳲ शान्तिमुपयन्ति येषामनुपेता भवत्यथ[1] गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये सावित्रं जुहोत्यन्वारब्धे यजमाने ॥ १ ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेति' जुहोत्यदीक्षितस्य' जपति दीक्षितस्याथाभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरस्यध्वरकृद्देवेभ्य इत्यथैनामादायोपोत्तिष्ठत्युत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचेति' प्रैति प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु न इत्यथ भावितां श्वदमुपतिष्ठते देवी द्यावापृथिवी अनु मेऽमᳲसाथामित्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य शिर इति' मखाय त्वेति हरति' मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युद्धृत्योपस्थानमेवमेव द्वितीयᳲ हरत्येवं तृतीयं' तूष्णीं चतुर्थं' पर्येतस्यै शिमल्य वराहविहतमुपतिष्ठत इयत्यग्र आसीरित्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य शिर इति' मखाय त्वेति हरति' मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युद्धृत्योपस्थानमेवमेव

१ Thus I only. the other MSS भवत्यथ, PH. om. the passage यव ... भवति।

द्वितीयꣳ हरत्येवं तृतीयं तूष्णीं चतुर्थं पर्यैतस्य मिनध्याय वल्मीकवपामुपतिष्ठते देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीरित्यभिहिया प्रहरत्युध्यासमद्य मखस्य शिर इति मखाय त्वेति हरति मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युद्धृत्योपस्थानमेवमेव द्वितीयꣳ हरत्येवं तृतीयं तूष्णीं चतुर्थं पर्यैतस्ये मिनध्यायोतीकस्तम्बं वाऽदारस्तम्बं वोपतिष्ठत इन्द्रस्यौजो ऽसीत्यभिहिया प्रहरत्युध्यासमद्य मखस्य शिर इति मखाय त्वेति हरति मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युद्धृत्योपस्थानमेवमेव द्वितीयꣳ हरत्येवं तृतीयं तूष्णीं चतुर्थं पर्यैतस्य मिनध्याय कृागापय उपतिष्ठते ऽग्निजा असि प्रजापते रेत इत्यभिमन्त्रयद्धात्युध्यासमद्य मखस्य शिर इति मखाय त्वेति हरति मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने हृदि प्रयोतयत्युद्धृत्योपस्थानमेवमेव द्वितीयं प्रद्यो-तयत्येवं तृतीयं तूष्णीं चतुर्थं चतुर्थेन सह सर्वान् एवै-तत्कृागापय स्थालेन हृदि परिपिन्वत्यचैतामतिशेयामपो ऽभ्यव-हरन्त्यचैव वा प्रकिरन्ति प्रायश्चित्ताय वा परिगायन्ति[1]

॥ २ ॥

अथ प्रवर्ग्यमाददते ऽवनाम्य शुखान्यनभिप्रश्वसन्तो न प्रवर्ग्यं चादित्ये चान्तर्दधति बहवो हरन्तीति विज्ञायते ऽपैनमानयन्त्वैतु ब्रह्मणस्पतिरा देव्येतु सूनृता । अच्छा वीरं

---

१ परिगायन्ति ।

नयें पङ्क्तिराधसं देवा यज्ञं नयन्तु न इत्यथैनं खर उपावहरन्नायुर्धेहि प्राणं धेह्यपानं धेहि व्यानं धेहि चक्षुर्धेहि श्रोत्रं धेहि मनो धेहि वाचं धेह्यात्मानं धेहि प्रतिष्ठां धेहि मां धेहि मयि धेहीत्यथैनमर्मकपाले. शर्कराभिरवाञ्जनपिष्टाभिरजलोमैः कृष्णाजिनलोमैरिति संसृज्य मदन्तीभिरुपसृजति मधु त्वा मधुला करोत्विति' पिण्डं करोति मखस्य शिरो ऽसीति' यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यामुपनिगृह्णात्यथ तृतीयं मृदो ऽपच्छिद्य त्रीन्पिण्डान्करोति' तेषामेकं कर्षं प्रयच्छति गायत्रो ऽसीति' तेनास्य बुध्नं करोति गायत्रेण त्वा छन्दसा करोमीत्यथेतरस्यै मृदो ऽर्धं प्रयच्छति त्रैष्टुभो ऽसीति' तेनास्य मध्यं करोति त्रैष्टुभेन त्वा छन्दसा करोमीति' सर्वामन्ततो मृदं प्रयच्छति जागतो ऽसीति' तेनास्य बिलं करोति जागतेन त्वा छन्दसा करोमीति' तं प्रादेशमात्रं पृथुबुध्नं मध्ये सन्नं करोत्यथास्य वेणुकाण्डेन द्विभागमवविध्यति' तदस्य पिन्वनं भवत्यथास्य त्र्यङ्गुले वा चतुरङ्गुले वा रास्नां पर्यस्यति मखस्य रास्नासीत्यथास्य बिलं गृह्णात्यदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसेत्यथैनमादित्येनाभितपति सूर्यस्य हरसा श्रायेत्यथैनं खरे निदधाति' निहितमनुमन्त्रयते मखो ऽसीत्येवमेव द्वितीयं महावीरं करोत्येवं तृतीयं' तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं चाथ या मृदतिशिष्यते तया प्रवाते प्रतिलेपमुपवातयति' तेषूपवातेषूपकल्पयत एकविंशतिं कृष्णो ऽश्वस्य शकृत्पिण्डानभिमन्त्र्य पचनमित्यथाश्वशकमादीप्य मुखं महा-

वीरं धूपयति वृष्णो अश्वस्य निष्पदसि वरुणस्त्वा धृतव्रत आधूपयतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्यन्तरतश्च बाह्यतश्च सुधूपितं कृत्वा निदधात्येवमेव द्वितीयं महावीरं धूपयत्येवं तृतीयं' तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं चाथोत्तरेण गार्हपत्यमुद्धिममिवावटं खानयति' तं पचनेनावस्तीर्य तस्मिन्नाचो वोदीचो वा महावीराननायतयति' पुरस्तात्पिन्वने' पश्चाद्रौहिणकपाले चाज्यस्थालीं चाथैनाम्पचनेनोपरिष्टात्सं-प्रच्छाद्य मृदावलिम्पति' चतुरङ्गुलमनुद्दिप्रमादीपनायाति शिन-क्ष्योपोपयति ॥ ३ ॥

अर्चिषे त्वेति पुरस्ताच्छोचिषे त्वेति दक्षिणतो' ज्योतिषे त्वेति पश्चात्तपसे त्वेत्युत्तरतस्तिं अह्ना वा रात्र्या वा पश्यन्ते' यदि प्रातरुपोपयति सायमुपैति' यदि सायं प्रातस्तेषु पक्षेपूप-कल्पयते गोपयस्त्वागापयो धृष्टिमसमंदानम्[१] सतम् संदष्टं खारीं शिक्यं कृष्णाजिनमित्यैतत्समादायाभ्यैत्यभीमं[२] महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तममित्यथ धृष्टिमादत्ते विश्वो त्वेति' तथा सुप्यान्महावीरादङ्गारानुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्येत्यथै-नमुच्छ्रयत्युत्तिष्ठ बृहन्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वमित्यथैनमाभये प्रति-

१ Thus all MSS., the word occurs also elsewhere, Bh. Ked. write संघर्षं ।

२ अभ्यैति BT Ked., अभ्येति HHFP.

छादयत्यपद्यमानः पृथिव्यामाशा दिश आपृणेत्यथैनमन्वीक्षते सूर्यस्य त्वा चक्षुषान्वीक्ष ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्यथैनं प्रदक्षिणं पुरीषेण पर्यूहतीदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीति यथावर्णमथैनꣳ संदꣳशेन परिगृह्य सते ऽवधाय छागापयसाच्छृणत्ति गायत्रेण त्वा छन्दसाच्छृणद्मि त्रैष्टुभेन त्वा छन्दसाच्छृणद्मि जागतेन त्वा छन्दसाच्छृणद्मि छृणत्तु त्वा वाक्छृणत्तु त्वोर्क्छृणत्तु त्वा हविश्छृन्द्धि वाचं छृन्धूर्जं छृन्द्धि हविर्देव पुरश्चर सघ्यासं त्वेत्यन्तरतश्च बाह्यतश्च स्वाच्छृतं कृत्वा गोपयसाभिषिञ्चन्त्यथैवमेव द्वितीयं महावीरमाच्छृणत्त्येवं तृतीयं कृष्णौ पिन्वने रौहिणकपाले चाण्डस्थालीं चाथ यदि विधुर्वा प्रदरो वा जायते ऽश्मचूर्णानि छागापयसि संप्रकीर्य तैः सत्युद्योल्मुकेनाभितपति विधुं दद्राणं यदूते चिदभिश्रिष इति द्वाभ्याꣳ सꣳहैव रोहति यद्यु वै सर्वश एव भिद्येत एतान्येव कपालान्यवाञ्जनं पिष्ट्वा येषा मृत्प्रायश्चित्ताय परिशेते तया सꣳसृज्य कृत्वा पक्त्वाच्छृद्य निदधाति तेषां यदा स्वमय उपरमत्यथैनाञ्छायाꣳ समवधाय कृष्णाजिनेनोपरिष्टात्संप्रच्छाद्योत्तरे शालाखण्डे शिक्य आसजति यथा पत्नी न पश्यति तथा न स्मा कालात्परिशेरे ऽथोत्तराꣳ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेति ॥ ४ ॥ प्रथमः ॥

श्वो राज्ञः क्रय इत्युपकल्पयत औदुम्बरीꣳ सथाडामन्दीमौदुम्बरीꣳ स्थूणां गोदोहनीमौदुम्बरं छागायै शङ्कुमौदुम्बरꣳ

शफोपयमनमौदुम्बरꣳ स्रुवमौदुम्बर्यौ स्रुचावनिष्कीर्णे रौहिणहवण्यौ द्वे औदुम्बरी अष्ट्री त्रीणि धवित्राणि कार्ष्णाजिनान्यौदुम्बरदण्डानि[1] । वैणवदण्डानीत्येके । षडौदुम्बरान्छकलान्वैकङ्कतीं च[1] समिधं पञ्चदश वैकङ्कतान्परिधीन्वैकङ्कतीꣳ स्रुवं प्रचरणीं कार्ष्मर्यमयान्परिधीन्सुवर्णरजतौ च रुक्मौ द्वे घर्मदुघे धेनुं च छागां च द्वौ कुशमयौ वेदावेकं मौञ्जं वेदमपरिवासितं मौञ्जं रज्जुदाम मुञ्जप्रलवान्व्रीहिणपिष्टानि खरेभ्यः सिकता इत्यथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा राजानं क्षौमोष्णीषिण्यां[2] निर्वपत्यातिथ्येन प्रचर्य पूर्वाꣳ शान्तिमुपयन्ति नमो वाच इत्यथापरेण गार्हपत्यं तृणानि सꣳस्तीर्य तदेतत्परिघर्म्यꣳ सर्वꣳ सꣳसादयत्यथ मयाडामन्दीमथ स्थूणां गोदोहनीमथ क्षामायै प्रक्रुमित्यथोत्तरेण गार्हपत्यꣳ स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति । तं प्रादेशमात्रं परिमण्डलं महावीरीयं चरं करोत्यथैनꣳ सिकताभिराभाजनं करोत्यथोत्तरेणाहवनीयꣳ स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति । तं प्रादेशमात्रं परिमण्डलमुद्वासनीयं चरं करोत्यथैनꣳ सिकताभिराभाजनं करोत्यथोत्तरे शालामण्डे स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति । तं चतुरश्रं[3] निष्पन्दमवस्तमुच्छ्रितचरं करोत्यथैनꣳ सिकताभिराभाजनं करोत्यथाध्वर्युः प्रचरणीयं

---

1 om HHP
2 क्षौमोष्ण° only I
3 Thus BTBh.; ° the other MSS.

महावीरꣳ शफाभ्यां परिगृह्य मदन्तीये खरे सादयत्यथैनं मौञ्जेन वेदेनापिदधात्यथैतामामन्द्रीमग्रेणाहवनीयं[1] पर्याहृत्य दक्षिणतो निदधाति ' तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोप[2]स्तृणात्यथैतावुपयमौ महावीरौ वेदाभ्यां परिगृह्याग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सघाडामन्द्यां कृष्णाजिने प्राचीनबिलौ सादयत्यथैनामभ्रिमग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सघाडामन्द्यां कृष्णाजिने सादयत्यथैतां स्तदमतिमिष्टामग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सघाडामन्द्यां कृष्णाजिने सादयत्यथैताꣳ स्थूणां गोदोहनीं छागायै शङ्कुमित्यादाय जघनेन दक्षिणेन गार्हपत्यं परिक्रम्य दक्षिणया द्वारोपनिर्हृत्य होतुः संदर्शे स्थूणां निहत्य मौञ्जेन दाम्ना घर्मदुघो वत्सं बध्नन्ति ' तमुत्तरेण छागायै शङ्कुं निहत्य छागां नियच्छन्ति ' प्रत्युक्षति छगलमथैतमेव यथेतमेत्य निष्क्रमयन्ति[3] तपस्ताम् ' क्रयन्ति पत्नीꣳ ' क्रयन्ति होतारꣳ ' क्रयन्ति ब्रह्माणꣳ ' क्रयन्ति प्रतिप्रस्थातारꣳ ' क्रयन्ति प्रस्तोतारꣳ ' क्रयन्त्याग्नीध्रं ' परिश्रयन्ति द्वाराणि ' पत्नीशाले पत्नीं परिश्रयन्ति ' परस्तृणन्ति ' दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ पूर्वाꣳ शान्तिमुपयन्ति येषामनुपेता भवति[4] ' ॥ ५ ॥

---

१ अथैतान्संधाताधंदीम॰ I

२ Thus PIPHF, चाक्षुपाति JB.

३ ॰भ्रामयंति BF.

४ Thus PIH Keś., भवंति TB.

अथाध्वर्युः सपवित्राः प्रोक्षणीराददान आह ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुह्यग्नीद्रौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातः प्रवर्ग्यं विहर प्रस्तोतः सामानि गायेति । तद्ब्रह्मा प्रसौति यजुर्युक्तꣳ सामभिराक्तखं त्वा विश्वैर्देवैरनुमतं मरुद्भिः । दक्षिणाभिः प्रततं पारयिष्णुꣳ स्तुभो वहन्तु सुमनस्यमानꣳ स नो रुचं धेह्यहृणीयमानो भूर्भुवः सुवरोमिन्द्रवन्तः प्रचरतेत्यथाध्वर्युः प्रचरणीयं महावीरं प्रोक्षति यमाय त्वा मखाय त्वा सूर्यस्य हरसे त्वेत्यभिप्राभुवन्परान्परान्संभारान्प्रोक्षति । तमेव प्रतिप्रस्थाता प्रवर्ग्यं विहरत्यथाहवनीये कार्ष्मर्यमयान्परिधीन्परिदधाति । तदपसादयति षडौदुम्बराञ्छकलान्वैकङ्कतीं च समिधं गार्हपत्ये त्रयोदश वैकङ्कतान्परिधीन्सुवर्णरजतौ च रुक्मौ मुञ्जप्रलवान्रौहिणपिष्टानीत्यथैव आग्नीध्रो जघनेन गार्हपत्यमुपविश्य धृष्टीभ्यां प्रतीचो ऽङ्गारान्निरूह्य तेषु रौहिणकपाले उपदधात्यथ दारुणसंयुतानि पिष्टानि संयुत्य रौहिणौ पुरोडाशावधिश्रयत्यथाज्यं निर्वपत्यथाज्यमधिश्रयत्युभयं पर्यग्नि कृत्वा रौहिणौ पुरोडाशौ श्रपयत्येतस्मिन्काले प्रतिप्रस्थाता मौञ्जेन वेदेन होमार्थानि पात्राणि संमृशति महावीरꣳ ध्रुवं पिन्वने रौहिणहवनी उपयमनमित्यथ प्रतिप्रस्थाताभ्युत्पूय रौहिणौ पुरोडाशावुपस्तीर्णाभिघारितावुद्वास्य रौहिणहवनीभ्यां परिगृह्यान्तर्वेद्यासादयति । दक्षिणं परिधिमग्निमन्वेकमुत्तरं परिधिमग्निमन्वितरं । प्राञ्चौ पूर्वाह्णिके[1] । प्रत्य-

१ पौर्वाह्णिके ॥

स्वावपराह्णिके ऽध्वर्युः प्रवर्ग्यं महावीरꣳ शफाभ्यां परिगृह्य सव्ये पाणौ समाहृत्याज्यस्थाल्याः सकृदुपहतेनाज्येन गार्हपत्ये ऽनवानꣳ संततां सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा मनसे स्वाहा वाचे सरस्वत्यै स्वाहेति चतस्र उत्तरा यथोपपादं दक्षाय स्वाहा क्रतवे स्वाहौजसे स्वाहा बलाय स्वाहेत्यथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्त्वित्यथैतस्मिन्काले प्रतिप्रस्थाता राजतꣳ रुक्मं प्रवृञ्जनीये खर उपगूहति पृथिवी तपसस्त्रायस्वेत्यथ मुञ्जप्रलवानग्न्यन्तिषण्यादीपयत्यर्चिरसि शोचिरसि ज्योतिरसि तपो ऽसीति तान्प्रवृञ्जनीये[1] खरे संप्रकीर्य तेषु प्रवर्ग्यं महावीरꣳ सꣳसादयति ॥ ६ ॥

सꣳसीदस्व महाꣳ असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतमित्यथैनमाज्येन पूरयत्यञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः । पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादीदित्यथास्य प्रादेशेन दिशो व्यास्थापयत्यनाधृष्या[2] पुरस्तादग्नेराधिपत्य आयुर्मे दा इति पुरस्तात्पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दा इति दक्षिणतः सुषदा पश्चाद्देवस्य सवितुराधिपत्ये प्राणं मे दा इति पश्चादाश्रुतिरुत्तरतो मित्रावरुणयोराधिपत्ये श्रोत्रं

---

१ साज्य॰ BT Keś. पथैनमाज्य॰ or पथेमाज्य॰ the other MSS.

२ Thus BTI Bh. and HP (the last two व्यास्था॰); FJ : व्यवस्था॰; Keś. thrice व्यास्थापयत्य॰

मे दा इत्युत्तरतो । विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्ये ब्रह्म मे दाः क्षत्रं मे दास्तेजो मे धा वर्चो मे धा यशो मे धास्तपो मे धा मनो मे धा इत्युपरिष्टादथैनामभिमृशति मनोरश्वासि भूरिपुत्रा विश्वाभ्यो मा नाष्ट्राभ्यः पाहि सूपसदा मे भूया मा मा हिंसीरित्यथ इध्मीभ्यामुदीचो[1] ऽङ्गारान्निरूहति तपो ष्वग्ने अन्तराँ अमित्रान्तपा शंसमररुषः परस्य । तपो वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयास इति । तैरेनं प्रदक्षिणं परिचिनोति चित स्थ परिचितः स्वाहा मरुद्भिः परिश्रयध्वमित्यथैनं पयोदग्रभिर्वैकङ्कतैः परिधिभिः परिचिनुतो ऽध्वर्युश्च प्रतिप्रस्थाता च । मा असीति प्राङ्ङध्वर्युः । प्रमा असीत्युदञ्चौ प्रतिप्रस्थाता । तावेवमेव व्यतिषङ्गं प्रतिमा असि संमा असि विमा अस्युन्मा असीत्यथैनं पयोदग्रं परिधिं दक्षिणत ऊर्ध्वाग्रं निमिनोत्यन्तरिक्षस्यान्तर्धिरसीत्यथैनꣳ सौवर्णेन रुक्मेणापिदधाति दिवं तपसस्त्रायस्वेत्यथैनमुपतिष्ठत आभिर्गीर्भिः शुक्रं ते अन्यदर्हन्बिभर्षि सायकानि धन्वेति । प्रज्वलिते रुक्ममपकर्षति । ॥ ७ ॥

अथ धवित्राण्यादत्ते गायत्रमसीत्यन्यतरत्त्रैष्टुभमसीत्यन्यतरज्जागतमसीत्यन्यतरत्तैरेनं पश्चात्प्राङ् आन्वाच्योर्ध्वं धूनोति मधु[2] मध्वित्युत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति ।

---

1 इध्मीभ्यामु° only IPH.

2 मधु twice JT, thrice the other MSS.

तयोरन्यतरदाग्नीध्रायोत्प्रयच्छत्यथैनं त्रिः सदक्षिणं परियन्ति प्रणवेप्रणवे धून्वन्तस्त्रिः परीत्योत्तरतस्तिष्ठन्त्यथ धवित्राण्यादत्ते ' ऽपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति ' तयोरन्यतरदाग्नीध्रायोत्प्रयच्छत्यथैनं पर्युपविशन्ति ' पश्चात्प्राङ्मुखो ऽध्वर्युरुपविशति ' पुरस्तात्प्रत्यङ्मुखः प्रतिप्रस्थातोत्तरतो दक्षिणामुख आग्नीध्रस्त एवमेव प्रणवेप्रणवे धून्वन्त आसत उपसमासमु[१]त्सुकान्याधायन्तो महावीरमथ यत्र होतुरभिजानाति याभिर्वर्तिको ग्रसितामसुञ्चतमिति तदेनमुपोत्थाय रोचयतो ऽध्वर्युश्च यजमानश्च दश प्राचीर्दश भासि दक्षिणेत्येतेनानुवाकेनाथ यत्र होतुरभिजानात्यप्सन्तीमश्विना वाचमस्मे इति तद्धवित्राण्युपोद्यच्छन्ते ' ऽथ यत्र होतुरभिजानात्यरूरुचदुपसः पृश्निरग्रिय इति तद्रुचितो घर्म इत्युक्त्वा यथेतं त्रिः पुनः प्रतिपरियन्ति निधाय धवित्राण्यवकाशैरवेक्षमाणा उपतिष्ठन्ते ऽपश्यं गोपामिति प्रतिपद्याशीमहि त्वा मा मा हिंसीरित्यातो ' ऽथ गार्हपत्यमुपतिष्ठते त्वमग्ने गृहपतिर्विशामसि विश्वासां मानुषीणाꣳ शतं पूर्भिर्यविष्ठ पाह्यꣳहसः समेद्धारꣳ शतꣳ हिमास्तन्द्राविणꣳ हार्दिवानमिहैव रातयः सन्त्वित्यन्तर्हिते प्रतिप्रस्थाता वेदे पत्नीं वाचयति त्वष्टीमती ते सपेयेत्यान्तादनुवाकस्य ' तस्मिन्काले प्रतिप्रस्थाता दक्षिणꣳ रौहिणं जुहोत्यहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेति ' ॥ ८ ॥ द्वितीयः ।

१ Thus BPJ Bh. Keś , उपसमाधत्त॰ H1 , उपसमाधेज॰ P.

अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽदित्यै रास्नासीति ' दोहनं कऽसं पिन्वने इति[1] प्रतिप्रस्थातापरेण परिक्रम्यायैतां घर्मदुघं त्रिरुपाऽह्वयतीड एह्यदित एहि सरस्वत्येहीति ' त्रिरुपैर्दक्षिणया द्वारोपनिष्क्रम्य यदस्यै नाम भवति तेनासावेह्यसावेहीत्येनाऽ[2] रशनयाभिदधात्यदित्या उष्णीषमसीति ' वायुरस्यैड इति घर्मदुघो वत्समभिमृशत्यथैनमुपावसृजति पूषा त्वोपावसृजत्वश्विभ्यां प्रदापयेति ' धयन्तमनुमन्त्रयते[3] यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि। यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे करिति ' प्रस्तायामुन्नयत्युस्र घर्मऽ शिऽषोस्र घर्मं पाहि घर्माय शिऽषेति ' नियुज्य संधायोपसीदति बृहस्पतिस्त्वोपसीदत्विति ' स्तनान्संमृशति दानव स्थ पेरवो विष्वग्वृतो लोहितेनेत्यथ यत्र होतुरभि जानात्या दशभिर्विंवस्वत इति तदेनां पिन्वने पिन्वयत्यश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेन्द्राय पिन्वस्वेन्द्राय[4] पिन्वस्वेत्यतिशिष्ट कऽसे दोहयत्येतस्मिन्काले

---

१ अथ ins BT.

२ असावेहि twice JT, thrice the other MSS, also P, comp Rudradatta on Āp. XV 9. 4.

३ Thus TF Bh. Keś (the last glosses स्तनं पिबन्तमनु॰, thus also the Somaprayoga IO), the other MSS IBHP have स्तनयति॰।

४ All the MSS, except P, have इन्द्राय पिन्वस्व once only, but comp. Taitt. Ār. v 7. 4 s. f. and 5 init and Padarthanu v. p. 287

प्रतिप्रस्थाता पिन्वने छागां पिन्वयति तूष्णीमेव अथ होतुर-
भिज्ञायोत्तिष्ठ ब्रह्मणस्पत इति तत्प्रतिप्रस्थात्रे पयसी
संप्रदायैतेनैव यथेतमेत्य शफोपयमानादत्ते[1] गायत्रो ऽसीत्यन्य-
मादत्ते त्रैष्टुभो ऽसीत्यन्यज्जागतमसीत्युपयमनमेव अथ होतुर-
भिज्ञायोपद्रव पयसा गोधुगोषमिति तत्पयसी आश्रि-
यमाणे ऽभिमन्त्रयते[2] महोजो भागमोप सेवीन्द्राश्विना मधुनः
सारघस्य घर्मं पात वसवो यजता वडित्यथ पुरस्तात्प्रत्यङ्ङासु-
पविश्य महावीरे पयसी अवनयतो ऽध्वर्युश्च प्रतिप्रस्थाता
चाध्वर्युः पूर्वो गोपयो ऽवनयति स्वाहा त्वा सूर्यस्य रश्मये
वृष्टिवनये जुहोमि स्वाहेत्यथाध्वर्योपाणमन्वीक्षते मधुहविरसि
सूर्यस्य तपस्तपेत्यथैतस्मिन्काले प्रतिप्रस्थाता छागापयो ऽवनयति
तूष्णीमुभयꣳ समानीयाध्वर्युस्तृतीयमवनयत्यथ यत्कꣳसे पय-
स्तदुपयमने समवनयति प्रत्यूह्याङ्गारानथाध्वर्युः प्रचरणीयं
महावीरꣳ शफाभ्यां परिगृह्णाति ॥ ९ ॥

द्यावापृथिवीभ्यां त्वा परिगृह्णामीति[3] वेदेनाधस्तादुप-
गृह्योपयमनेनोपयच्छत्यन्तरिक्षेण त्वोपयच्छामीत्यथैनमादायो-
पोत्तिष्ठति देवानां त्वा पितॄणामनुमतो भर्तुꣳ शकेयमिति

---

१ Thus BT, Keś and Taitt Ār. v. 7. 5, comp also Āp. xv. 9. 10 शफोपयमनानादत्ते HJIP शफोपयमनान्यादत्ते F and Padārthanirv. p. 287

२ Thus HIBP Keś, Padārthanirv.; प्रतिमंत्रयते TJF.

३ I ins. धौर्जेन before वेदेन।

प्राङ् हरति तेजो ऽसि तेजो ऽनु प्रेह्यग्निर्मा पृथिव्याः पातु वायुरन्तरिक्षात्सूर्यो दिवो दिविस्पृङ्मा मा हिꣳसीरन्तरिक्षस्पृङ्मा मा हिꣳसीः पृथिविस्पृङ्मा मा हिꣳसीः सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीत्यथ वातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहेति पञ्चामवानमेवमेव द्वे उत्तरे। यद्युत्तराणि यथोपपादमग्नये त्वा वसुमते स्वाहा सोमाय त्वा रुद्रवते स्वाहा वरुणाय त्वादित्यवते स्वाहा बृहस्पतये त्वा विश्वदेव्यावते स्वाहा सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा यमाय त्वाङ्गिरस्वते पितृमते स्वाहेति। विश्वा आशा दक्षिणसदिति दक्षिणत आसीनं ब्रह्माणमीक्षते। विश्वान्देवानयाडिहेति पश्चादासीनꣳ होतारꣳ। सव्येनाभ्याक्रामञ्जपति स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना स्वाहाग्नये यज्ञियाय शं यजुर्भिरिति। यजमानमतिवाचयत्यश्विना घर्मं पातꣳ हार्दिवानमहर्दिवाभिरूतिभिरस्तु वां द्यावापृथिवी मꣳसातामित्युद्वेराश्राव्याह घर्मस्य यजेति। वषट्कृते जुहोति स्वाहेन्द्रायेति। स्वाहेन्द्रावडित्यनुवषट्कृते हुत्वा वाचयति घर्ममपातमश्विना हार्दिवानमहर्दिवाभिरूतिभिरस्तु वां द्यावापृथिवी अमꣳसातां तं प्रावं यथावट् नमो दिवे नमः पृथिव्यै दिवि धा इमं यज्ञं यज्ञमिमं दिवि धा दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छ पञ्च प्रदिशो गच्छ देवान्घर्मपान्गच्छ पितॄन्घर्मपान्गच्छेत्येतस्मिन्काले प्रतिप्रस्थाता पिन्वनेनोपयमनादुपहत्य प्रवर्ग्यीयं महावीरं पूरयत्यथैनमन्तःपरिध्यभिपीय-

यतो[1] ऽध्वर्युश्च प्रतिप्रस्थाता च महावीरे पीपिह्यूर्जे पीपिहि ब्रह्मणे पीपिहि क्षत्राय पीपिह्यद्भ्यः पीपिह्योषधीभ्यः पीपिहि वनस्पतिभ्यः पीपिहि द्यावापृथिवीभ्यां पीपिहि सुभूताय पीपिहि ब्रह्मवर्चसाय पीपिहि यजमानाय पीपिहि मह्यमित्युपांशु ज्यैष्ठ्याय पीपिहीत्युच्चैरथैनमनुदिशमात्मानमभि पीपयति त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वेत्यथ यन्महावीरे पयस्तदुपयमने समवनयत्यथोद्धृत्याभ्याय्यैतदुपयमनमन्तर्वेदि प्राचीनबिलं सादयत्यथैनमस्मिन्काले प्रतिप्रस्थाता राजतं रुक्ममुद्वासनीये खर उपगूहति तस्मिन्प्रचरणीयं महावीरं सादयति ॥ १० ॥

घर्मासि सुधर्मा मे न्यस्मे ब्रह्माणि धारय क्षत्राणि धारय विशं धारय नेत्त्वा वात स्कन्दयादित्यथ यद्यभिचरेदमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थं गच्छ यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य षडौदुम्बराञ्छकलान्यादत्ते तेषा-मेकैकेनोपयमनादुपहत्य पूर्वार्धे आहवनीयस्य प्रद्योतयति पूष्णे शरसे स्वाहेत्यथैतमन्तराञ्जनं मध्यमे परिधौ संस्पृष्टं सादयत्येवमेव द्वितीयेनोपयमनादुपहत्य पूर्वार्ध एवाहवनीयस्य प्रद्योतयति ग्रावभ्यः स्वाहेति तं तथैवाञ्जनं[2] मध्यमे परिधौ

१ Thus (अभि०) all and Bh, अतिपीय० F only.

२ Thus B, तंतथैतव ॥ अमं I, FJ om तं and have तथान्तरांजनं, तंतथान्तरांजनं T, तथान्तरांजनं H, comp infra.

संसृष्टं सादयत्येवमेव तृतीयेनोपयमनादुपहत्य मध्यत आहवनीयस्य प्रद्योतयति प्रतिरेभ्यः स्वाहेति ' तं तथैवाञ्जनं[1] मध्यमे परिधौ संसृष्टं सादयत्येवमेव चतुर्थेनोपयमनादुपहत्यापरार्धे आहवनीयस्य प्रद्योतयति द्यावापृथिवीभ्यां स्वाहेत्यथैनमूर्ध्वाञ्जनं भस्मान्त उपगूहत्येवमेव पञ्चमेनोपयमनादुपहत्य दक्षिणार्धे आहवनीयस्य प्रद्योतयति पितृभ्यो घर्मपेभ्यः स्वाहेत्यथैनं बहिराञ्जनं दक्षिणे परिधौ संसृष्टं सादयत्यथैतं षष्ठं शकलं सर्वेषु लेपेषु समज्योपयमनादन्तत उपहत्योत्तरार्धे आहवनीयस्य प्रद्योतयति रुद्राय रुद्रहोत्रे स्वाहेत्यथैनमुत्तरेण शालाया अतीकाशेनाग्नीध्रसमारोपे निरस्यत्यमुना सह निरर्थं गच्छ योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्यातिमिष्टाञ्जकलानद्भिः संस्राव्याहवनीये[2]ऽनुप्रहरत्येतस्मिन्काले प्रतिप्रस्थातोत्तरं रौहिणं जुहोत्यहर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषां स्वाहेत्यथैतां समिधं मध्यत आहवनीयस्याभ्यादधाति तूष्णीं ' तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोति भूः स्वाहेत्यथैतदुपयमनमन्तर्वेदि प्राचीनबिलं सादयित्वा तथैवाग्निहोत्रविधिं चेष्टित्वा ' स यावन्तः प्रवर्ग्यस्य[3] र्त्विजस्तेषूपहवमिष्टा यजमान एव प्रत्यक्षं भक्षयति हुतं हविर्मधु हविरिन्द्रतमेऽग्नौ पिता नोऽसि मा

१ Thus PJHI, तथैवाभिराञ्जनं TF

२ संसृष्ट all.

३ प्रवर्ग्यस्य om. PHTJ, the three others read it

मा हिꣳसीरश्याम ते देव घर्म मधुमतो वाजवतः पितुमतो ऽङ्गिरस्वतः स्वधाविनो ऽशीमहि त्वा मा मा हिꣳसीरित्यथै-तदुपयमनं परिकर्मी वाग्भिर्वोच्छिष्टखरे मार्जयित्वान्तर्वेदि प्राचीनबिलꣳ सादयित्वा तस्मिन्सुवर्णरजतौ प्रे रुक्मौ प्रास्य मदन्तीरप आनीय हिरण्यवतीभिर्मार्जयन्ते ॥ ११ ॥

हिरण्यवर्णाः शुचयः पावका इति चतसृभिश्चैव मद-न्तीरपो निनीयाथ्यस्याध्वाः स्रुवेणोपघातं घर्मप्रायश्चित्तानि जुहोति प्राणाय स्वाहा पूष्णे स्वाहेत्येताभ्यामनुवाकाभ्यामथैत-दुपयमनमन्तर्वेदि प्राचीनबिलꣳ सादयित्वा तदेतत्परिचर्म्यꣳ सर्वꣳ समवप्रमयच्छाह[2] घर्मायोत्साद्यमानायानुब्रूहीत्यथैतदुपय-मनमपेणाहवनीयं पर्याहृत्य दक्षिणतः सम्भासन्धौ कृष्णाजिने प्राचीनबिलꣳ सादयति स्वाहा त्वा सूर्यस्य रश्मिभ्य इत्यथो-त्तराꣳ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेत्यथा-पराह्णमापराह्णिकेन प्रवर्ग्येण प्रचरति[1] तस्य यदविहितं विहित-मेवास्य तत्समानं कर्म दक्षिणस्य रौहिणस्य होमादथ दक्षिणꣳ रौहिणं जुहोति रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेत्येवमेवोत्तरꣳ रौहिणं जुहोति[1] समानं कर्म समिदाधानादथैताꣳ समिधं मध्यत आहवनीय-

---

१ om T, Keś also reads it

२ Thus Bh, Keś. (pr. m.), समवप्रमथन चाह J, समवप्रयच्छाह PHT. (Keś sec m), सवमवप्रयच्छाह F, समवप्रमाह I, समवमृगयाह B, comp. Baudh. pitṛmedhasūtra p. 21 I and Śat. Br. vii. 3.2 1. The word occurs again infra, ix 15, and in the Aśvamedhapraśna.

स्याभ्यादधात्यपीपरो माह्नो रात्रियै मा पाह्येषा ते ऽग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा माञ्जीरिति सायमपीपरो[१] मा रात्रिया अह्नो मा पाहीति प्रातः । प्रातर्मन्त्रेणात ऊर्ध्वं पूर्वाह्णिके[२] ऽभ्यादधाति । सायंमन्त्रेणापराह्णिके । तस्यामादीप्तायां[३] प्रतिमुखं [४]दिवुतोऽत्यग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायम् । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः । समानं कर्म संप्रैषादेतदुपयमनमपेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्रतीचीमभिमृश्य सादयति स्वाहा त्वा नक्षत्रेभ्य इत्ययोपाराघ्ं शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेति । स एवमेव प्रवर्ग्येण प्रचरति त्र्यहं षडहं द्वादशाहं संवत्सरं । चतुरो वा[५] मासाऽस्थापयित्वे ऽथौ । प्रवर्ग्य[६] भक्षयित्वा संवत्सरं न मांसमश्नीयान्न रामामुपेयान्न मृन्मयेन पिबेन्नास्य राम उच्छिष्टं पिबेत्तेज एव तत्संश्यतीति, ब्राह्मणम् ॥ १२ ॥ तृतीयः ॥

प्रवर्ग्यमुद्वासयिष्यन्नुपकल्पयते चौडुम्बराकानि माऽस्तौकि घृतान्युदकुम्भौ दधि मधुमिश्रं पुष्पमिश्रमवकाभारं विंशति-

---

१ सायम् om. all except B

२ पौर्वाह्णिके B only.

३ This passage is found thus in T · सायंमन्त्रेणात ऊर्ध्वमापराह्णिके ऽभ्यादधाति तस्यामादीप्तायां etc., but comp. Rudradatta on Āp xv. 12,7.

४ दिव् om PTHI Ke4.

५ om. TF

६ प्रवर्ग्यं FIJ; the other MSS. also P and Bh., प्रवर्ग

औदुम्बरीः समिधो मुञ्जप्रलवानौहिणपिष्टानि खरेभ्यः सिकता इत्येव पूर्वां शान्तिमुपयन्ति नमो वाच इत्यथाग्रेणाहवनीयं तृणानि संस्तीर्य तदेतत्परिघर्म्यं सर्वं सह संसादयन्त्येव मपाष्ठामन्दीमथ स्थूणां गोदोहनीमथ शाणार्थं शङ्कुमित्यथैतौ खरौ नानैव सतयोः समुप्यानैव सह संसादयन्त्यथैतमुच्छिष्टखरं¹ परिकर्मी वाग्नीध्रो वा सते समुप्य दक्षिणया द्वारोपनिर्हृत्य मार्जालीयदेशे निवपत्यथैतेनैव यथेतमेत्य निष्क्रमयन्ति² उपलाम्भयन्ति पत्नीं। ह्वयन्ति होतारं। ह्वयन्ति ब्रह्माणं। ह्वयन्ति प्रतिप्रस्थातारं। ह्वयन्ति प्रस्तोतारं। ह्वयन्त्याग्नीध्रं। परिश्रयन्ति द्वाराण्यथैतां पत्नीमुदग्दमेन वाससान्तर्दधति³। परिस्तृणन्ति। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ पूर्वां शान्तिमुपयन्ति येषामनुपेता भवन्त्यथ⁴ गार्हपत्य आज्यं विलाप्योत्पूयाथैतस्मिन्काले प्रतिप्रस्थाताहवनीये शलाकामिध्ममादीप्य मुखदघ्ने धारयन्पुरस्तात्प्रत्यङ्मुखस्तिष्ठति। तमध्वर्युः पश्चात्प्राङ्मुखस्तिष्ठन्स्रुवाहुत्याभिजुहोति घर्म या ते दिवि शुग्या गायत्रे छन्दसि या ब्राह्मणे या हविर्धाने तां त एतेनावयजे स्वाहेति। तमेवैवं शलाकापरमादीप्य नाभिदघ्ने धारयन्पुरस्तात्प्रत्यङ्मुखस्तिष्ठति। तमध्वर्युः पश्चात्प्राङ्मुखस्तिष्ठन्स्रुवाहुत्याभिजुहोति घर्म या ते ऽन्तरिक्षे शुग्या त्रैष्टुभे

१ अथैनदु० HIP; अथैनदु० TF, अथैनदु० B.

२ Thus PITHJ, निष्क्रामयति BF.

३ Thus BT Bh Keś., ०दधाति IFHP.

४ Thus PIFHJ, भवत्यथ BT.

छन्दसि या राजन्ये याग्नीध्रे तां त एतेनावयजे स्वाहेति । तमत्रैव प्रास्यापरमादीप्य जानुदघ्ने धारयन्पुरस्तात्प्रत्यङ्मुखस्तिष्ठति । तमध्वर्युः पश्चात्प्राङ्मुखस्तिष्ठन्स्रुवाहुत्याभिजुहोति घर्म या ते पृथिव्याꣳ शुग्या गायत्रे छन्दसि या वैश्ये या सदसि तां त एतेनावयजे स्वाहेति । तमत्रैव प्रास्य विहृत्य द्वाराण्यथ प्रवर्ग्यमादाय पूर्वया द्वारोपनिष्क्रामन्त्यसु नो ऽघायुमतिरग्निद्युमते त्वमिति द्वाभ्यामथ महावेदिमवक्रम्य प्रस्तोतारमाह प्रस्तोतः साम[1] गायेति । साम्ना प्रस्तोतान्वेति[2] । त्रिर्निधनमुपैति । पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणमथाभिक्रामन्ति ॥ १३ ॥

दिवस्त्वा परस्पाया अन्तरिक्षस्य तन्वः पाहि पृथिव्यास्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यस इति । विपुर्वति द्वितीयं निधनमुपयन्त्यथाभिक्रामन्ति ब्रह्मणस्त्वा परस्पायाः क्षत्रस्य तन्वः पाहि विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यस इत्युपरवकाले तृतीयं निधनमुपयन्त्यथाभिक्रामन्ति प्राणस्य त्वा परस्पायै चक्षुषस्तन्वः पाहि श्रोत्रस्य त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यस इत्यपरेणोत्तरवेदिमुपरमन्ति । स यो यजमानस्तमाहानेनोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं परिषिञ्चन्परीहीति । स तथा करोति । परिषिच्यमाने यजमानं वाचयति वङ्गुरसि शंयुधायाः

---

१ Thus TD Keś., Prayoga, Padārthasāra, साम्नेति IFBJP.

२ T ins. साम वैरूपं।

शिरश्छिन्नधायाः शं च वक्षि परि च वक्षीति निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्यैत्यथोत्करनाभिमभिद्रवति चतुः-स्रक्तिर्नाभिर्ऋतस्य सदो विश्वायुः शर्म सप्रथा अप द्वेषो अप ह्वरो ऽन्यव्रतस्य सश्चिमेत्यथैतौ खरावुत्तरेणोत्करमभ्यव-किरति[1] तं[2] स्फ्योभ्यां प्राग्दीर्घं खरं करोति तस्मिन्सुवर्णं हिरण्यं निधाय कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणा-त्यथैनं[3] रौहिणपिष्टैरनुप्रकीर्य मुञ्जप्रलवैरनुविधाय सिक-ताभिरनुप्रकिरत्यथाध्वर्युः प्रचरणीयं महावीरं शफाभ्यां परिगृह्य दध्ना मधुमिश्रेण पूरयति धर्मैतत्ते ऽन्नमेतत्पुरीषं तेन वर्धस्व चा च प्यायस्व वर्धिषीमहि च वयमा च प्यासिषी-महीत्यथैनमभिपूरयति महीनां पयो ऽसि विहितं देवत्रा ज्योतिर्भा असि वनस्पतीनामोषधीनां रसो वाजिनं त्वा वाजिनो ऽवनयाम इत्यथैनं पूर्वार्धे खरस्य सादयत्यूर्ध्वं मनः सुवर्गमिति ॥ १४ ॥

अथैतावुपशयौ महावीरौ वेदाभ्यां परिगृह्य दध्ना मधु-मिश्रेण पूरयित्वाग्रेण प्रचरणीयं महावीरं संस्पृष्टौ साद-यत्यथैतौ प्रचरण्यौ दध्ना मधुमिश्रेण पूरयित्वोपरिष्टान्महावीरेषु प्रतीचीनबिलान् सादयत्यथैतौ रुक्मौ दध्ना मधुमिश्रेण सम-भ्याभितः प्रचरणीयं महावीरं संस्पृष्टौ सादयत्यथैते पिन्वने

---

१ Thus IFHP Keś, Prayoga, Padārthanirv ; अतिकिरति BJT.
२ तं BPI Keś ; तद् J; त T; F om.
३ आदृणाति instead of उपस्तृ॰ IPH.

दध्ना मधुमिश्रेण पूरयित्वाभितः प्रचरणीयं महावीरं प्रतीचीनबिले सꣳस्पृष्टे सादयत्यथैतं मौञ्जं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्याग्रेण महावीरान्प्रतीचीनाग्रꣳ[1] सꣳस्पृष्टं विस्तृणात्यथैतौ शफौ दध्ना मधुमिश्रेण समज्य जघनेन प्रचरणीयं महावीरं तिरश्चीनाग्रौ व्यतिषक्तौ सꣳस्पृष्टौ सादयत्यथैते रौहिणहवनी दध्ना मधुमिश्रेण समज्य शफाभ्यां प्रतीचीनाग्रे सꣳस्पृष्टे सादयत्यथैता दशौदुम्बरीः समिधो दध्ना मधुमिश्रेण समज्य जघनेन रौहिणहवनी प्रतीचीनाग्राः सꣳस्पृष्टा विस्तृणात्यथैतं कुशमयं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्य जघनेन प्रचरणीयं महावीरं प्रतीचीनाग्रꣳ सꣳस्पृष्टं विस्तृणात्यथैते स्रुचे दध्ना मधुमिश्रेण समज्य जघनेन शफौ प्रतीचीनाग्रे सꣳस्पृष्टे सादयत्यथैतदुपयमनं दध्ना मधुमिश्रेण पूरयित्वोपरिष्टात्स्रुचयोः प्रतीचीनबिलꣳ सादयत्यथैतद्रज्जुद्रव्यं[2] विस्रस्य दध्ना मधुमिश्रेण समज्याचैवोपयमने [3]समवन-मयत्यथैतान्काश्मर्यमयान्परिधीन्विचदण्डामिति विस्रस्य दध्ना मधुमिश्रेण समज्योपरिष्टादुपयमनं तिरश्चीनाग्रान्व्यतिषक्तान् सꣳस्पृष्टान्विस्तृणात्यथैतामभ्रिं दध्ना मधुमिश्रेण समज्य जघनेन स्रुचे तिरश्चीनाग्रꣳ सꣳस्पृष्टꣳ सादयत्यथैते धृष्टी दध्ना

१ महावीरान् BTJP Bh. Keś , ०वीरं IFH , प्राचीनाग्रं PFJT Keś ; प्रतीचीनाग्रान् B , प्रतीचीनाग्र WIH

२ Thus TBJ Bh. Keś (pr. m ), रज्जुदाम PHF Keś (sec. m )

३ Thus only H., समवधाय- I, समवमय- the other MSS.; comp supra p 282. 10

मधुमिश्रेण समज्याक्ष्यपाभ्यां[1] प्रतीचीनाग्रे संस्पृष्टे सादयत्यथैते धवित्रे दध्ना मधुमिश्रेण समज्य जघनेन धृष्टी संस्पृष्टे सादयत्यथैता दशौदुम्बरीः समिधो दध्ना मधुमिश्रेण समज्य जघनेन धवित्रे प्रतीचीनाग्राः संस्पृष्टा विस्तृणात्यथैतामाज्यस्थालीं दध्ना मधुमिश्रेण पूरयित्वा जघनेमाभिꣳ संस्पृष्टाꣳ सादयत्यथैतद्धविर्दध्ना मधुमिश्रेण समज्य तेनाज्यस्थालीमपिदधात्यथैते रौहिणकपाले दध्ना मधुमिश्रेण समज्य जघनेनाज्यस्थालीꣳ संस्पृष्टे सादयत्यथैताꣳ स्रुवं दध्ना मधुमिश्रेण पूरयित्वा जघनेनाज्यस्थालीमन्तरेण रौहिणकपाले प्रतीचीनबिलꣳ संस्पृष्टꣳ सादयत्यथैतं कुशमयं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्य जघनेनाज्यस्थालीं प्रतीचीनाग्रꣳ संस्पृष्टं विस्तृणात्यथैतामासन्दीं विस्रस्य दध्ना मधुमिश्रेण समज्याथैवोत्तरतः संस्पृष्टाꣳ सादयत्यथैतौ स्वदमतिमिश्रौ दध्ना मधुमिश्रेण समज्यान्तरेण सक्थिनी निवपति ॥ १५ ॥

घर्मैतत्ते ऽन्नमेतत्पुरीषं तेन वर्धस्व चा च प्यायस्व वर्धिषी- १६
महि च वयमा च प्याशिषीमहीत्यथैनꣳ सिकताभिरनुप्रकीर्य मुञ्जप्रलवैरनुविनाद्य रौहिणपिष्टैरनुप्रकीर्य कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्ना प्रोर्णोत्यपि वाभितः प्रचरणीयं महावीरं परिचिनोत्यादित्यमण्डलवदथैनमुपतिष्ठते ऽयं यः पुरुषरूपो ऽसि स न आस्से न तिष्ठसि । नोर्ध्वो न तिर्यङ्विधा ते ऽनु विहितो ऽस्मि विधां मे ऽनु विहितो ऽसि यस्त्वमसि सो

---

[1] Thus TB Bh, चक्षिपाभ्यां J Kes; चक्षिषा चपाभ्यां PIF.

ऽहमस्मि यो ऽहमस्मि स त्वं नाकमारोह सह यजमानेन नाकमित्यथ मुमुष्टिमादाय दध्ना मधुमिश्रेणावोक्षत्यस्कान्द्यौः पृथिवीमस्कानृषभो युवा गाः। स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु। अस्कानजनि प्राजनि। आ स्कन्नाज्जायते वृषा। स्कन्नात्प्रजनिषीमहीत्यथ प्रस्तोतारमाह प्रस्तोतर्वार्षाहरꣳ साम गायेत्याद्योचैर्यं वेति। स यो बलवाꣳस्तमाहाग्नेमोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं परिषिञ्चन्परीहीति। स तथा करोति। परिषिच्यमाने यजमानं गन्धर्वयजुꣳषि वाचयति रन्तिर्नामासि दिव्यो गन्धर्व इति प्रतिपद्येन्द्रो दक्षं परिज्मानादहीनमित्यन्तो। निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्यथैनमुपतिष्ठत एतत्त्वं देव घर्म देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्सोमपीथानु मेहि सह प्रजया सह रायस्पोषेणेत्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति। तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य ज्योतिष्मत्यादित्यमुपतिष्ठत उद्वयं तमसस्परीत्यथैनमवकाभारेण प्रतिच्छाद्य गोप्तारꣳ समादिशति वयोभ्यो महावीरं गोपायेति। प्रस्तोतः श्वैतेनाभ्येहीति[1] प्रस्तोतारमाहाथैतेनैव[2] यथेतमेत्य गार्हपत्ये द्वे स्रुवाहुती जुहोत्युद्

---

१ Thus PIBF Ke4, Padārthanirv., चान्वेहीति BJT.

२ Thus T, some of the MSS om अथ, others अथ।

सं चित्रमित्यथाहवनीयमुपतिष्ठन्त[1] इममू षु त्यमस्मभ्यꣳ सनिं गायत्रं नवीयाꣳसमग्ने देवेषु प्रवोच इत्यथाग्नीध्रदेशं[2] हुत्वा[3]ग्नीध्रदेश उत्तराꣳ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेति' ॥ १९ ॥ चतुर्थः ॥

अथातो घर्मप्रायश्चित्तानि व्याख्यास्यामो' ऽथ यदि प्रवर्ग्यमप्रवृत्तमादित्यो[4] ऽभ्यस्तमियाद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्युपसदा प्रचर्य श्वो भूते प्रवर्ग्येण प्रचरेदथ यदि प्रवार्यं प्रवृत्तमादित्यो[4] ऽभ्यस्तमियाद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथापरस्यां द्वारि स्रुवेण हिरण्यं प्रबध्य प्रचरेदथ यदि प्रवृत्तः[4] प्रपतेद्गार्हपत्ये[5] तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथैनमुच्छ्रयत्यूर्ध्व ऊ षु ण ऊतय ऊर्ध्वो नः पाह्यꣳहस इति द्वाभ्यामथैनमाज्येन पूरयत्यञ्जन्ति यं प्रथयन्तो न विप्रा इत्यथ यदि विधुरो मदरो वा जायते ऽश्मचूर्णानि कारापयति संभक्तौघं तैः प्रत्युष्योल्मुकेनाभितपति विधुं दद्राणं यक्षुते चिद्भिश्रिष इति द्वाभ्याꣳ' सꣳ हैव रोहति' यद्यु वै सर्वश एव भिद्यत एतान्येव कपालान्यवाञ्चं पिष्ट्वा येषा मृत्प्रायश्चित्ताय परिशेते तया संसृज्य कृत्वा पश्चात्कृष्य निदधात्यथान्यं प्रवरणीयं महावीरं प्रवृणक्त्यथ यदि प्रमत्ता अतिपरि-

१ °तिष्ठत PHIT; the other MSS, also Keś, have the plural.

२ Thus PHJI, °ग्नीध्रं TBP.

३ Thus PJF; हुत्वा B, मत्वा ITH.

४ Thus all, read °प्रवृत्त° and प्रवृत्तः (?)

५ Thus B, प्रपतेन्महावे° TBh., प्रपतेन्महा° I, प्रवर्तेन्मह° HJ; पतन्त P.

यन्ति गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथ पुनरूर्जा सह रय्येति पुनः प्रतिपरियन्त्यथ यद्युद्यतः[1] प्रपतेद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथैनमभिमृशति मा नो घर्म व्यथितो विव्यथो नो मा नः क्रतुभिर्हीडितेभिरस्मानिति द्वाभ्यामथ यदि घर्मदुघं वा महावीरं वा वयो ऽभिप्रस्रावयेत्तावुष्णोदकेन प्रक्षालयेदुप नो मित्रावरुणाविहावतमित्यथ गार्हपत्ये नव स्रुवाहुतीर्जुहुयादिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्युदयं तमसस्परीदु त्यं चित्रं प्र वः सुपर्णा इत्यथ यदि घर्मदुघं न विन्देतान्यां दोहयेदथ यद्यन्यां न विन्देताजां दोहयेदथ यद्यजां न विन्देतार्कक्षीरैः प्रचरेदथ यद्यर्कक्षीरं न विन्देत यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाद्भिः संसृज्य तैः प्रचरेदथाद्भिः प्रचरेन्न त्वेव न प्रचरेन्मध्वीनां पयो ऽवोत्सिक्तं महावीरे ऽवनयनमस्कान्द्यौः पृथिवीमिति स्कन्नानुमन्त्रणमथ यदि विद्युदापतेद्गार्हपत्ये स्रुवाहुतिं[2] जुहुयाद्यत्पुरस्ताद्विद्युदापतदित्येतयर्चाथ। प्राणाय स्वाहा पूष्णे स्वाहेत्युक्तानि घर्मप्रायश्चित्तानि। यत्किंचिद्धर्मकार्यविपर्यासे चैता[3] आहुतीर्जुहुयान्नमस्ते घर्म भूपतये स्वाहा नमस्ते घर्म भुवन-

---

1 Thus T Bh; उद्यतः प्रपतेत् J, उद्यतः प्रपते I, उद्यातः प्रपद्येद् [illegible]; ...तः प्रपत्येत H; अथ यद्यतः प्रपतत P.

2 Thus only T, the other MSS स्रुवाहुतीर्॰।

3 B ins. वा।

पतये स्वाहा नमस्ते घर्म भूतानां पतये स्वाहा घर्माय स्वाहाश्विभ्यां स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहेत्यथापाढां श्यालिखितामुत्तरलेखामनुमधायाव घर्मेष्टकां कुलायिनीं चोपदधात्युदस्य मृत्यातानुरिति घर्मेष्टकां यास्ते अग्न आर्द्रा योनयो या इति कुलायिनीं संचितमग्निं सामभिरुपस्थायोक्थ्येनानुगच्छन्नुपरे[1] ओष्ठान्ते निष्टप्याग्निमभिमृशत्यग्निरसि वैश्वानरो ऽसीत्येतेनानुवाकेनाथाध्वर्यवे ऽग्निदक्षिणां[2] ददाति सहस्रं सहस्रमग्निष्टकं वा ॥१७॥

[3]प्रवर्ग्यवति सोमे दधिघर्मं भक्षयन्ति भूर्भुवः स्वर्मयि त्यदिन्द्रियं महदित्येतेनानुवाकेनाथ घोरासमूहमुद्दिशन्ति यास्ते अग्ने घोरास्तनुव क्षौकुच क्षोदौलिय क्षौलितिरेति[4] घोरास्तनुवो धुनिश्च ध्वान्तश्चेति राजसूयिको गणः उपस्थ धुनिश्चेत्यग्निचित्यो ऽथ यदि घर्मदुघं वा महावीरं वा सोमो ऽपहरेद्गार्हपत्ये स्रुवाहुतिं जुहुयादहोरात्रे सोदीरयतामिति जुहुतीति वाचः कूराणीत्यथ यद्येकस्थो वाञ्छेत तमनुमन्त्रयते वि मा इन्द्र विचरन्त्वाभयस्वेत्यथास्मा उभयतमादौमनुष्कं चिपेदग्नि[5] अग्निना संवदस्व मृत्यो मृत्युना संवदस्वेत्यथैनमुप-

---

१ Thus HJP; उक्थेना उपगच्छनुपरे I; उक्थेनानुगच्छन्नुपस्थितदुपरे B; उक्थेनानुगंधवुपरेष T.

२ ग्निदक्षिणा T, दक्षिणां B, ग्निदक्षिणां J; त्रिदक्षिणां IPH.

३ This chapter is given by TB only.

४ क्षौलितिय om. T.

५ निचिपेद० B, क्षिपेत० T.

तिष्ठते प्रवृक्ते ऽग्ने नमो दिवे नमस्त्विषे नम इत्यथ यदि गृध्रो वाश्येत तमनुमन्त्रयते ऽसृङ्मुखो रुधिरेणाव्यक्त इत्यथ यद्यार्ता वागुदियात्तामनुमन्त्रयते यदेतद्वृकसो भूत्वेत्यथ यदि भयेडकः काकपिञ्जको[१] वाश्येत तमनुमन्त्रयते यदीषितो यदि वा स्वकामीत्यथ यदि मार्जालको वाश्येत तामनुमन्त्रयते दीर्घमुखि दुर्हणीत्यथ यद्युलूकोलूकी वाश्येत तमनुमन्त्रयत[२] इत्यादुलूक आपप्तदित्यथ यद्युन्मत्ता वागुदियात्तामनुमन्त्रयते यदेतद्भूतान्यन्वाविशतीत्यथ यदि घर्मदुघं वा महावीरं वा वयो ऽभिप्रपतेत्तमनुमन्त्रयते प्रजार्थं यज्ञस्य पततीत्यथ यदि घर्मदुघं वा महावीरं वा क्रिमय उपाधिगच्छेयुस्तानद्भिः प्रच्यावयेद्दक्षिणा त्वा क्रिमे हन्मीत्यथ यदि प्रवृक्ते[३] प्रवर्ग्यं भ्रातृव्यो ऽभिप्रपद्येत गार्हपत्ये स्रुवाहुतिं जुहुयादाहरावद्येत्यथैनमनुव्याहरिष्यन्भवति। तमनुव्याहरेद्ब्रह्मणा त्वा शपामीत्यथ यं द्वेष्टि तस्य दक्षिणं हार्याङ्गमनुमथ्यालयेदुत्तुद शिमिजावरीति। स यो ऽन्य[४] एतेभ्यो वाश्येत तस्मा उभयतश्चादीप्तमुल्मुकं क्षिपेदुत्तुद शिमिजावरीत्यथ यद्युद्धूनयन्निव वातो वायात्तमनुमन्त्रयते[५] भूर्भुवः सुवो भूर्भुवः सुवो भूर्भुवः सुवो भुवो ऽधायि भुवो

---

१ Thus Bh; काकपिञ्जको T, कपिंजको B

२ तमनु॰ B, तमामनु॰ T, probably तामनु॰ is to be corrected.

३ T om, read प्रवृक्ते (?)

४ न्यास T, न्य B.

५ Uncertain. यद्युद्धूनयन्निव वातो वायात्तमनु॰ T (grantha?), यद्युन्निवातो-वायात्तमनु॰ B, Bh. comments, उद्धूनयन्निव ऊर्ध्वं कम्पयन्निव प्रवायात इत्यर्थः।

ऽधायि भुवो ऽधायीत्यथ यद्यहतः[1] स्यान्नाभि[1] प्रपद्येताभिगीर्भिर्यदतो न ऊनमित्येतया प्रपद्येत । यद्यु वै प्रहृत[2] एतयैव । ॥ १८ ॥ पञ्चमः ॥

[3]अथातो ऽवान्तरदीक्षां व्याख्यास्याम । उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे केशश्मश्रु वापयित्वा पूर्ववदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य स्थिले ऽप्स्वदिदेशे ऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताश्च आसमामि कल्पयन्त्यर्पणाग्निं प्रवर्ग्याय कल्पयामि घर्माय कल्पयामि महावीराय कल्पयामि मखाय कल्पयामीति । दक्षिणेनाग्निं ब्रह्मणे कल्पयामि प्रजापतये कल्पयामीत्युत्तरेणाग्निमृषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः कल्पयामि देवेभ्यो घर्मपेभ्यः कल्पयामीत्यथ दक्षिणतः प्राचीनावीती पितृभ्यो घर्मपेभ्यः कल्पयामि यमायाङ्गिरस्वते पितृमते कल्पयामीत्यथाप उपस्पृश्योत्तरतो यज्ञोपवीती रुद्राय रुद्रहोत्रे कल्पयामीत्यथाप उपस्पृश्य सर्वाभ्यः

१ Thus T; यद्यहतः स्यात B.

२ प्रहृत MSS.

३ The following adhyāya, containing the avāntaradīkṣā, is preserved only in T, E and Ta; the last MS. is a copy of the gṛhyasūtra MS. No. 9316 of the Tanjore Collection, in Grantha; E is a copy of the gṛhyasūtra (Report on a Search for Sanskrit and Tamil MSS 1893 94, No. 2, 66). As the tradition of this adhyāya is rather a bad one, I had to amend several passages, according to Āpastamba, Hiraṇyakeśin, Bhāradvāja and a Baudhāyanagṛhyaprayoga.

प्रवर्ग्यदेवताभ्यः कल्पयामीति । प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधो ऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयत्यग्रेणाग्निं प्रवर्ग्यं तर्पयामि घर्मं तर्पयामि महावीरं तर्पयामि सम्राजं तर्पयामीति । दक्षिणेनाग्निं ब्रह्माणं तर्पयामि प्रजापतिं तर्पयामीत्युत्तरेणाग्निमृषीन्मन्त्रकृतो मन्त्रपतीꣳस्तर्पयामि देवान्घर्मपाꣳस्तर्पयामीत्यथ दक्षिणतः प्राचीनावीती पितॄन्घर्मपाꣳस्तर्पयामि यममङ्गिरस्वन्तं पितृमन्तं तर्पयामीत्यथाप उपस्पृश्योत्तरतो यज्ञोपवीती रुद्रꣳ रुद्रहोतारं तर्पयामीत्यथाप उपस्पृश्य सर्वाः प्रवर्ग्यदेवतास्तर्पयामीति । चतस्र औदुम्बरीः समिधो ऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति पृथिवी समिदित्येतैः प्रतिमन्त्रमथ देवता उपतिष्ठते ऽग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामित्यथैतेषामनुवाकानां प्रभृतीर्वाचयति प्रथमोत्तमयोर्वाचैनꣳ सꣳशास्ति संमील्य वाचं यच्छेत्यथास्याहतेन वाससा त्रिः प्रदक्षिणꣳ संमुखꣳ[1] शिरो वेष्टयति क्षित स्थ परिक्षितः स्वाहा मरुद्भिः परिश्रयस्वेति । प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधो ऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाथास्तमित आदित्ये ग्राममायन्ति । वाग्यतस्तिष्ठेदेताꣳ रात्रिमुपविशेत्संविशेद्वाथ प्रातरुदित आदित्ये ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य

1 Emended; समुखं the MSS

खिले ऽच्छदिर्दर्शे ऽग्निमुपसमाधाय संपरिस्तीर्य सदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः सवर्ग्यदेवताश्च साम्मानि कल्पयित्वा वयः सुपर्णा इति वासो विमुच्याथास्य पट्तयमभिविदर्शयत्यग्निमप आदित्यं गां ब्राह्मणं हिरण्यमिति । सौनादित्यो ऽनुदर्शयित्वा यथोपपादमितराणि दर्शयित्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधो ऽभ्याधाय सदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वा । थास्य व्रतचर्यामुपदिशेन्न । यानमारोहेन्न[1] वृक्षमधिरोहेन्न कूपमवरोहेन्न छत्रं धारयीत । नोपानहौ धारयीत । नाखट्वायां[2] शयीत । न स्त्रिया न शूद्रेण[3] संभाषेत । यदि संभाषेत ब्राह्मणेन[3] संभाषेत । न सायं भुञ्जीत । यदि सायं भुञ्जीतावज्वलितं[4] भुञ्जीत । न छायायाद्रष्टम्यां[5] पर्वणि[5] चोपवसेत्तदस्य छायायाद्धोऽग्यतस्तिष्ठेदेताꣳ रात्रिमुपविशेत्संविशेदामेध्यस्तोदितप्रवापपापदर्शने[6] ज्योतिषां संदर्शनममेध्यं दृष्ट्वा जपत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरित्यंय यद्येनमभिवर्षत्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेति जपति । ॥ १९ ॥

---

१ Thus TE; यानमधिरोहे॰ Ta.

२ Emended, नखट्वां T; मखंट्वां E Ta.

३ Ta ins च ; E the second time.

४ Thus E, प्रज्वलित T, Ta om the whole passage.

५ Thus E, चाष्टम्या पर्वणो Ta, चाष्टम्याः पर्वणि T

६ Thus E, मेध्यांलोदितश्रवासपाप॰ Ta, ॰मेध्यलोदितप्रवापान॰ T.

[1]संवत्सरमेतद्व्रतं चरेत्संवत्सरꣳ हि व्रतं नातीत्यैतस्मिꣳस्त्वेवैतत्संवत्सरेऽधीयीत । यद्यु वा एतस्मिन्संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेदथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा । पूर्ववदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिले ऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वाथाप्रत्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्यां । [2]प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वा[2] । चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्क्ता अभ्याधापयन्वाचयति द्यौः समिदित्येतैः प्रतिमन्त्रमथ देवता उपतिष्ठत आदित्य व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मे ऽराधि वायो व्रतपतेऽग्ने व्रतपते व्रतानां व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधीति । प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वा । तस्यानध्यायाननुपदिशेन्नाधीयीतास्तमित[3] आदित्ये । नानुदिते ।

---

१ The beginning of this khanda has been emended and restituted after the collateral passages in the gṛhyasūtra

२ The passage प्रद॰ — र्पयित्वा om T

३ Uncertain, तस्याध्ययनध्यायानु॰ Ta, तस्याध्यायनु॰ T, तस्याध्यायेन स्वाध्याय॰ ॰ E

न विप्रोषितो[१] न पर्यावृत्ते नाभ्रच्छायायां[२] न ग्राम्यस्य पशोरन्ते नारण्यस्य नापामन्ते न हरितयवान्प्रेक्षमाणो[३] न चर्माणि न शरीराणि न लोहितमुत्पतितं दृष्ट्वा न माङ्समशित्वा न श्राद्धं भुक्त्वा न केशश्मश्रु वापयित्वा न केशान्प्रसार्य[४] न दतो धावते नाक्ते नाभ्यक्ते नार्द्रे नार्द्रेण वाससा नार्द्रे[५] इत्येव स्वाध्यायमधीयीतापरेणाग्निं दर्भेष्वासीनो दर्भान्धारयमाणः पराचीनमङ्ग स्वाध्यायमधीयीत [६]यत्र क्वचाप्यशिवकृतं पश्येत्पुनरेव शान्तिं कृत्वाधीयीताधीत्य चोत्तमेन[७] प्रवर्ग्योपनिष्क्रम्य[८] नाप्रविश्य ग्राममन्यदधीयीतान्यदधीयीत ॥ २० ॥ षष्ठः ॥

## ॥ इति नवमः प्रश्नः ॥

---

१ Thus E; विप्रोषिते Ta, विप्रुषिते T

२ Thus E Ta, अभ्रे न छायायां T.

३ Thus E; प्रेक्षमाणे Ta, प्रेक्षते T

४ Thus E T. (comp. Har. प्रविश्य), प्रसार्य Ta.

५ Conjecturally, नार्द्रेमित्य॰ T; नार्द्रेषामित्य॰ Ta, नाप्रयसनार्द्रेषामित्य॰ E., probably आर्द्रे is to be taken as a locative, sc. देशे, comp. Āpastamba xv. 21 8

६ E ins : यदि लौकिकमनुव्याहरेत् शान्तिं कृत्वा ।

७ T Ta om चाधीत्य चोत्तमेन Ta

८ Thus E Ta, प्रवर्ग्यमपनिष्क्रम्य T

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL
NEW SERIES, No. 1163.

## बौधायन श्रौतसूत्रम् ।

## BAUDHAYANA SRAUTA SŪTRAM.




EDITED BY

DR W. CALAND OF UTRECHT

VOL. II, FASCICULUS I

CALCUTTA.
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET
1907

THE

# BAUDHĀYANA ŚRAUTA SŪTRA

BELONGING TO THE

# TAITTIRĪYA SAṂHITĀ

EDITED BY


## DR. W. CALAND

*Extra Professor of Sanskrit at the University of Utrecht*


## VOLUME II


CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57 PARK STREET

1907

# PREFACE.

In preparing the text of this second volume of the Baudhāyana-śrautasūtra the editor has had to cope with many more difficulties than he had to do when preparing the text of the first volume Indeed, a few months ago I was almost despairing of obtaining sufficient material for this volume The fact is, that the tradition of these parts of the sūtra, describing for the greater part the rituals, partly obsolete, partly less observed than the darśapūrṇamāsa, agnyādheya and agniṣṭoma, is, throughout India, a very bad one The MSS of Bombay, Benares, Gwalior, Dhar and Ujjain are all together more or less corrupt and seem partly to derive from one archetype, in which not only were lost the right arrangement of the materials and the numbering of the praśnas, adhyāyas and khaṇḍikās, but the text of which was also hopelessly corrupt in many a passage And no complete copy of Bhavasvāmins Vivaraṇa, which would have been of paramount use, seems to be extant. Although Professor Hultzsch has taken all possible pains to hunt up more MSS from Southern India and has set to work two pandits to unearth more material, he has, alas, not succeeded Professor Bhandarkar of Elphinstone College also was kind enough to provide me with more material, but it was of the same kind: on the whole corrupt from beginning to end

Nearly despairing, I wrote to Dr Thomas, Librarian-in-Chief to the India Office, requesting him to look over, for my sake, once more the Mackenzie Collection of Sanskrit MSS preserved at the India Office And he was so fortunate as to light upon one MS. (cp *infra* the enumeration of the MSS) containing a wholly independent tradition of the text I stood in need of so much. This MS, too, is far from faultless, but it throws light on many a difficult passage, and, what is the main point, the arrangement of the praśnas seems to be correct in this MS Before I knew this Mackenzie MS, I had my doubts about which part of the sūtra constituted the so-called uttarā tatiḥ In the MS. from Benares, where the praśnas are all numbered by a *secunda manus* (cp my paper "Ueber das rituelle Sūtra des Baudhāyana," p. 12), [illegible] num- [illegible] and [illegible] rn to [illegible] ently [illegible] r the [illegible] nedi-ately after the aupānuvākya comes the ekādaśinī Now, as the MS of Bhavasvāmin ends with the words *iti bhavasvāmikṛte*

fact, at the close of this praśna, all the pratīkas of the adhyāyas and khandikās, including those of the chapters on samāvartana. How it occurred to the diascenasts of the śrautasūtra to insert the samāvartana among the subjects treated in the śrautasūtra, I am, however, at a loss to explain

So this Mackenzie MS. was of the greatest help in constituting the text of Vol ii The tradition of the cayana, vājapeya and rājasūya chapters is in this MS inferior to that of the following chapters. To these, however, it is of the greatest value · entire passages, omitted by all the other MSS, are found *here*, and in many a passage it is easy to prove that only the reading found in M. (Mackenzie) is right, over against the oftentimes unanimous [illegible]

unknown expressions occur, I have, therefore, as a rule, adhered to the reading of M The corruption of the other MSS. is so great, that it is not worth while mentioning all their various readings So, *e.g.*, in the description of the vrātyastomas; here the text of all the MSS, with the exception of M, is one hopeless confusion. It is highly to be regretted, that this Mackenzie MS. is not wholly complete some final leaves are wanting; consequently the text of the important last chapters of the second uttarātatihpraśna had to be edited as well as possible after the corrupt MSS This is all the more to be regretted as they contain the legends of Purūravas and Uśanas

After the above remarks, the reader and student of the second volume of Baudhāyana will be indulgent to the editor, who thought it better to give a text, however imperfect, rather than postpone its publication *ad calendas graecas*, as, after years of [illegible]

(a) karmāntasūtra [illegible]
i., kh. 3 from [illegible]
kh. 5, then on [illegible]
mānta, beginnir [illegible]
*yajuṣam* unto the end of the Karmānta
(b) śulbasūtra foll 42-50 a

10. Bu, the text of the cayana as given in an appendix after the above mentioned MS. (Burnell 55), comprising the text up to kh 24, breaking off after the words: *nihanty ārṛhyāimānam upa.*

11. Be 11, cp. Preface to Vol ı, p. x, No. 9 dvādaśāha (without gavām ayana), rājasūya, vājapeya.

[illegible]

II 4) contains the iṣṭikalpa

14. Be, a copy of the aupānuvākya praśna from Benares (Nāgari, paper) on 14 foll, well-written but containing on the whole the same tradition as II and Be (115)

15 Be, a copy of the kathakasūtra from Benares (see sūcipattra, p. 72, No 10), paper, Nāgari, 7 leaves.

16 Be (12), a copy of the atirātra from Benares (see sūcipattra, p. 72, No 12), paper, Nāgari, 3 leaves.

17. G, an original MS. of the aupānuvākya from Gwalior on paper in Nāgari, procured on loan by Professor Bhandarkar.

18 T, a copy of the sautrāmaṇi in the collection of Sanskrit MSS preserved at Tubingen (M a ı, 317) Nāgari, paper.

19. MS and MSc, text and commentary of the ekādaśinīsūtra contained in the MS. of the Mahāgnisarvasva, cp. supra No 9

Other sources, which were of more or less help, are the Vivaraṇa of Bhavasvāmin up to the aupānuvākya, the Vivaraṇa of the atirātra, the aptoryāma and the sautrāmaṇi, and lastly the Prayogasāra of Keśavasvāmin on the contents of which cp. my paper on the Baudh.-sūtra, p. 15

My thanks are due, for procuring me the use of some of these MSS. and for taking pains in having copied others for me, to Dr. Thomas, Librarian-in-Chief of the India Office, to Professor Hultzsch, to Professor Bhandarkar at Bombay, to Mr. A Venis at Benares, and to the British Government, which enabled me to collate some of the originals of the above mentioned manuscripts.

W Caland.

*Utrecht, May 1906.*

उखाः संभरिष्यन्नुपकल्पयते ऽश्वं च गर्दभं च तयोरेव रशने मौञ्ज्यौ वा कुशमय्यौ वाभ्रिं च ब्राह्मणसंपन्नां मृदं च भावितां करणीयां वल्मीकवपां कृष्णाजिनं च पुष्करपर्णं च योक्त्रमुदकुम्भꣳ हिरण्यमर्मकपालानि शर्करा अश्वाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि वैण्वꣳ सप्तदशꣳ सूनामधिकरणीमुखाहतं कुशलमित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वापरेण शालाꣳ शम्यान्यासे गर्तं खानयति । तद्भाविता मृदमवलेपयति । समां चित्रेण करोति । तदुपसादयति कृष्णाजिनं च पुष्करपर्णं च योक्त्रमुदकुम्भꣳ हिरण्यमित्यथ विधुनति स्फ्येनोद्धत्यावोक्ष्य वल्मीकवपां निदधाति । तां दक्षिणतो वैश्यो गोपायन्नास्ते । ऽथोत्तरꣳ शालाखण्डमपरेण स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति । तं परिमण्डलं खरं करोत्यथैनꣳ सिकताभिराभ्राजिनं करोति । तं कुशतरुणकैर्दूर्वाग्रन्थिभिरिति संप्रच्छाद्याथैनं परिश्रयन्ति । तस्योदीचीं द्वारं कुर्वन्ति । तदुपसादयत्यर्मकपालानि शर्करा अश्वाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूनामधिकरणीमुखाहतं कुशलमित्यथैतावश्वगर्दभावपरेण शालां पल्पूलितौ तिष्ठतो ऽन्तर्वेद्यभ्रिं निदधात्युत्तरे वेदन्ते रशने । परिस्तृणन्ति । दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये सावित्राणि जुहोत्यन्वारब्धे यजमाने । ॥ १ ॥

युञ्जानः प्रथमं मन इति षड्भो ऽन्तर्हिता देव सवितरि-

त्र्यृगेमं नो देव सवितरिति यजुरेतदृचा वा यजुषा वावस्य-र्याहुतिं नवमीं हुत्वोपतिष्ठत ऋचा स्तोमꣳ समर्धयेत्यथा-भ्रिमादत्ते देवस्य त्वा सवितुः प्रसव इति चतुर्भिः पर्यायैस्ता-मथेत्याहवनीयं पर्यावृत्य दक्षिणत आसीनाय ब्रह्मणे प्रयच्छ-त्यथ रशनामादत्त इमामगृभ्णन्रशनामृतस्येति । तयाश्वमभि-दधाति प्रतूर्तं वाजिन्नाद्रवेत्येवमेव द्वितीयाꣳ रशनामादत्ते । तया गर्दभमभिदधाति युञ्जाथाꣳ रासभं युवं योगेयोगे तव-स्तरमिति द्वाभ्यामेवं पूर्वं नयन्ति । तमनुमन्त्रयते प्रतूर्वन्ने-ह्यवक्रामन्नशस्तीरित्यथाश्वं गर्दभं पूष्णा सयुजा सह पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीति । प्रदक्षिणी वैश्यं कुर्वते । वैश्यः पृच्छति पुरुषाः किमच्छेथेत्यग्निं पुरीष्यमङ्गिरस्वदच्छेम इतीतरे प्रत्याक्रम्य वल्मीकवपामुपतिष्ठतेऽग्निं पुरीष्यम-ङ्गिरस्वद्भरिष्याम इत्यथोपातियन्त्यन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावा-पृथिवी आततानेत्यथैतेनाश्वेन प्राचा मृदमाक्रमयत्यागत्य वाज्यध्वन आक्रम्य वाजिन्पृथिवीमिति द्वाभ्यामथास्य पृष्ठं मर्मृ-श्यते द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रस्ते योनिः । विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यत इत्यथ यं यजमानो द्वेष्टि तमश्वस्याधस्पदं ध्यायत्यथैनं प्राञ्चमुत्क्रमयत्युत्क्रामोदक्र-मीदिति द्वाभ्यामथैनं पराञ्चमग्निरुपसृजति ॥ २ ॥

आपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासाꣳ स्थानादुज्जिहतामोषधयः सुपिप्पला इत्यथ स्रुचि चतुर्गृहीतं

गृहीत्वा दक्षिणे ऽवान्तरदेशे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति जिघर्म्यग्निं मनसा घृतेनेत्यपरं चतुर्गृहीतं गृहीत्वोत्तरे ऽवान्तरदेशे हिरण्यं निधाय संपरिस्तीर्यैवाभिजुहोत्या त्वा जिघर्मि वचसा घृतेनेत्यपोद्धृत्य हिरण्यमभ्रिमादाय पदं परिलिखति परि वाजपतिः कविः परि त्वाग्ने पुरं वयं त्वमग्ने द्युभिरिति तिसृभिः खनति देवस्य त्वा सवितुः प्रसवे ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमिति द्वाभ्यामथोत्तरतः पार्श्वतः संभाराणां प्राचीनाग्राणि तृणानि संस्तीर्य तेषूपरि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथापां पृष्ठमसीति पुष्करपर्णमाहरति तदुपरिष्टात्कृष्णाजिने निधायाथैने संस्पृशति शर्म च स्थः संवसाथामिति द्वाभ्यामपोद्धृत्य पुष्करपर्णमष्टाभिर्मृदꣳ हरति ॥ ३ ॥

पुरीष्यो ऽसि विश्वभरा इति तासां चतस्रो गायत्र्यस्तिस्रस्त्रिष्टुभः स पिण्डंपिण्डं वैकां हरत्यपि वाष्टाभिरेकमेव पिण्डꣳ हरत्यथैतमवटं[1] विश्वलोपेन पूरयित्वाद्भिरुपसृजति सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विलिष्टम्। देवानां यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यमित्यथोपरिष्टात्पुष्करपर्णं मृदि निधाय समुच्चित्य कृष्णाजिनस्यान्तान्यौर्णेणोपनह्यति सुजातो ज्योतिषा सह शर्म वरूथमासदः सुवः। वासो अग्ने विश्वरूपꣳ संव्ययस्व विभावसो इत्यथैन-

[1] Thus only M Bhāv , अथैनमवटं all the other MSS

माद्रायोपोत्तिष्ठत्युदु[१] तिष्ठ स्वध्वरोर्ध्वं ऊ षु ण ऊतय इति द्वाभ्यामथैनमाहरति स जातो गर्भो असि रोदस्योरग्ने चारु-र्विभृत ओषधीषु । चित्रः शिशुः परि तमांस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गा इत्यथैनं गर्दभ आसादयति स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहन इत्यथैनमुपतिष्ठते शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभिशूशुचो माऽन्तरिक्षं मा वनस्पतीनित्यश्वं पूर्वं नयन्ति तमनुमन्त्रयते प्रैतु वाजी कनिक्रददित्यन्वञ्चं गर्दभं नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥ रासभो वा कनिक्रदत्सुयुक्तो वृषणा रथे । स वामग्निं पुरीष्यमाशुर्दूतो वहादितः ॥ वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम् । अग्न आयाहि वीतय इत्यथेमे समीक्षन्त ऋतꣳ सत्यमृतꣳ सत्यमिति प्रदक्षिणो वेश्यं कुर्वते वैश्यः पृच्छति पुरुषाः किं भरथेत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इतीतरे प्रत्या-हुरथैनं खर उपावहरन्त्योषधयः[२] प्रतिगृभ्णीताग्निमेतमोषधयः प्रतिमोदध्वमेनमिति द्वाभ्यामङ्गिरस्वदुद्धृत्याश्वगर्दभावुत्सृजन्त्यपो रमन्ते अभ्यवहरन्त्यपि वाङ्गिरस्वदुद्धृत्य भुञ्जते ॥ ४ ॥ प्रथमः ॥

अथैनं विस्रꣳसयति वि पाजसा पृथुना शोशुचान इत्य-

---

१ Thus M Tr U, वय om HB M॰ नैवैतिष्ठ॰ Bs.

२ उपावहरन्त्य॰ B Be

यैनमद्भिरुपसृजत्यापो[1] हि ष्ठा मयोभुव इति तिसृभिरनुष्टुप्छन्दसमथैनमर्मकपालैः शर्कराभिरवाञ्जनपिष्टाभिरजलोमैः कृष्णाजिनलोमैरिति सꣳसृजति मित्रः सꣳसृज्य पृथिवीमयक्ष्माय त्वा सꣳसृजामीति द्वाभ्यामथैनꣳ संभरति रुद्राः संभृत्य पृथिवीमिति। पिण्डं करोति मखस्य शिरो ऽसीति। यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यामुपनिगृह्णात्यथ तृतीयं मृदो ऽपच्छिद्य त्रीन्पिण्डान्करोति। तेषामेकमुखाहर्ते प्रयच्छति सꣳसृष्टां वसुभी रुद्रैरित्यनुमन्त्रयते वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसेत्यसिमिष्टायै मृदो ऽर्धं प्रयच्छति सिनीवाली सुकपर्देत्यनुमन्त्रयते रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसेति। सर्वामन्ततो मृदं प्रयच्छत्युखां करोतु शक्त्येत्यनुमन्त्रयत आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसा विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसेत्यथ मै भवति प्रान्याभिर्यच्छत्यन्यैर्मन्त्रयते मिथुनत्वाय। घ्युद्धिं करोतीति। स यदेव शिरंरति शिरस्तुलिम्पति तेन घ्युद्धिस्तां प्रादेशमात्रीमूर्ध्वामपरिमितां तिरश्चीं करोत्यथास्यै द्व्यङ्गुले वा चतुरङ्गुले वा रास्नां पर्यस्यत्यदित्यै रास्नासीत्यथास्या अनुदिशमष्टावश्रीरुन्नयति। रास्नासन्धिषु चाश्रिसन्धिषु चाष्टौ स्तनान्करोति। नवाश्रिमभिचरतः कुर्यादिति ब्राह्मणमस्तनां नवमीं करोत्यथास्यै बिलं गृह्णात्यदितिष्टे बिलं गृह्णातु पाङ्क्तेन छन्दसेत्यथैनां खरे निदधाति कृत्वाय

---

१ Thus M Bo Tr HU (pr m), Bhav, उपावसृजत्य॰ BU (sec m) Ms

सा महीमुखामित्यान्तादनुवाकस्यैवमेव द्वितीयां करोत्येवं तृतीयां तूष्णीं पञ्च चर्षभाङ्क्षितस्य¹ मण्डलेष्टकाः । ॥ ५ ॥

अथ या मृदतिशिष्यते तया प्रवाते प्रतिलेपमुपवातयति । तामुपवातामुपकल्पयत एकविंशतिं वृष्णो अश्वस्य शकृत्पिण्डानग्निमग्निं पचनमित्यथाश्वशकमादीप्य मुखामुखां धूपयति वसवस्त्वा धूपयन्तु गायत्रेण छन्दसेति प्रतिपद्य वरुणस्त्वा धूपयत्वित्यान्तो ऽनारतस्य ब्राह्मणस्य । सुधूपितां कृत्वा निदधात्येवमेव द्वितीयां धूपयत्येवं तृतीयां तूष्णीं पञ्च चर्षभाङ्क्षितस्य मण्डलेष्टका । अथोत्तरेण मात्रामुखबिलमिवावटं खानयत्यदितिष्ट्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थे ऽङ्गिरस्वत्खनत्ववटेति । तं पचनेनावस्तीर्य तस्मिन्नुखामुखां प्रवृणक्ति देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वद्दधतूख इत्येवमेव द्वितीयां प्रवृणक्त्येवं तृतीयां तूष्णीं पञ्च चर्षभाङ्क्षितस्य मण्डलेष्टकास्ताः प्राचीर्वोदीचीर्वायातयत्यथैनाः पचनेनोपरिष्टात्संछाद्य सदावलिम्पति² । चतुरङ्गुलमनुदिशमादीपनायातिशिनष्ट्यथोपोषति³ ॥ ६ ॥

धिषणास्त्वेति पुरस्ताद् ग्नास्त्वेति दक्षिणतो वरूत्रयस्त्वेति

---

१ Here and infra some of the MSS. present the fem. °र्षभाक्षि° (or च र्षभाक्षि°); again some of the MSS om the first च।

२ Thus (cp Vol I 269, 8) MUH Be, अभिलिम्पति B Ba Tr Ms Ke4.

३ Before चतुर° Be B Ba Tr U (sec m) Ms ins साम् ।

पश्चाच्छ्रपयन्त्वित्युत्तरतो ' ऽथैनाः परिददाति मित्रैतामुखां पचैषा मा भेधेतां ते परिददाम्यभित्त्या इति ' ता अह्ना वा रात्र्या वा पच्यन्ते ' यदि प्रातरुपोषति सायमुपैति यदि सायं प्रातस्तांस्तु पश्चादुपकल्पयते गोपयश्छागपयो धृष्टिमश्मसंदावꣳ सतꣳ संदंशं खादिरꣳ शिक्यं कृष्णाजिनमित्यथैतत्समादायाभ्येत्यभीमां महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तममित्यथ धृष्टिमादाय मुख्याया उखाया अङ्गारानुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्येत्यथैनामुपस्पृश्योत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्यथैनामाग्नेये प्रतिष्ठापयत्यपचमानां पृथिव्यामा दिश आपृणेत्यथैनाꣳ संदंशेन परिगृह्य घृते ऽवधाय छागपयसाऽऽच्छृणत्ति ॥ ७ ॥

वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसेति प्रतिपद्य विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसेत्यातो ऽन्तरतश्च बाह्यतश्च ' स्वाच्छृणां कृत्वा गोपयसाभिविष्यन्दयत्येवमेव द्वितीयामाच्छृणत्येवं तृतीयां तूष्णीं पञ्च सर्वभाꣳसितस्य मण्डलेष्टका ' अथ यदि विधुर्वा प्रदरो वा जायते ऽश्मचूर्णानि छागपयसि संप्रकीर्य तैः प्रत्युष्योल्मुकेनाभितपति ' सꣳ हैव रोहति ' यद्यु वै सर्वश एव भिद्येत[1] एतान्येव[1] कपालान्य-

१ भिद्येत मान्येव Bc, भिद्येतैमान्येव U Tr (but cp Vol I 270, 14).

वाञ्जनं पिष्ट्वा चैषां मृत्प्रायश्चित्तार्थे परिशेते तथा संसृज्य कृत्वा पक्षाच्छृत्य निदधाति । तासां यदा समय उपरमत्यथैनाः खार्याꣳ समवधाय कृष्णाजिनेनोपरिष्टात्संमच्छाद्योत्तरे शालाखण्डे शिक्ये आसजति । ता आ कालात्परिशेरे । ॥ ८ ॥ द्वितीयः ॥

अथैतस्मिन्नेव पूर्वपक्षे वायव्येन पशुना यजते । तस्य तदुपकॢप्तं भवति यत्पशुना यक्ष्यमाणस्य संभारे एतयोरश्वस्य च वैशस्य च शिरसी । दौव्यस्य ऋषभं यवन्ते । इष्टिं च बस्तं चोहरन्त्येतत्सर्पशिरो । ऽप्यादेषा पूर्वेद्युरेव पाशुबन्धिकी वेदिर्विमिता भवति । तां परिस्तीर्य स्फ्यमयुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिषंशुपा तूष्णीं चतुर्थं । पूर्वं परिवासं परिवृश्चति । करणं जपत्युङ्गम्युद्धृतादाग्नीध्रस्तिर्हरति । यदाग्नीध्रस्तिर्हरत्यथ चात्वालमाहृता चात्वालं परिलिखत्युत्तरवेदेरायतलोत्तरवेदिं निवपत्युत्तरनाभिमुत्खायाग्नेराहृताग्निं प्रणयत्यग्निवत्युत्तरं परिवासं परिवृश्च योयुपिता निर्वपꣳ न्याय ऋत्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवꣳ[1] स्वधितिꣳ[1] स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यधान्यौ पशौꣳ संनह्याज्येन च दध्ना चोदेहि प्रतिप्रस्थातः पशुश्रीर्पाणि विद्वोत्युभ्यंतुरेव प्रसिद्धं पाशुबन्धिकं कर्म चेष्टयंच प्रतिप्रस्थाता वायव्येनविरमति

---

1 Some of the MSS ins च after स्रुवं and after स्वधितिं, some only after स्रुवं. M om स्वधितिं and has स्रुवं स्रुचश्च; cp Vol I. 112, 7.

माषाग्पर्णशाखां मृत्पिण्डमुद्पाचमुत्कुषीं[1] सप्तधा विहृतां वल्मीकवपां संदंशमित्येतत्समादाय पश्चाच्छीर्षाण्यभ्येति दक्षिणत एतत्पुरुषशिर उपशेते ऽथैतेतराश्च प्राचीनावीतं कृत्वा सप्तभिर्माषैः पुरुषशिरः परिकीर्य चिरपक्षैः पर्णशाखया परिकर्षति ॥ ९ ॥

अहरहर्नयमानो गामश्वं पुरुषं जगत्। वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यम इत्यपरैः सप्तभिः परिकीर्यैव परिकर्षति वैवस्वते विविच्यन्ते यमे राजनि ते जनाः। ये चेह सत्येनेच्छन्ते य उ चानृतवादिन इत्यपरैः सप्तभिः परिकीर्यैव परिकर्षति ते राजन्निह विविच्यन्तेऽथा यन्ति त्वामुप। देवाꣳश्च ये नमस्यन्ति ब्राह्मणाꣳश्चापचित्यतीत्यथाद्भिः दक्षिणेन वल्मीकवपाꣳ सर्पेण संदꣳशेन पुरुषशिरः प्राणैः प्राणान्संनिधायाग्रये वल्मीकवपां निदधात्यथैतत्पुरुषशिरोऽभ्युत्क्रुष्य[2] प्रक्षाल्य मृदाभिलिम्पत्यनभिलिम्पन्प्राणानथैतराणि चये-

---

१ Thus (उत्कुषीं or °षीं) Tr Be H Bu U Bhav (MS Burnell), Ms and Msc (both the Burnell MS and the MS of Tubingen); उत्कर्षीं Bhav (Cidambara MS), उत्कर्षिं B, H उत्कुषीं or उत्क्रुषीं। According to the Bhāsya it is सुसंबद्धा इत्येतस्या; Msc उत्का इषीः समावद्धा दीर्घाकारोत्कुषी भवेदिति बौधायनः।

२ Thus U (pr m) Bhav, अभ्युत्क्रुष्य Tr; अभ्युत्कुष्य Be U (sec m), अभ्युत्क्रुष्य B Ms, अभ्युष्य only M; Bu is corr and in H this whole chapter is missing

यैव निश्चिद्रमभ्युल्कुर्यैव[1] प्रक्षाल्य मृदाभिलिम्पन्नभिलिम्पन्तः प्राणान्धेनान्यद्भिः प्रोक्षणतो[2] निदधाति । तान्या कापान्परिश्रेरे[3] ॥ १० ॥

अथ पशोः सामिधेनीकल्पः । प्र वो वाजा अभिद्यव इत्येकादश । समास्त्वाग्न ऋतवो वर्धयन्त्विति द्वे । तासां ज्योतिष्मतीमपोद्धृत्य नव धाय्यालोके दधात्यथ पृथुपाजवत्यौ धाय्ये दधात्यथ पृक्षा हि देवहूतमामित्येतां दधाति । ताः पराचीरनूच्यमानाश्चतुर्विंशतिः संपद्यन्ते । ज्योतिष्मतीं त्वेवोत्तमामन्वाहाथ हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयत्यथात आप्रीणामेव शौनकीरूर्ध्वा अस्य समिधो भवन्तीति द्वादश । तासां तानूनपातीमपोद्धृत्य नाराशंसीं वसिष्ठानां[a] दधात्यथो-

---

१ Thus only BU (see m.); Ms again चभ्युल्कुर्यैव ; thus also Bu with var. r. चभ्युल्कुर्यैव; चभ्युर्यैव M Tr.; Bhav., चथैव धंधापयति तापयित्वा प्रक्षाल्य मृदाभिलिम्पति; as Bhav. has explained उल्कुर्य, supra p. 9, l. 14, by प्रताप्य रोपयित्वा perhaps here simply चभ्युर्यैव without चभि is to be read.

२ Thus M only in accordance with Bhav (चद्भिः प्रोक्षणतः पशोः प्रोक्षणेन सह यथा प्रोक्षणे तथा निदधाति); प्रोक्षन्दक्षिणतो Ms and Msc. (but the commentary runs. चद्भिः प्रोक्षणाय दक्षिणतो निदधाति । पशुप्रोक्षणेन यथा प्रोक्षितानि भवन्ति तथा दक्षिणतः पशोर्निदधातीति यावत्); प्रोक्षन्दक्षिणतो U; प्रोक्ष दक्षिणतो Bu Tr Bo; H om. the whole chapter.

३ The last sentence is omitted by M Tr U, is it commented upon by Bhav and Ms

a वासिष्ठानां some of the MSS

हृत्य नाराशंसीं तानूनपातीमन्येषां गोत्राणामथ पीवो ऽन्नाङ् रायें ऽनु यमिति वपायै यः प्राणतो य आत्मदा इति पशु-पुरोडाशस्य प्र वायुमच्छा नो नियुद्भिरिति हविष । इति[1] नु यदि मिश्रो भवति । यद्यु वै सर्ववायव्य[2] एव भवति पीवो ऽन्नाङ् राये ऽनु यमित्येतासां द्वे वपायै द्वे पशुपुरोडाशस्य द्वे हविषो । ऽथ यदि सर्वप्राजापत्य[3] एव भवति यः प्राणतो य आत्मदा इत्येतासां द्वे वपायै द्वे पशुपुरोडाशस्य[4] द्वे हविषः । सर्वसंस्थां पशोः कुर्वन्त्यथैतानि पशु-शीर्षाण्यभिपर्यग्निकृतान्युत्तरे शालाखण्डे शिक्येष्वासजत्यथैन-त्सर्दंमिर सान्नाय्या विपथ्य शिक्यपाशे प्रबध्नाति । तान्या कालात्परिशेरे । ॥ ११ ॥ तृतीयः ॥

अथापरपक्षः प्रतिधीयते । स उपकल्पयत इष्टकाश्चाग्नि-दक्षिणाश्च [5]यदि रात्रिसत्रं चेष्यमाणो भवति । यद्यु वै संवत्सरसत्रं दीर्घं ऽभ्याजिरिति नाद्रियेत । स उपकल्पयत औदुम्बरीमुच्छ्रासन्दीं तस्याः प्रादेशमात्राः पादा भवन्त्यरत्नि-मात्राणि शीर्षाण्यनूच्यानि सा मौञ्जीभी रज्जुभिर्व्यूता भव-

१ om B Be U Ms

२ Thus M, all the other MSS सर्वं वा॰, but cp xvi 11 and 19.

३ Thus again only M, सर्वः प्रा॰ the other MSS

४ पशु॰ fails in some of the MSS

५ All the MSS exc B and Ms insert यथ before यदि; but the clause यदि रात्रिसत्रं चे॰ भ॰ seems to be the protasis of the foregoing स उपक॰ इष्ट॰ ; Msc ॰ग्निदक्षिणाश्चोपकल्पयत इति पूर्वेणान्वयः ।

त्येकसराभिः शर्कराभिस्तीर्णां मृदावलिप्ता[1] षडुद्यामं द्वादशो-
द्यामं वा मौञ्जं शिक्यं मुञ्जकुलायं क्रमुकमाल्यसंयुतं वैक-
ङ्कतीं च शमीमयीं च समिधौ सप्तौदुम्बरीः समिधस्तिस्रो
मानाहस्या एकविंशतिनिर्बाधं रुक्मं। प्रज्ञाता आग्निष्ठो-
मिकाः संभाराः। जुष्टे देवयजने शाला कारिता भवत्यथैनं
तीर्थादानीय पचयित्वा चित्रवियमग्निदीक्षणीयामिष्टिं निर्वप-
त्याग्नावैष्णवमेकादशकपालमदित्यै घृते चरुं वैश्वानरं द्वादश-
कपालमिति। तस्यै तावत्कृत्वोदन्ति यावन्ति दीक्षणीयायाः।
अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङुद्रुत्य पत्नीः संयाज्य प्राङेत्य
ध्रुवामाप्याय्याज्यस्थाल्याः प्रत्यवनीयाज्यस्थाल्याः स्रुवेणोपघात- १
मग्निदीक्षाकूतीर्जुहोति ॥ १२ ॥

आकूतिमग्निं प्रयुजं स्वाहा मनो मेधामग्निं प्रयुजं
स्वाहा चित्तं विज्ञातमग्निं प्रयुजं स्वाहा वाचो विधृतिमग्निं
प्रयुजं स्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहे-
त्यथ स्रुचि चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णां स्रुचमौदुम्बर्या[2] १
जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषु-
ध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेत्यथैतत्पूर्णपात्रमन्तर्वेदि निनय-
त्यथापरेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छत्यथ मुख्या-

---

१ Thus MH Bhav., मृदाभिलि० B Be U Ms Msc.

२ Thus M Tr Be Bu U Ms; the other MSS. चौदुम्ब०; but cp. TS
vi 124

सुखां याचति ' तस्यां शकृत्पिण्डान्पूतितृणानीति संप्रकीर्याव्यसुवं प्रत्यगाहवनीयस्यान्तमेष्वङ्गारेषु प्रदहन्ति मा सु भित्था दृंहस्वेति द्वाभ्यामथैनां परिददाति मित्रैतामुखां तपैषा मा भेद्येतां ते परिददाम्यभित्त्या इत्यथ वै भवति यदि भिद्येत तैरेव कपालैः संसृजेदिति ' सा यदि भिद्येत[1] एतान्येव[1] कपालान्यवाञ्जनं पिष्ट्वा येषा मृत्खायचित्ताय परिशिष्टे तया संसृज्य कृत्वा पक्त्वाहृत्य निदधात्यथापरस्यां प्रहरत्यथ वै भवत्यम्बरीषादन्नकामस्यावदध्यादित्यथ वै भवति यं कामयेत यजमानं भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याहृत्यावदध्यादित्यथ वै भवति यो गतश्रीः स्यात्स्वपिता तस्यावदध्यादित्यथ वै भवति यो भूतिकामः स्यात उखायै संभवेत्स एव तस्य स्यादिति ' स य एवैष उखायै संतापाज्जायते तस्मिन्मुञ्जकुलायमवदधाति यो ते अग्ने भोजस्विनी तनूरोषधीषु प्रविष्टा तां त एतेनावयजे स्वाहेत्यथ शुष्कमाज्यसंयुतमवदधाति द्रुघ्नः सर्पिरासुतिरित्यथ वैकङ्कतीं च शमीमयीं च समिधावादधाति परस्या अधि संवत इति वैकङ्कतीं परमस्याः परावत इति शमीमयीमथ सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुपतिष्ठते ' ऽथ पञ्चौदुम्बरीः समिध आदधाति ॥ १३ ॥

---

१ भिद्येतैतान्येव U Be Ms, the others (exc H which is corrupt and Bu, which is incomplete) भिद्यत एतान्येव ; cp supra p 7, 20

यदग्ने यानि कानि च यदत्त्युपजिह्विका रात्रिंरात्रिमप्रयावं नाभा पृथिव्या याः सेना अभीत्वरीरित्यथैनं पञ्चर्चेन राचोऽग्निनोपतिष्ठते कृणुष्व पाजः प्रसितिं न पृथ्वीमित्यथ तिस्रो नानावृक्ष्याः समिधोऽभ्यादधाति दृंहाभ्यां मक्षिम्ननित्याश्वत्थीं ये अग्नेषु मक्षिपन्न इति वैकङ्कतीं यो अस्मभ्यमरातीयादिति शमीमयीमथ संशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे औदुम्बरीं वाचयन्नेवाभ्यादधात्यथ कृष्णाजिने यजमानं वाचयति । सुप्तौ चैव न करोति वाचं च न यच्छत्यथैतामासन्दीं व्यतिषक्तपाशां जघनेनाहवनीयं निदधाति । तस्यामिण्ड्वाभ्यां परिगृह्योख्यमासादयति ॥ १४ ॥

मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनौ विभर्तुखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा युनक्त्वित्याचीन उत्तरनिर्बाधम् रुक्मं प्रतिमुञ्चते दृशानो रुक्म इत्यथ शिक्यपाशं प्रतिमुञ्चते विश्वा रूपाणि प्रतिमुञ्चते कविर्नक्तोषासेति द्वाभ्यां । तूष्णीं कृष्णाजिनमुत्तरमथैनमवेक्षते सुपर्णोऽसि गरुत्मान्त्रिवृत्ते शिरो गायत्रं चक्षु स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं[1] पुच्छं छन्दांस्यङ्गानि धिष्णियाः शफा यजूंषि नामेत्यथैनमुद्गृह्णाति सुपर्णोऽसि गरुत्मान्दिवं गच्छ सुवः पतेति । पुरस्तादेवासीते

१ यज्ञायज्ञीय T. H., M abbreviates

दीर्घाः शिक्यपाशाः[1] कारिता भवन्ति । सो[2] ऽत्र[2] नैव[2] प्रति[2] क्रमते ऽपि वैनमुपोच्छ्यते ॥ १५ ॥

विष्णोः क्रमो ऽस्यभिमातिहा गायत्रं छन्द आरोह पृथिवीमनुविक्रमस्व निर्भक्तः स यं द्विष्म इति चतुर्भिरनुच्छन्दसं । तृतीये चतुर्थमनुवर्तयति । न चतुर्थं प्रक्रामति । आहवनीयमुपात्येत्यक्रन्ददित्येतामन्वाहाय दक्षिणमꣳसमभि पर्यावर्तते ऽग्ने ऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येति चतसृभिरथोदङ् पर्यावृत्य कृष्णाजिनमुन्मुच्य शिक्यपाशमुन्मुञ्चत उदुत्तमं वरुण पाशमस्मदित्यथैनमाहरत्या त्वाहार्षमपे दृꣳहमुपसामूर्ध्वो अस्थादिति द्वाभ्यामथ यं कामयेत राजन्यꣳ राष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्राष्ट्रमेव भवतीति ब्राह्मणमथैनं यथाहृतं प्रतिपर्याहृत्यान्तर्वेद्यासादयति सीद त्वं मातुरस्या उपस्थ इति चतसृभिः सहꣳसाभिरथ मुष्टी च करोति वाचं च यच्छत्यथास्मै व्रतं प्रदाय ब्रह्मपत्नीयाꣳ समिधमभ्यादधाति वा जपति वाचस्पते ऽस्य गो देवीत्यथोख्यमुपसमिन्द्धे येन देवा ज्योतिषोर्ध्वा उदायन्निति । स यावत्तत्वो ऽस्मै व्रतं प्रदास्यन्भवत्येवमेवाथपत्नीयाꣳ समिधमभ्यादधाति वा जपति नैवमुख्यमुपसमिन्द्धे । ऽथ प्रातरुदित

---

१ Thus M Tr Be BHU (sec m.). ०धाराः Ms. U (pr m.) Bhav

२ Thus M (only सतो) Be BHU Ba Ms Bhav (one MS); सोपैववति Tr Bhav (another MS) Kes., according to Mac. the words are: सो ऽत्र वा ऽत्र वति (sc. ज्रत्ये)।

आदित्ये विसृष्टायां वाचि वात्समेणोपतिष्ठते दिवस्परि प्रथमं जज्ञे अग्निरित्येतेनैकादशर्चेन । स एवमेव पूर्वेद्युः प्रक्रामत्युत्तरेद्युरुपतिष्ठते । ऽथाप्योपवसथीये ऽहन्यात्मसमृ संपद्यते । ॥ १६ ॥ चतुर्थः ॥

अथातः प्रयाणस्यैव मीमांसा । दीक्षितं चायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते संतक्षजन्ति प्रते । संप्रयन्ति सतदुभयोर्वत्सावादधाति यदाधेयं भवति नीडे गार्हपत्यं प्रउग आहवनीयमित्यथोत्समुपावहत उदु त्वा विश्वे देवा इत्यथैनमनसः प्रउग आसादयति सीद त्वं मातुरस्या उपस्थ इति चतसृभिः संस्तूनाभिरथैतानाहवनीयादान्प्रपाकेषु यथास्थु विमिमन्ति । मध्यमे वंशे शिक्यपाशं प्रयुञ्जन्त्यपि वारण्योरग्नीन्समारोह्य प्रयाति भद्रादभि श्रेयः प्रेहि प्रेदग्ने ज्योतिष्मान्याहीति दण्ड्यामप्य यत्र उपसर्जत्यकन्ददित्येतामन्वाहाथाव-सिते हतानुषिकां समिधमभ्यादधाति समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन स्वाहेति गायत्र्या ब्राह्मणस्य प्रमायामग्निर्भरतस्य शृण्व इति त्रिष्टुभा राजन्यस्य । स यावत्कालः प्रयास्यन्भवत्येवमेवैतत्सर्वं करोति । ॥ १७ ॥

अथातो भक्षन एवातिष्ठद्रस्य मीमांसा । भक्ष चेदतिवर्धते स उपकल्पयते सतमयोदर्वीं संदृशमित्येतस्माद्दाय

१ After आहवनीयम् M Tr H Bu om इति; Msc : इदिवतो इविधार्थि आपयनीति इतिमद्र सूचयति ; in the collateral passage (Vol I, p 165, 11) however, no इति is found

यथापस्तृणन्ति योक्त्रा । अथैतमग्निं संदंशेन परिगृह्य मते ऽवधायायोदर्यां भस्म प्रवेशयत्यापो देवीः प्रतिगृह्णीत भस्मैतदस्वपे यधिष्ठव गर्भो अस्योषधीनामिति तिसृभिरनुच्छन्दसमथैनं ज्योतिष्मतीभ्यां प्रत्यवदधाति प्रसद्य भस्मना योनिं पुनरासद्य सदनमपश्चेति द्वाभ्यामथ पुनरूर्जा सह रय्येति द्वाभ्यां पुनरुदैत्यथोपस्थमुपयमिन्द्धे[1] पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्यथैनं यथाहृतं प्रतिपर्याहृत्य यजमानायतने तिष्ठन्नुपतिष्ठते बोधा स बोधीत्यान्तादनुवाकस्य । स यावत्कालो भस्मातिवर्धेत एवमेवैतत्सर्वं करोत्यथातः काम्यायैवोपयमते संभारेभ्यः । ॥ १८ ॥ पञ्चमः ॥

अथातः क्रयस्यैवोपवसथः पर्यायवते । स उपकल्पयते पञ्चशतमिष्टका अपरिमिता अपस्या मैत्रेतीः स्वयमातृण्णास्तूपधला भस्म पुरीषमूषान्सिकता इत्यथोपवसथीये ऽहन्देवयजनमध्यवस्यत्येदमगन्मायेनेति द्वाभ्यामथ महावेदिं विमिमीत एतानेव व्यायामः प्रक्रमान्प्रक्रम्याप्रण्यया मानेन प्रमाय समन्तं स्पन्द्यया परितनोति । पृथ्व्यामातनोत्यथैतमग्निं प्रत्यञ्चं यूपावटीयाच्छङ्कोर्विमिमीते पुरुषमात्रेण वेणुना[1] समपक्षपुच्छसंरत्निना[2] पक्षौ द्राघीयांसौ भवतः । षड्विधं वा सप्तविधं वा द्वादशविधं वा यावद्विधं वा चेष्यमाणो भवत्यथैनमप्रण्यया

---

१ उदैति only MH, cp TS v 2 2 5, उदैमि all the other MSS

२ वेणुमात्रेण॰ and अरत्निना वा M

मात्रेण प्रमाय समन्तꣳ स्फ्येन परितनोत्यनुस्फ्यं लेखां लिखत्यपोद्धृत्य स्फ्यं कर्षूः खानयत्यनुस्फ्यमपरशां । दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्त्येतावदेवैतदहः कर्म क्रियते । अथश्वोभूतेऽथैताꣳ रात्रिमध्वर्युरपररात्र आद्रुत्य सꣳभाषि चित्तानप्रतं दोहयतेत्यथैतमग्निꣳ सर्वे समुप्य दक्षिणतो ज्वलयन्त आसते । अथैतदग्न्यायतनꣳ शकृत्पिण्डेन परिलेपयति । तस्मिꣳस्तत्र प्राचीरिष्टका आधापयति द्वे पुरस्तात्समीची द्वे पश्चात्समीची । अथैनं प्रदक्षिणं यथोदगग्राभिरिष्टकाभिः परिचिनोत्यग्निरिष्टकं लेखां लिखत्यपोद्धृत्येष्टकाः कर्षूः खानयत्यनुस्फ्यमपरशां । दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्ति । ॥ १९ ॥

अथ शाम्यामात्मन्यग्निं[1] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । एतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिष्ट्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ संभारान्निवपत्यग्नेर्भस्मासीति अग्नेः पुरीषमसीति पुरीषꣳ संज्ञानमसि कामधरणमित्यूषान्मयि ते कामधरणं भूयादिति सिकताः । अथैनान्संप्रयौति सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः । कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता इत्यथोर्ध्वचित उप-

---

१ Thus MB Bo U Tr, Bhav.; आत्मन्यग्निं H.

दधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयाꣳसीति त्रिष्टुभा राजन्यस्य यथासुप्तु यथाशर्करमनुव्यूहति तस्मिꣳस्तिस्रः प्राचीर्याजुषीरुपदधाति ॥ २० ॥

अयꣳ सो अग्निरग्ने दिवो अर्णमच्छा जिगास्यग्ने यत्ते दिवि वर्चः पृथिव्यां पुरीष्यासो अग्नय इति द्वे पुरस्तात्प्रतीची इडामग्न इति दक्षिणामयं ते योनिर्ऋत्विय इत्युत्तरां द्वे पश्चात्प्राची चिदसीति दक्षिणां परिचिदसीत्युत्तरामथैनं प्रदक्षिणं त्रयोदशभिर्लोकंपृणाभिः परिचिनोति लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः। जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इत्यथावद्रुत्य कृष्णमश्वमभिमृश्य मनुपुरीषमुपदधाति पृष्ठो दिवीति तयादेवतं कृत्वा सूददोहसं करोतीति ना इयं प्रथमा चितिर्निष्ठीयत एवमेव द्वितीया निष्ठीयत एवं तृतीयैवं चतुर्थ्येवं पञ्चमी तान्यदि[1] चेष्यत आदित्यो ऽभ्युदियादाचयमो ऽध्वर्यु यजमानो ऽन्वारभत उत्थमेवाध्वर्युरादत्ते प्रतिप्रस्थेधनीयं प्रतिप्रस्थाता तौ पुरस्तात्प्रत्यञ्चौ अमितमिति चतसृभिः संनिवपतो ऽथ शिक्यादुखां निरूहति ॥ २१ ॥

---

1 Thus (तान्) M Tr H Bhav. (तानध्वर्युर्यजमानश्चान्वारभेरन् according to Bhav.), ता यदि B Bo Bu U M4 (ता यदि चितीः according to Msc)

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा। तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्विति। तां नावेक्षेतेत्याहुः शुगस्त्येव हि भवतीति। तस्यामनवेक्षमाणो[1] दधिद्रप्सानासिञ्चत्यमुं[2] ते शुचि दधामीति वा तूष्णीं वाथैनाꣳ सिकताभिः पूरयित्वा दर्भोपरिष्टात्संपच्छाद्योत्तरे मासखण्डे निदधात्येवमेव द्वितीयां पूरयत्येवं तृतीयां। ता या कामात्परिचरे। उप वैश्वानर्यां शिक्यमादत्ते यदस्य पारे रजसः शुक्रं ज्योतिरजायत। तन्नः पर्षदति द्विषः रत्येव यावति नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा आसन्दीꣳ[3] रुक्मस्य प्रथममसुद्रपावमित्येतत्समादाय दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणꣳ स्याद्भवति प्रदरो वा। तदेतत्पराचीमपास्य शिक्यं न्यस्यत्यग्ने[4] वैश्वानर स्वाहेति। शिक्यपाशमनु पराचीर्नैर्ऋतीरुपदधाति नमः सु ते निर्ऋते विश्वरूपे यत्ते देवी निर्ऋतिराबबन्ध यच्चास्ते भवाः मूर आयस्फुरोमीथ्युं पाश्यतायन्दीꣳ रुक्मस्य मयन्मममंधोपनिधत्ते ऽसुन्वन्तमयजमानमिच्छ देवीमहं निर्ऋतिं वन्दमान इति द्वाभ्यामपापो यनिषिच्य पराञ्च पावमनवेक्षमाणा

१ मन्यवैक्षमाण० Bhav., मन्यवेक्ष० Tr.

२ ०श्चाम् U (sec. m.) Ms, Dvaidha and probably also M; श्चं Bo H Tr U (pr. m.)- Bhav., Ked.

३ M ins., perhaps rightly. त्रिवृत्।

४ Thus Tr Bu U (sec. m.) Ms Bhav.; निरस्यति MITD ... (pr. m.)

ऽऽयन्ति । हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य गार्हपत्यमुपतिष्ठन्ते निवेशनः संगमनो वसूनामित्याहवनीयमु हैक उपतिष्ठन्ते ऽयमितो ऽधि गार्हपत्यो भविष्यतीति । ॥ २२ ॥ षष्ठः ॥

अथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्य प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य[१] संप्रेषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय चित्यानमतं प्रयच्छेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् । चित्यानमतं प्रयच्छति[१] । स पुच्छादेवापे चतुरः प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा पञ्चमं । तत्पदं निदधाति । स उपरवाणां कालो । ऽथ महावेद्या उत्तराद्वंसीयाच्छ्रोणेर्दक्षिणेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं चयोदयं । तदाग्नीध्र उपसीदति । स उत्करस्य कालो । ऽथोपरवाणां कालात्स्तम्बयजुर्हरतीदमेव महिष्ठं पौरोळाशिकं त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं अपरत्न्वु हृत्वु हृतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण ऽऽत्मानं निष्क्रम्यैतदाह वेदिकारा वेदिं कल्पयतेति । यथासंप्रैषं ते कुर्वन्त्यथ कार्ष्णाजिनीरुपानह उपमुञ्चते चिते त्वेत्यध्वर्युराचिते त्वेति प्रतिप्रस्थाता सनचिते त्वेति ब्रह्मा तपश्चिते त्वेति यजमानश्चिते त्वा चित्ते त्वेत्येव वा सर्वे । अपि वा तूष्णीमेवाथ याचति धनुर्मात्रस्चतुरो ऽसन् ऐन्द्रीमिष्टकां विभक्तिमुदपात्रं दर्भस्तम्बं दूर्वामाज्यस्थालीं सस्रुवामित्येत-

---

१ The clause अथोपनिष्क्रम्य ..प्रयच्छति is not found in M Tr H

समादायोत्तरे श्रोण्यन्ते संसादयन्त्यथ[1] द्वाभ्यामात्मन्यग्निं[2] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति श्वेतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथादत्ते धनुर्बाणवच्चतुरो ऽश्मन इत्येतत्समादाय जघनेन दक्षिणेनाग्निं परीत्यापेण यूपावटीयꣳ शङ्कुं तिष्ठन्नुरधिष्ण्यं धन्वनायत्यान्तःशर्करमिषुं निहन्ति ॥ २३ ॥

इन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पश इत्यंसद्वाश्मानमुपदधाति यो नः पुरस्तादघायुरभिदासत्येतꣳ सो ऽश्मानमृच्छत्वित्यथ दक्षिणस्य पक्षस्य दक्षिणे पक्षोपक्षव[3] आयत्यान्तःशर्करमिषुं निहन्त्यंसद्वाश्मानमुपदधाति[4] यो नो दक्षिणत इत्यथ पुच्छस्यापरे पुच्छोपक्षव[3] आयत्यान्तःशर्करमिषुं निहन्त्यंसद्वाश्मानमुपदधाति यो नः पश्चादित्यथोत्तरस्य पक्षस्योत्तरे पक्षोपक्षव[3] आयत्यान्तःशर्करमिषुं निहन्त्यंसद्वाश्मानमुप-

---

१ Thus (plural) Tr U Be B Ma (sc. परिचर्मिणः according to Mso); °सादयन्त्यथ MH.

२ Thus M Tr Be Ma; आत्मन्य° H; आत्मनि° B.

३ Instead of उपक्षव (cf. Śulba-sūtra 6, where, however, the var. r. उपपक्ष and उपक्षय, cp Lāṭy. I. 5,7, Drāhy. II. 1.10, are found) the MSS have mostly उपपक्षय or उपपक्ष ।

४ Here Bu breaks off; here and infra M Tr U (pr. m.) every time निहत्याश्मा° ।

दधाति यो न उत्तरत इति ' द्विषूपदधातीति ब्राह्मणं ' तथादेवतं कृत्वा स्रुद्दोहसः[1] करोत्यथैतामैन्द्रीमिष्टकामाक्रमणं प्रत्युपदधाति स इं पाहि य ऋजीषी तरुत्रो यः शिप्रवान्वृषभो यो मतीनाम्। यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इन्द्र चित्राꣳ अभितृन्धि वाजानिति ' तथादेवतं कृत्वा स्रुद्दोहसं करोत्यथ[2] दक्षिणतो विभक्तिमुपदधात्यग्न आयाहि वीतय इति ' तथादेवतं कृत्वा स्रुद्दोहसं करोत्यथाधिद्रुत्य[2] स्वयमातृण्णायाꣳ मङ्कुसुद्घोदपात्रमुपनिनीय दर्भस्तम्बमुपदधाति वाक्का समुद्र उपदधामिति वा तूष्णीं वाथैनꣳ स्रुवाहुतिभिरभिजुहोति यजूरन्धो ऽपावभिरिति पञ्चभिरथ दूर्वामुपदधात्यायने ते परायणे दूर्वा रोहन्तु पुष्पिणीः। उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवानिति[3] ' तथादेवतं कृत्वा स्रुद्दोहसौ करोत्यथैतत्पुरस्तादेवौदुम्बरं युगलाङ्गलं कारितं भवति ॥ २४ ॥

[4]पञ्चवं वा द्वादशगवं वा ' तस्य वरत्राः संनह्यति सं वरत्रा दधातन निष्कृताहावमवटमिति द्वाभ्यां ' युनक्ति सीरा

---

१ ॰दोहसं M Tr H.

२ Thus B Bhav. Ms., the passage अथ दक्षिणतो…करोति (l 7) is inserted by M Tr BHU infra l. 13 after ॰दोहसौ करोति; but cp. the order, in which supra p 21, 20 the substances are enumerated.

३ cp Ath. V. vi. 106 1

४ cp Pitṛmedhasūtra p 22, 5 sqq

युञ्जन्ति कवयो युगा युनक्त सीरेति द्वाभ्यां । कृषति लाङ्गलं पवीरवत् शुनं नः फाला इति द्वाभ्याम् । सीतां प्रत्यवेक्षते कामं कामदुघे धुक्ष्व घृतेन सीतेति द्वाभ्याम् । स पुच्छादेवाग्रे तिस्रः प्राचीः सीताः कृषत्युत्तरार्धे श्रोणेर्दक्षिणमंसमभि तिस्रो । दक्षिणार्धे श्रोणेरुत्तरमंसमभि[1] तिस्रो । दक्षिणात्पक्षादुत्तरं पक्षमभि तिस्रो । ऽथैतान्विमुच्य प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदीच उत्सृजति[2] । त एते ऽध्वर्योर्भवन्ति यदि दक्षिणावता यजते । यद्यु वै क्षत्रियो[3] ऽग्निर्यथागवं व्युदचन्ति[4] । यत्रैवानड्वाहस्तद्युगलाङ्गलमथास्यैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन समुदायुतं भवति । स पुच्छादेवाग्रे तिस्रः प्राचीः सीता वपति या जाता ओषधय इति तिसृभिरनुच्छन्दसमुत्तरार्धे श्रोणेर्दक्षिणमंसमभि तिसृभिर्दक्षिणार्धे श्रोणेरुत्तरमंसमभि[5] तिसृभिर्दक्षिणात्पक्षादुत्तरं[6] पक्षमभि पञ्चभिर्यतुर्दशभिर्वपतीति ब्राह्मणमथ दिग्भ्यो लोष्टान्समस्यति । सो ऽत एव प्राङ् द्रुत्वा बहिःशर्कराल्लोष्टमादत्ते । तमन्तःशर्करं न्यस्यति ॥ २५ ॥

---

[1] Thus MT Ms; श्रोणेरोत्तर° all the other MSS.

[2] Thus M Tr UHB Be Keś. (the MS. of the India Office has twice उत्सृजंति, both times corrected into singular); उत्सृजंति Msc; cp. TS. v. 2 5,3.

[3] Thus (or क्षत्रियो) all exc. MB Keś, which have क्षत्रियो ।

[4] Thus B; व्यादचन्ति Ms; व्युदंचंति M Tr Be U (pr. m); व्युदचंति U (sec m).

[5] Thus M (pr m) and Ms; the other MSS श्रोणेरोत्तर° ।

[6] Thus Ms only, all the other MSS पक्षादोत्तरं ।

मा नो हिंसीज्जनिता यः पृथिव्या इत्यथ दक्षिणं पक्ष-मनुद्रुत्य बहिःशर्कराल्लोष्टमादत्ते तमन्तःशर्करं न्यस्यत्यभ्यावर्तस्व पृथिवीत्यथ पुच्छमनुद्रुत्य बहिःशर्कराल्लोष्टमादत्ते तमन्तःशर्करं न्यस्यत्यग्ने यत्ते शुक्रं यच्चन्द्रमित्यथोत्तरं पक्षमनुद्रुत्य बहिःशर्कराल्लोष्टौ लोष्टावादत्त इषमूर्जमहमित आदद इति तयोरन्यतरमन्तःशर्करं न्यस्यत्या नो गोषु विशत्वौषधीष्विति तां द्विषमितरं निरस्यति यद्यामस्य द्विषं द्वेष्यो भवति जहामि सेदिमनिराममीवामित्यादद्वाम एवैतां द्विषमभि संपादयेदित्येतदेकं यजुषा[१] यजुर्विपरिहरेदित्येतदपरमथ महावेद्या उत्तरादंसीयात्स्रक्त्यावेद्यन्तेन योऽग्नीधः प्रक्रमाग्नीध्रमत्युदस्य चतुर्थं तथात्वाद्ध्याहृता वामाचं परिश्रियन्त्युत्तरवेदेराहृतोत्तरवेदिं निवपन्त्युत्तरनाभिमुत्सादा सिकता निवपत्यग्ने तव श्रवो वय इति षड्भिरनुच्छन्दसमंशोर्ध्वचित उपदधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुब्रूह्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयांसीति त्रिष्टुभा राजन्यस्य यथानुष्टु यथाशर्करमनुघूषति ॥ २६ ॥ सप्तमः ॥

अथैतां महाचितिं सहमादयन्त्यथैत[२] शालामुखीयाभ्यां वा

---

१ MB Be Tr U Me ins. अतु; H om. this word as also the Dvaidhasūtra.

२ संपादयन्त्य- H Tr Bhav

सर्मापि या द्वाविंशतिर्[1] च[2] दर्भपुञ्जीलानि पयःप्रोक्षं चाज्यप्रोक्षं चाग्र्यं चौत्तरवेदिकांश्च संभारान्वार्हपत्यचयोदशाश्च[3] स्तुषेष्टकास्तावत एव हिरण्यशल्कान्मृतं[4] चोदकुम्भं च पुष्करपर्णं च रुक्मं च हिरण्मयं च पुरुषं स्रुचौ च सर्पशिरश्च सर्वं च स्वयमातृण्णानिकौलं दूर्वा च स्तम्ब्या अवकाश्च या च चान्या उपधास्यन्भवति ता दधि च मधुमिश्रं कूर्मं चौदुम्बरं चोलूखलमुसलं सर्वौषधं चोखाश्च पशुशीर्षाणि चेति[1] द्वाविंशतिर्[4] दर्भपुञ्जीलानि पयःप्रोक्षे ऽवधाय तैः प्रोक्षत्यग्नीभ्यो ऽग्निभ्यो जुष्टान्प्रोक्षामीति वा तूष्णीं वाग्निनाग्निः समिध्यत इत्याज्यप्रोक्षेणाग्निं समिधमादायाग्निभ्यः प्रणीयमानेभ्यो ऽनुब्रूहीति[1] यदि होता न कामयते यजमान एव पुरीष्यासो अग्नय इत्येतामेकां चिरभ्यावाचाग्निमग्रमाः[5] प्रतिपद्यन्ते[6] ऽथैतेनाग्नेन प्राचाधिद्रवति ॥ २७ ॥

अभ्यस्थाद्विश्वाः पृतना अरातीरित्यंस दक्षिणमश्वमभ्यवक्रामन्तमनुमन्त्रयते यदक्रन्दः प्रथमं जायमान इत्युत्तरे

---

१ om. BM; च only found in U (sec. m) and Ms.

२ Thus TB Be U (sec. m); गार्हपत्यं चयनयो॰ HU (pr. m.); गार्हपत्यचं चयो॰ M.

३ Thus (॰मन्वा॰) M Tr. Be U Ms; ॰मकवा॰ Be.; प्रतवा॰ HU (pr. m).

४ Most of the MSS ins. च।

५ अथाग्रप्रथमा MH.

श्रोण्यन्ते सङ्ग्सादयन्त्यथ[1] द्वाभ्यामात्मन्यग्निं[2] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं समस्त इति द्वाभ्यामथ पुच्छसन्धौ चात्मसन्धौ च घृतं निदधात्यथोदकुम्भं[3] पर्यस्यत्यादन्ते दक्षिणेन कुम्भङ्ग सव्येन कुम्भीङ्ग सताभ्यां पूरयित्वा हिरण्यगर्भौ प्रत्यस्य या एता दक्षिणादङ्गसात्स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुषीतमुपदधाति ॥ २८ ॥

हिरण्यवर्णाः शुचयः पावका यासाङ्ग राजा वरुणो याति मध्य इति द्वाभ्यामेवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरायै श्रोणेः स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुषीतमुपदधाति तृतीयया च चतुर्थ्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता दक्षिणायै श्रोणेः स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुषीतमुपदधाति पञ्चम्या च षष्ठ्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरादङ्गसात्स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुषीतमुपदधाति सप्तम्या चाष्टम्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता दक्षिणात्पश्चात्स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुषीतमुपदधाति नवम्या च दशम्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरात्पश्चात्स्वयमातृण्णामभ्याद्रवन्ति तासु

---

१ ॰सादयंत्य॰ Tr Bo BU Ms, ॰सादयन्त्य॰ MH.

२ Thus M Tr Bo U Ms, ॰ात्मन्॰ BH

३ निदधाति instead of निदधात्यथ M Tr HU, omitting the following अथ।

विषुवत्यनुषीतमुपदधात्येकादश्यां च द्वादश्यां च ' तासां बार्हस्पत्यं मध्य[1] उपदधाति दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या संभव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्यनुषीतमुपदधातीति ब्राह्मणं ' तथादेवतं कृत्वा सूददोहसः करोति ' ॥ २९ ॥

अथोत्तरवेदेरायतनोत्तरवेदिमलङ्करोत्यथोत्तरवेद्यामपां पृष्ठमसीति पुष्करपर्णमुपदधाति ' तथादेवतं कृत्वा सूददोहसं करोत्यथोत्तरवेद्यामेवोत्तरनाभ्यां रुक्ममुपदधाति ब्रह्म जज्ञानमित्यथैनमन्तरेण पञ्चगृहीतेन व्याघारयति कृणुष्व पाजः प्रसितिं न पृथ्वीमित्यथ दक्षिणतः प्राञ्चं हिरण्मयं पुरुषमुपदधाति हिरण्यगर्भः समवर्तताग्र इत्यथैनमभिमृशति द्रप्सश्चस्कन्देति ' तथादेवतं कृत्वा सूददोहसौ करोत्यथोत्तरतः प्रक्रमवेलायां स्रुचावुपदधात्याज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीं दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीमियमसीति कार्ष्मर्यमयीमभावसीत्यौदुम्बरीं मनसैव ' तथादेवतं कृत्वा सूददोहसौ करोत्यथ दक्षिणे प्रलाटे सर्पशिर उपदधाति नमो अस्तु सर्पेभ्य इति तिसृभिरनुच्छन्दसमपि वा यतउत्सारं जनपदस्य जन्यं भयं मन्यते ' तथादेवतं कृत्वा सूददोहसं करोति ' ॥ ३० ॥ अष्टमः ॥

अथ स्वयमातृण्णां यजुषा करोति ध्रुवासि धरुणास्तृता विश्वकर्मणा सुकृता । मा त्वा समुद्र उद्वधीन्मा सुपर्णो व्यथ-

---

¹ मध्य M only

माना पृथिवीं दृंहेत्यथैनामश्मन्वधाप्य विदुषा ब्राह्मणेन महाधिद्रुत्योपदधाति यथैतस्य पुरुषस्य प्राणैः प्राणाः संनिधीयेरन्नपिधीयेरन्नुं प्रजापतिष्ट्वा सादयत्वित्यनुद्रुत्याग्निस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथैनमाख्यापयमाह स्वयमातृण्णामुपधायेत्यनुप्राणित्यथैव ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमातृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा घृतेनेत्यथ हुत्वाभ्यामन्वारभ्याम्यारोहं वाचयति पृथिवीमाक्रमिषं प्राणो मा मा हासीदित्यपरे बिले हिरण्येष्टकामुपदधाति तेजो ऽसि तेजो मे यच्छ पृथिवीं यच्छ पृथिव्यै मा पाहीति । तां जघनेन प्रक्रमदेशायां मण्डलेष्टकामुपदधाति पृथिव्युदपुरमन्नेन विष्टेति । दक्षिणतो रेतःसिचमुपदधाति पृथिवी रेतःसिक्का मे रेतो दधातु या मे रेतः प्रजनयमिति । तयादेवतं कृत्वा सूददोहसः करोति । ॥ २१ ॥

अथैता दश स्कन्ध्याः प्राचीरायातयति द्वे एतये द्वे द्वियजुषी विराजं च विद्युज्ज्योतिषं च मयुजं चाषाढां च द्वे संयान्यावंसयो उपदधाति मधुश्च माधवश्चेत्यृतव्यकामुपदधात्यग्नेर्योनिरसीत्यथ द्वियजुषी उपदधाति काण्डात्काण्डात्प्ररोहन्ती या शतेन प्रतनोषीति द्वाभ्यां दूर्वेष्टकामथ हिरण्यगर्भामुपदधाति यास्ते अग्ने सूर्ये रुचो या वो देवाः सूर्ये रुच इति । विराजं च विद्युज्ज्योतिषं च विराट् ज्योतिरधारयद्बृहस्पतिस्त्वा सादयत्वित्युत्तरामथ मयुजमुपदधातीन्द्राग्निभ्यां मा मयुजा

मारण्यमनु ते दिशामीति स्रुचमनूत्सृजति । ललाटे हिरण्येष्टकामुपदधाति वरुणो दिशां पतिरित्यथोत्तरतो दक्षिणामुख उपविश्यान्तरातम्बिष्ठस्य शिर उपदधाति यो अग्निरग्नेस्तपसो ऽधि जात इत्यनुद्रुत्याजा ह्यग्नेरजनिष्ट गर्भादिति । शरभमारण्यमनु ते दिशामीति स्रुचमनूत्सृजति । ललाटे हिरण्येष्टकामुपदधात्यग्निर्दिशां पतिरित्यन्तेषु तस्य मुद्ध्नोपदध्यादिति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोति । ॥ २४ ॥ नवमः ॥

अथापस्या उपदधात्यपां त्वेमन्त्सादयामीति पञ्च पुरस्तात्प्रतीचीरुपदधाति पञ्च दक्षिणतः पञ्च पश्चात्प्राचीः पञ्चोत्तरतश्छन्दस्यास्तथादेवतं कृत्वा सूददोहसः करोत्यथ प्राणभृत उपदधात्ययं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रं गायत्रादुपांशुरुपांशोस्त्रिवृत्त्रिवृतो रथंतरꣳ रथंतराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्य इति । दश प्राचीरायातयति स्वयमातृण्णाया अयं दक्षिणा विश्वकर्मेति । दश दक्षिणा आयातयति स्वयमातृण्णाया अयं पश्चाद्विश्वव्यचा इति । दश प्रतीचीरायातयति स्वयमातृण्णाया इदमुत्तरात्स्वरिति । दशोदीचीरायातयति स्वयमातृण्णाया इयमुपरि मतिरिति । दशभिरपरिशिष्टाभिर्दक्षिणं परिचिनोत्यंसद्वयेनोपदधातीति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोत्यथ संयत उपदधात्यायुषः प्राणꣳ संतनिवति द्वादश तिरश्चीर्दिक्षु न मध्ये । तथा-

देवतं कृत्वा सूददोहसः करोत्यथापानभृतमुपदधाति प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषिरिति। वाचयति पितरः पितामहा इति। दक्षिणेन प्राणभृतो द्वे प्रतीचीरायातयति स्वयमातृण्णामभि दक्षिणां दिशमिति। जघनेन प्राणभृतो द्वे उदीचीरायातयति स्वयमातृण्णामभि प्रतीचीं दिशमित्युत्तरेण प्राणभृतो द्वे प्राचीरायातयति[1] स्वयमातृण्णामभ्युदीचीं दिशमित्यग्रेण प्राणभृतो द्वे दक्षिणा आयातयति स्वयमातृण्णामभ्यूर्ध्वां दिशमिति। मध्येन प्राणभृतो दशभिरपरिशिष्टादपसकैः परिचिनोति। विषूचीरुपदधातीति ब्राह्मणसंपानभृद्भिश्चितिराप्यते। यथादेवतं कृत्वा सूददोहसः करोत्यथाग्निं सर्वतोमुखं चिनुते[2]। ॥ ३५ ॥

गायत्रीं पुरस्तादुपदधाति त्रिष्टुभं दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्ये[3]। यथादेवतं कृत्वा सूददोहसः करोत्यथाग्नेरङ्गान्युपदधाति प्राच्या त्वा दिशा सादयामि गायत्रेण छन्दसाग्निना देवतयाग्नेः शीर्ष्णाग्नेः शिर उपदधामि दक्षिणया त्वा दिशा सादयामि प्रतीच्या त्वा दिशा सादयाम्युदीच्या त्वा दिशा सादयाम्यूर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसेति। यथादेवतं कृत्वा सूददोहसः करोत्यथोत्त-

---

१ Thus Tr HBU Ms; प्रतीचीर° M Be

२ Thus Tr Be BU Ms, चिनोति MH

३ मध्य इति M.

युजा युनज्मीत्यथाषाढां स्वालिखितामुत्तरलक्ष्मास्तुपदधात्यषाढासि सहमानेत्यथ संयान्यानुपदधात्यग्नेर्योन्यसि देवानामग्नेयान्यसीति । तयादेवतं कृत्वा सूददोहसः करोति । ॥ ३२ ॥

अथोत्तरेण स्वालिखितामुपविश्य याचति दधि च मधुमिश्रं कूर्मं च । तं दध्ना मधुमिश्रेणाभ्यनक्ति मधु वाता ऋतायत इति तिसृभिरनुच्छन्दसमथैनमवकाभारेण परिवेष्ट्य पुरस्तात्प्रत्यञ्चमुपदधाति मही द्यौः पृथिवी च नस्तस्य भागाः प्रचरन्त्यग्नय इति द्वाभ्यामथैनं सक्तुभिः परिलिम्पत्यभितो ऽनवधर्षणाय । तयादेवतं कृत्वा सूददोहसं करोत्यथाचैव तिष्ठन्याचत्यौदुम्बरं चोलूखलमुसलं सर्वौषधं च । तदेतत्प्रादेशमात्रमुलूखलं भवत्यरत्निमात्रं मुसलं । तस्मिन्सर्वौषधमवहत्यूर्जो भागो ऽस्यूर्जः पवित्रमूर्जमस्मभ्यायधेत्यथैनदुत्तरतः[1] प्रक्रममेवायामुपदधाति तद्विष्णोः परमं पदमिति । लोकंपृणामुत्तरतो मुसलं करोति । तयादेवतं कृत्वा सूददोहसौ करोत्यथ स्रुच्यामुखां याचति । तस्यामन्तरवमाविषो द्वे स्रुवाहुती जुहोत्यग्ने युक्ष्वा हि ये तवेति दक्षिणे चित्ते जुहोति युक्ष्वा हि देवहूतमानित्युत्तरे । अथैनामुत्तरतः प्रक्रममेवायामुपदधाति ध्रुवासि पृथिवि सहस्व पृतन्यत इति । लोकंपृणे उत्तरत इतिरे करोति । तयादेवतं कृत्वा सूददोहसः करोत्यथैतत्पुरुषशिरो याचति । तस्य प्राणेषु हिरण्यशकलान्प्रत्यस्यति

---

१ Thus U (sec. m) and Ms (स्मत् सर्वौषधेन पूर्णमुलूखलम् Msc.); °मयैनमु° all the other MSS and U (pr. m)

द्रप्सश्चस्कन्देत्याग्ने ऽभ्रादिदं विश्वस्य भुवनस्य वाजिनमिति दक्षिणस्यां नासिकायामग्नेर्वैश्वानरस्य चेत्युत्तरस्यामग्निर्ज्योतिषा ज्योतिष्मानिति दक्षिणे ऽक्षिण् रुक्मो वर्चसा वर्चस्वानित्युत्तर ऋचे त्वेति दक्षिणे कर्णे रुचे त्वेत्युत्तरे उप स्रुचि चतुर्गृहीतं गृहीत्वा दक्षिणे ऽक्षिण् जुहोति चित्रं देवानामुदगादनीकमित्यपरं चतुर्गृहीतं गृहीत्वोत्तरे ऽक्षिण् जुहोति चित्रं देवानामिति समान्या जुहोतीति ब्राह्मणमथैनद्दध्ना मधुमिश्रेण पूरयति समित्स्रवन्ति सरितो न धेना इत्यान्तादनुवाकस्याथैनत्प्राचीनमुत्तानमुखायामुपदधाति ॥ २९ ॥

आदित्यं गर्भं पयसा समङ्ग्धीत्यनुद्रुत्येमं मा हिंसीर्द्विपादं पशूनामिति मयुमारण्यमनु ते दिशामीति शुचमनूत्सृजति ललाटे हिरण्येष्टकामुपदधाति विश्वकर्मा दिशां पतिरित्यथ पुरस्तात्प्रत्यङ्मुख उपविश्यान्तरात्मनश्वस्य शिर उपदधाति वातस्य भ्राजिं वरुणस्य नाभिमित्यनुद्रुत्येमं मा हिंसीरेकशफं पशूनामिति गौरमारण्यमनु ते दिशामीति शुचमनूत्सृजति ललाटे हिरण्येष्टकामुपदधाति प्रजापतिर्दिशां पतिरित्यथ पश्चात्प्राङ्मुख उपविश्यान्तरात्मनृषभस्य शिर उपदधात्यजस्रमिन्दुमरुषं भुरण्युमित्यनुद्रुत्येमꣳ समुद्रꣳ शतधारमुत्समिति गवयमारण्यमनु ते दिशामीति शुचमनूत्सृजति ललाटे हिरण्येष्टकामुपदधाति रुद्रो दिशां पतिरित्यथ दक्षिणत उदङ्मुख उपविश्यान्तरात्मन्वृष्णेः शिर उपदधाति वरूत्रिं त्वष्टुर्वरुणस्य नाभिमित्यनुद्रुत्येमामूर्णायुं वरुणस्य मायामित्युष्ट्र-

रतः प्राजापत्यामुपदधाति संवत्सरस्य प्रतिमामिति तां जघनेन प्रक्रमेऽन्तरायां प्राञ्चमृषभमुपदधाति त्वामग्ने वृषभं चेकितानमिति तयादेवतं कृत्वा सूददोहसौ करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति तयादेवतं[1] करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः। जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति आप्याय लोकंपृणया अवौर्व्यग्निं माचीभिः संच्छादयन्ति संच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य ताभ्यामवद्रवति तास्मा आसन्प्राणदा इत्यथापराह्णिकीभ्यां[2] प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते एवमेतां रात्रिम् ॥ १९ ॥ दशमः ॥

अथ द्वितीयेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरत्यथ कार्ष्णाजिनी[3] उपानहावुपमुञ्चेते[3] अध्वर्युश्च यजमानश्चाथ ताभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति स्वयंचितिं जपति यास्ते अग्ने समिधो यानि

---

[1] Thus M Tr. Ms, the other MSS. abbreviate the following passage.

[2] °पराह्णिका (or °क) आपराह्णि° Bo U Ms.

[3] °ने M Tr U Ms; °जिनौउपा° B; °जिनिउपा° H; Bo defect.

धामेति । कृष्णमश्वमभिमृश्य तत्पुरीषमुपदधाति पृष्टो दिवीति । तथादेवतं कृत्वा सूददोहसं करोत्यथापराह्णिकीभ्यां[1] प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते । अथास्यैतां रात्रिमेव तृतीये ऽहन्नुदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । सर्व एव कार्ष्णाजिनीरुपासत उपसृजन्ति । ऽथ यावत्याज्यस्थालीः स्रुवां विभक्तिमुदपात्रं पञ्च च स्कन्ध्या अवकाशा या च चान्या उपधास्यन्भवति ताः । एतत्समादायोत्तरे श्रोण्यन्ते संसादयत्यथ द्वाभ्यामात्मन्नग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्येतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथाधिद्रुत्य प्रथमे संचिताङ्गतौ जुहोत्यग्न उद्धि तत्त्वा यामीति । दक्षिणतो विभक्तिमुपदधात्यग्निं दूतं वृणीमह इति । तथादेवतं कृत्वा सूददोहसं करोति ॥ ३७ ॥

अथैताः पञ्च स्कन्ध्याः प्राचीरायातयति द्वे ऋतव्ये द्वे समुद्रावेकाङ्ग संयानीमृतव्ये उपदधाति शुक्रश्च शुचिश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीत्यथ मधुशावुपदधात्याधाराभ्यां त्वा सयुजा युजा युनज्मि तेजसा त्वा सयुजा युजा युनज्मीत्यथ संयानीमुपदधाति वायोर्यान्यसीति । तथादेवतं कृत्वा सूददोहसः करोत्यथाश्विनीरुपदधाति ध्रुवचितिर्ध्रुवयोनिरिति पञ्चैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करो-

---

१ अथापराह्ण चाप॰ Be UH Ms

त्र्यृतव्या उपदधाति सयूरृतुभिः सयूर्विधाभिरिति पञ्चैकैका द्विखेका मध्ये । समानप्रभृतयो भवन्ति समानोदर्का इति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोत्यथ प्राणभृत उपदधाति प्राणं मे पाह्यपानं मे पाहीति पञ्चैकैका द्विखेका मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ दृष्टिमतीरुपदधात्यपस्पिन्वौषधीर्जिन्वेति पञ्चैकैका द्विखेका मध्ये । अनुपरिहारं सादयतीति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोत्यथ मूर्धन्वतीरुपदधाति विष्टम्भो वय इति चतस्रः पुरस्ताद्दरसपातिनीर्तथादेवतं¹ कृत्वा सूददोहसः करोत्यथ वयस्या उपदधाति । अविर्वय इति पञ्च दक्षिणायां श्रोण्यामुपदधाति पष्ठवाद्वय इति पञ्चोत्तरस्यां । बस्तो वय इति दक्षिणेऽंस उपदधाति । वृष्णिर्वय इत्युत्तरे । व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति । सिंहो वय इत्युत्तरे । पुरुषो वय इति मध्ये । पुरुषेण चितिराप्यते । तथादेवतं कृत्वा सूददोहसः करोत्यथाग्निं सर्वतोमुखं चिनुते अग्रेऽङ्गानि भाजापत्यामृषभं लोकंपृणा । उदीच्याम लोकंपृणया प्रसौत्यग्निमुदीचीभिः संप्रच्छादयन्ति । संप्रच्छनं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्ताभिस्तृणति चित्ति-

¹ Thus (०सादिनीरु) MBU Bhar. (one MS), पातीनीरु Be; ०पादिनीरु Tr H Bhar (another MS), Kes. (twice), Ma. (but Msc. - संवत्सरवत् समस्या मस्या चार्येया, and यथा सर्वेषुर्वेषपातिन्व इति गोपाल.) ।

मचित्तिं चित्तवद्धि विद्वानित्याग्नेय्या त्रिष्टुभैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्नासदा इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते । वसन्त्येतां रात्रिम् । ॥ ३८ ॥ एकादशः ॥

अथ चतुर्थेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । समानं पुरीषस्योपधानमथ पञ्चमेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चते । ऽथ यावत्यास्यालोष्टं समुद्रं विभक्तिमुदपात्रं सर्वं च स्वयमातृण्णानिकीर्णं दर्भं च स्कन्ध्या अवकाश्य या उ चान्या उपधास्यन्भवति ता । एतत्समादायोत्तरे श्रोण्यन्ते सङ्सादयत्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति याम्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथाधिद्रुत्य द्वितीये संचिताकृतौ जुहोत्यग्ने दुभ्र तत्त्वा यामीति । दक्षिणतो विभक्तिमुपदधात्यग्निनाग्निः समिध्यत इति । तथादेवतं कृत्वा सूददोहसं करोत्यथ स्वयमातृण्णामध्वर्युराप्याविदुषा ब्राह्मणेन सहाधिद्रुत्योपदधाति ध्रुवेन्द्राग्नी अव्यथमानामित्यनुद्रुत्य वायुस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । अन्याद्वितीयामुपधायेति । प्राणापानिति । स व्यानो । ऽथैष ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमातृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा[illegible]त्यं हुत्वाभ्यामन्वारभ्या-

ण्यारोहं नाकस्यान्तरिक्षमाक्रमिषं प्रजा मा मा हासीदित्यपरे विले हिरण्येष्टकामुपदधाति ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहीति । तां जघनेन प्रक्रमवेलायां मण्डलेष्टकामुपदधात्यधिद्यौरन्तरिक्षं ब्रह्मणा विष्टेति । दक्षिणतो रेतःसिचमुपदधात्यन्तरिक्षद् रेतःसिक्तस्मे रेतो दधातु तस्मै रेतः प्रजनयमिति मनसैव । तथादेवतं कृत्वा सूददोहसः करोति । ॥ ३९ ॥

अथैता दश स्कन्ध्याः प्राचीरायातयति यतश्च यतथाः सम्राजं च विश्वज्योतिषं च द्वे यजुषी द्वे संयान्यावेतस्या उपदधाति नभश्च नभस्यश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीतीषश्चोर्जश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीति सम्राजं च विश्वज्योतिषं च सम्राड् ज्योतिरधारयद्विश्वकर्मा त्वा सादयत्वित्युत्तरामेव यजुषावुपदधाति वर्षेणा त्वा सयुजा युजा युनज्म्युक्थैभिस्त्वा सयुजा युजा युनज्मीत्यथ संयान्यावुपदधाति देवानां वायोयान्यस्यन्तरिक्षस्य पात्वमीति । तथादेवतं कृत्वा सूददोहसः करोत्यथ दिश्या उपदधाति राज्ञ्यसि प्राची दिगिति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ आयुष्या उपदधात्यायुर्मे पाहि प्राणं मे पाहीति दश पुरस्तात्प्राचीस्तासां ज्योतिष्मतीमुत्तमामुपदधाति । तथादेवतं कृत्वा सूददोहसः करोत्यथ छन्दांस्युपदधाति मा छन्द इति दश दक्षिणतः पृथिवी छन्द इति दश पश्चादग्निर्देवतेति दशोत्तरतस्तथादेवतं कृत्वा सूददोहसः

करोत्यथ वालखिल्या उपदधाति मूर्धासि राडिति सप्त पुरस्तात्प्रतीचीरुपदधाति यन्त्री राडिति सप्त पश्चात्प्राचीर्वालखिल्याभिश्चितिराप्यते तयादेवतं कृत्वा सूददोहसः करोत्यथाग्निꣳ सर्वतोमुखं चिनुतेऽग्नेरङ्गानि प्राजापत्यान्पशुँल्लोकंपृणाः प्राच्याच लोकंपृणया प्रचौत्यथि प्राचीभिः संप्रच्छादयन्ति संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिकॢप्त्याभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या जगत्यैतां चितिमभिमृश्य द्वाभ्यामवद्रवति याश्च आसंप्रापदा इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यैतावदेवैतदहः कर्म क्रियते वसन्त्येताꣳ रात्रिम् ॥ ४० ॥ द्वादशः ॥

अथ षष्ठेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति समानं पुरीषस्योपधानमथ सप्तमेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्तेऽथ याचत्याज्यस्थालीꣳ स्रुवं विभक्तिमुदपात्रं यस्य च स्कन्ध्या अवकाश्च या उ चान्या उपधास्यन्भवति ताः एतत्समादायोत्तरे स्रोण्यन्ते सꣳसादयत्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथाधिद्रुत्य तृतीये संचिताऊती जुहोत्यग्ने गच्छ तत्त्वा यामीति दक्षिणतो विभक्तिमुपदधात्यग्निर्नेत्राणि जङ्घनदिति तयादेवतं कृत्वा सूददोहसं करोत्यथैताः पञ्च [illegible]

सयुजावेकाष्टं संयानीभ्यां तथ्ये उपदधाति सहश्च सहस्यश्चेत्येवमनूपदधात्यग्नेर्योनिरसीत्यथ सयुजावुपदधाति स्तोमैभिस्त्वा सयुजा युजा युनज्मि छन्दोभिस्त्वा सयुजा युजा युनज्मीत्यथ संयानीमुपदधाति देवानामन्तरिक्षयान्यसीति । तथादेवतं कृत्वा सूददोहसः करोति । ॥ ४१ ॥

अथाक्ष्णयास्तोमीया उपदधात्याशुस्त्रिवृदिति पुरस्तादुपदधाति व्योम सप्तदश इति दक्षिणतो धरुण एकविंश इति पश्चाद्भान्तः पञ्चदश इत्युत्तरतः । प्रतूर्तिरष्टादश इति पुरस्तादुपदधात्यभिवर्तः सविंश इति दक्षिणतो वर्चो द्वाविंश इति पश्चात्तपो नवदश इत्युत्तरतो । योनिश्चतुर्विंश इति पुरस्तादुपदधाति गर्भाः पञ्चविंश इति दक्षिणत ओजस्त्रिणव इति पश्चात्संभरणस्त्रयोविंश इत्युत्तरतः । क्रतुरेकत्रिंश इति पुरस्तादुपदधाति ब्रध्नस्य विष्टपं चतुस्त्रिंश इति दक्षिणतः प्रतिष्ठा त्रयस्त्रिंश इति पश्चान्नाकः षट्त्रिंश इत्युत्तरतो । अग्नेर्भागोऽसीति पुरस्तादुपदधाति नृचक्षसां भागोऽसीति दक्षिणतो मित्रस्य भागोऽसीति पश्चादिन्द्रस्य भागोऽसीत्युत्तरतो । वसूनां भागोऽसीति पुरस्तादुपदधात्यादित्यानां भागोऽसीति दक्षिणतोऽदित्यै भागोऽसीति पश्चाद्देवस्य सवितुर्भागोऽसीत्युत्तरतो । धर्त्रश्चतुष्टोम इति पुरस्तादुपदधाति यावानां भागोऽसीति दक्षिणत ऋभूणां भागोऽसीति पश्चाद्विवर्तोऽष्टाचत्वारिंश इत्युत्तरतो । ऽन्ययानूच्यान्ययोपदधातीति ब्राह्मणं । तथादेवतं कृत्वा सूददो-

स्रम: करोत्यथ यष्टीरुपदधात्येकयास्तुवत प्रजा अधीयन्तेति मध्यदेश चतस्रो दक्षिणे ऽꣳस उपदधात्यथ तिस्रो ऽथ तिस्रो ऽथ तिस्रो ऽथ चतस्रो दक्षिणादꣳसाद्दक्षिणाꣳ श्रोणिमभ्यायातयति[1] तयादेवतं कृत्वा सूददोहसः करोत्यथ यष्टीरुपदधातीयमेव सा या प्रथमा व्यौच्छदिति पञ्चदश तिस्रस्तिस्रो दिक्षु तिस्रो मध्ये यष्टीभिश्चितिराप्यते[2] तयादेवतं कृत्वा सूददोहसः करोति ॥ ४२ ॥

अथाग्निꣳ सर्वतोमुखं चिनुते ऽथैतानि प्राजापत्यान्यृषभं लोकंपृणा उदीच्याच लोकंपृणया प्रच्छाद्याग्निमुदीचीभिः संप्रच्छादयन्ति संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिकृप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्यानुष्टुभैतां चितिमभिमृश्य द्वाभ्यामवद्रवति याभ्य आसन्नापाद्य इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते वसन्त्येताꣳ रात्रिम् ॥ ४३ ॥ त्रयोदशः ॥

अथाष्टमे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति समानं पुरीषस्योपधानमथ नवमे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरन्ति सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्ते ऽथ याचत्याज्यस्थालीꣳ सस्रुवां विमक्तिमुदपात्रꣳ सर्वं च स्वयमातृण्णानिकीतꣳ सप्त च स्कन्ध्या अवकाश्य या च चान्या

1. चोदीभि॰ some of the MSS
2. युक्तिभि॰ H Ms

उपधास्यन्भवति ता एतस्मादायोत्तरे श्रोण्यन्ते संचादयन्त्येव द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं समुद्र इति द्वाभ्यामुपाधिद्रुत्य चतुर्थे संचिताहुती जुहोत्यग्ने किंशिल तत्त्वा यामीति दक्षिणतो विभक्तिमुपदधात्यग्ने स्तोमं मनामह इति तथादेवतं कृत्वा सूददोहसं करोत्यथैताः सप्त स्कन्ध्याः प्राचीरायातयति द्वे ऋतव्ये स्वराजं च विश्वज्योतिषं चैकाष्टं मयुजं द्वे संयान्यावृतव्ये उपदधाति तपश्च तपस्यश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीति स्वराजं च विश्वज्योतिषं च स्वराड् ज्योतिरधारयत्प्रजापतिस्त्वा सादयत्वित्युत्तराभ्यां मयुजमुपदधाति रय्यै पोषाय सजातानां मध्यमेष्ठ्येयाय मया त्वा मयुजा युजा युनज्मीत्यथ संयान्यावुपदधात्यन्तरिक्षमन्तरिक्षाय त्वेति तथादेवतं कृत्वा सूददोहसः करोति ॥ ४४ ॥

अथाषाढा उपदधात्यग्ने जातान्प्रणुदा नः सपत्नानिति पुरस्तादुपदधाति सहसा जातानिति पश्चाच्चतुश्चत्वारिंश स्तोम इति दक्षिणतः षोडश स्तोम इत्युत्तरतस्तासां पुरीषवतीं मध्य उपदधाति पृथिव्याः पुरीषमस्यप्सो नामेति तथादेवतं कृत्वा सूददोहसः करोत्यथ विराज उपदधात्येवश्छन्दो वरिवश्छन्द इति चत्वारिंशतं दशदश दिक्षु न मध्येऽक्ष्णयोपदधातीति ब्राह्मणं तथादेवतं कृत्वा सूददोहसः करो-

त्वथ सोमभागा उपदधाति रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्येकविंशतिं सप्तसप्त दिक्षु तिस्रो मध्ये। तथादेवतं कृत्वा सूददोहसः करोत्यथ नाकसद उपदधाति राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतय इति पञ्चैकैकां दिक्ष्वेकां मध्ये। तथादेवतं कृत्वा सूददोहसः करोत्यथ पञ्चचोडा उपरिष्टान्नाकसदामुपदधात्ययं पुरो हरिकेशः सूर्यरश्मिरिति पञ्चैकैकां दिक्ष्वेकां मध्ये। तासां पश्चात्प्राचीमुत्तमामुपदधात्यथ यं यजमानो द्वेष्टि तं मनसा ध्यायति। तथादेवतं कृत्वा सूददोहसः करोत्यथ छन्दांस्युपदधात्यग्निर्मूर्धा दिव इत्येतस्यानुवाकस्य तिस्रस्तिस्रो यथाम्नातं। गायत्रीः पुरस्तादुपदधाति त्रिष्टुभो दक्षिणतो जगतीः पश्चादनुष्टुभ उत्तरतो बृहतीर्मध्ये। उष्णिहः पुरस्तादुपदधाति पङ्क्तीर्दक्षिणतोऽक्षरपङ्क्तीः पश्चादतिच्छन्दसमुत्तरतो द्विपदा मध्ये। ऽपि वातिच्छन्दसं मध्ये द्विपदा उत्तरतस्तथादेवतं कृत्वा सूददोहसः करोत्यथ दक्षिणेऽंसे कृत्तिका उपदधात्यम्बा नामासि दुला नामासीति सप्त गुल्फदघ्नास्तथादेवतं कृत्वा सूददोहसः करोत्यथ वृष्टिसनीरुपदधाति पुरोवातसनिरस्यभ्रसनिरसीति पञ्चैकैकां दिक्ष्वेकां मध्ये। ऽनुपरिहारं सादयतीति ब्राह्मणं। तथादेवतं कृत्वा सूददोहसः करोत्यथादित्येष्टका उपदधाति सनिमाय त्वा सर्णीकाय त्वेत्यष्टौ द्वे द्वे दिक्षु न मध्ये। तथादेवतं कृत्वा सूददोहसः करोत्यथ घृतेष्टका उपदधात्यृचे त्वा रुचे त्वेति पञ्चैकैकां दिक्ष्वेकां मध्ये। ऽनुपरिहारं सादयतीति ब्राह्मणं।

तथादेवतं कृत्वा सूददोहसः करोत्यथ यशोदा उपदधाति यशोदां त्वा यशसि सादयामीति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ भूयस्कृत उपदधाति भूयस्कृदसि वरिवस्कृदसीति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथाप्सुषद उपदधात्यप्सुषदसि श्येनसदसीति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ द्रविणोदा उपदधाति पृथिव्यास्त्वा द्रविणे सादयामीति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथायुष्या उपदधाति प्राणं मे पाह्यपानं मे पाहीति सप्तैकैकां दिक्षु तिस्रो मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथर्तुनामान्युपदधाति यावा चयावा इति सप्तैकैकां दिक्षु तिस्रो मध्ये । तथादेवतं कृत्वा सूददोहसः करोति । ॥ ४५ ॥ चतुर्दशः ॥

अथेन्द्रतनूरुपदधात्यग्निना विश्वाषाडिति द्वाविंशतिं पञ्च-पञ्च दिक्षु द्वे मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ यज्ञतनूरुपदधाति प्रजापतिर्मनसान्धो ऽच्छेत इति त्रयस्त्रिंशतमष्टावष्टौ दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ ज्योतिष्मतीरुपदधाति ज्योतिष्मतीं त्वा सादयामीति द्वादश तिस्रस्तिस्रो दिक्षु न मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ भूतेष्टका उपदधाति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति द्वादश तिस्रस्तिस्रो दिक्षु न मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथाव्यानीरुपदधाति शतायुधाय शत-

वीर्यायेति पञ्चैकैकां दिक्ष्वेकां मध्ये। तथादेवतं कृत्वा सूददोहसः करोत्यथ राष्ट्रभृत उपदधात्यग्ने यशस्विन्यशसेमम- र्पयेति चतस्र एकैकां दिक्षु न मध्ये। तथादेवतं कृत्वा सूददोहसः करोत्यथ दक्षिणेऽंसे पौर्णमासीमुपदधाति पूर्णा पश्चादिति। तथादेवतं कृत्वा सूददोहसं करोत्यथ दक्षिण एवांऽसे नक्षत्रेष्टका उपदधाति कृत्तिका नक्षत्रमग्निर्देवतेत्यथैना रोचयत्यग्ने रुच स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वेत्यथैतं नक्षत्रपथं रोहिणीप्रभृत्या विशाखाभ्यामायातयति[1]। दक्षिणादंसाद्दक्षिणां श्रोणिमभ्यायातयत्यथ[2] पुच्छमध्ये चात्ममध्ये चामावास्यामुपदधाति यत्ते देवा अदधुर्भागधेयमित्यथैतं नक्षत्रपथमनूराधाप्रभृत्यापभरणीभ्य आयातयत्युत्तरार्धे श्रोणेरुत्तरमंसमभ्यायातयत्यथोत्तर[3] एवांऽसे पौर्णमासीमुपदधाति पूर्णा पश्चादित्यंसस्पृश उपदधातीति ब्राह्मणं। नक्षत्रेष्टकाभिश्चितिरारभ्यते। तथादेवतं कृत्वा सूददोहसः करोत्यथावद्रुत्य कृष्णमश्वमभिघ्नन्त पुरीषमुपदधाति धृष्टो दिवीति। तथादेवतं कृत्वा सूददोहसं करोत्यथ[4] षष्ठीं चितिं चिनुते संयच्च प्रचेताश्चेति पञ्चैकैकां दिक्ष्वेकां मध्ये। तथादेवतं कृत्वा सूददोहसः करोत्यथाग्निं

---

१ Thus M Tr U; ◦शाखाभ्यां आयात◦ Be B, ◦शाखाभ्यामभ्यायात◦ H.

२ ◦श्रोणीम◦ some of the MSS

३ Thus corrected; all MSS ◦श्रोणेरोत्तरम◦।

४ अथ is of अथ BH

सर्वतोमुखं चिनुते ऽथेरङ्गानि प्राजापत्यामृषभं लोकंपृणाः प्राच्यां च लोकंपृणया प्रचौत्याग्निं प्राचीभिः संप्रच्छादयन्नु-दीचीभिः प्राचीभिस्त्वेन निलिम्पन्ति यावद्ग्नं चेष्यमाणो भवति तावद्ग्नं चिनुते ऽयाग्निष्टुं चितिकृप्ता भवति तदेतावतः स्वयमातृण्णा याचति तां द्विरुपदधाति प्राणाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीद व्यानाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीदापानाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीद वाचे त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ स्वयमातृण्णामपप्रवयाप्याविदुषा ब्राह्मणेन प्रत्याधिद्रुत्योपदधाति सुवरायोरुत्वा यद्वै सादया-सीत्युत्दृत्य सूर्यस्त्वाभिपातु मह्यां स्वस्त्यै छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथान्यानुतौ यामुपधायेत्यपानित्य-थैव ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमा-तृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा घृतेनेत्यग्नुग्राभ्या-मन्वारभ्याम्बारोहं वाचयति दिवमारुहियं सुवर्गमेत्यपरे चित्ये हिरण्येष्टकामुपदधाति सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीति तां जघनेन प्रथमवेलायां मण्डलेष्टका-मुपदधाति द्यौरपराजितामृतेन विष्टेति दक्षिणतो रेतः-सिचमुपदधाति द्यौ रेतःसिक् सा मे रेतो दधातु सा मे

---

१ H Bo Ms ins. चिति।

२ The following words, unto सीदेत्यथ, l. 9, are found thus in U only; all the other MSS. abbreviate

रेतः प्रजनयतीति । तथादेवतं कृत्वा सूददोहसः करोत्यथोत्तरतः प्रक्रमवेलायां विकर्णीमुपदधाति प्रोथदश्वो न यवसे अविष्यन्निति । तथादेवतं कृत्वा सूददोहसं करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणेत्यथ[१] चितिक्लृप्ताभिमृशति चित्तिमचित्तिं चिनवदि विद्वानित्यथैनामग्नेया पङ्क्त्या चितिमभिमृश्य द्वाभ्यामवद्रवति याश्च आमन्माणाद्रा इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यैतावदेवैतदहः कर्म क्रियते । वसत्येताꣳ रात्रीम् । ॥ ४६ ॥ पञ्चदशः ॥

अथैतस्मिन्नेव नवमे ऽह्नि दशमायाह्न उपकल्पयते सहस्रꣳ हिरण्मयस्क्रानूर्ध्वं त्रिभ्यो ऽपरिमितानित्येक आहुस्तं यदि सहस्रं भवन्ति द्वेद्वे शते पञ्चनाडीश्वोते[२] भवतो । ऽथ दशमे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । समानं पुरीषस्योपधानमथ पात्र्यामप आनीय हिरण्मयस्क्रान्संप्रकीर्य द्वाभ्यां द्वाभ्याꣳ शताभ्यां प्रोक्षति सहस्रस्य प्रमा असीति प्राक् स्वयमातृण्णायै भवति सहस्रस्य प्रतिमा असीति दक्षिणा स्वयमातृण्णायै भवति सहस्रस्य विमा असीति प्रत्यक् स्वयमातृण्णायै भवति सहस्रस्योन्मा असीति उदक् स्वयमातृण्णायै भवत्यथ मध्यं द्वाभ्याꣳ शताभ्यां प्रोक्षति साहस्रो ऽसि सहस्राय त्वेत्यथोत्तरे श्रोण्यन्ते तिष्ठविष्टका धेनूः कुरुत इमा मे अग्न

---

१ स्व MTr, स्थ the other MSS.

२ पञ्च° all, °नाडीश्वोते Tr UH M4, °नाडीमेते BeM, °नाडीपोते B, Bhav. पञ्चनाडीषु पञ्चिपञ्चशतानि विधिर्वे[ए] भवत.।

इष्टका धेनवः सन्त्वित्यान्तादनुवाकस्याथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्त्येतावदेवैतदहः कर्म क्रियते। अथास्यैतां रात्रिं मंथैनमिश्रेण दशमे ऽहन्येकादशायाञ्च उपकल्पयते ऽर्कपर्णमश्मचीरं गावीधुकं चरुं तिसृधन्वमश्मानमुदकुम्भं मण्डूकमवकां वेतसशाखां दर्भस्तम्बमाज्यमाग्नीध्रे मधुग्रां दीर्घवंशं द्वादशमित्यथैकादशे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरन्ति। स दीर्घवंशे सुवं प्रबध्योत्तमे संचिताकृतौ गुल्फदघ्ने वस्य तत्वा यामीति। ॥ ४७ ॥

यावदेवाध्वर्युर्वेदेति तावदेव प्रतिप्रस्थातोत्तरस्य पक्षस्य परमयेष्टकया मध्यमपुरीषयोपरमत्यथैतस्यार्कपर्णस्य पुटमन्तरवधायैतं शतरुद्रियं जुहोत्यनुपदघ्ने धारयमाणोऽवरतमयेति। स यत्र धारेष्टकां प्राप्नोति तत्प्रतिपद्यते नमस्ते रुद्र मन्यव इत्याद्यन्तमेतमनुवाकं निगद्य द्वितीयं तृतीयं। चतुर्थस्य यत्राभिजानाति नमः श्वभ्य इति तत्स्वाहाकरोति। सो ऽत एव प्राङावृत्य नाभिदघ्ने धारयन्संग्रहीतृभ्य इति प्रतिपद्यातिशिष्टमनुवाकस्य[1] निगद्य पञ्चमं षष्ठं। सप्तमस्य यत्राभिजानाति नमो वर्ष्याय चेति तत्स्वाहाकरोति। सो ऽत एव दक्षिणावृत्य जानुदघ्ने धारयन्नवर्ष्याय चेति प्रतिपद्यातिशिष्टमनुवाकस्य[1] निगद्याष्टमं नवमं दशममेकादशस्य यत्राभिजानाति य एतावन्तश्च भूयांसश्चेति तत्स्वाहाकरोति। सो ऽत एव प्रत्यङ्ङ-

---

1 Thus M only, अनुवाकं all the other MSS

त्य गुल्फदघ्ने धारयन्नमो रुद्रेभ्यो ये पृथिव्यामित्येतद्यजमानं वाचयति । नाभिदघ्ने धारयन्नमो रुद्रेभ्यो ये ऽन्तरिक्ष इत्येतद्यजमानं वाचयति । ग्रीवदघ्ने[1] धारयन्नमो रुद्रेभ्यो ये दिवीत्येतद्यजमानं वाचयत्यथैतदर्कपर्णं यं द्वेष्टि तस्य संचरे पशूनां न्यस्यति । यद्यु वै न द्वेष्यादवटे न्यस्यत्यथैतं गावीधुकं चरुं चरमायामिष्टकायां निदधाति यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्त्वित्यथैतन्त्रिसृधन्वं याचति । तेनोत्तरे ओघ्यन्ते तिष्ठन्नुपतिष्ठते । अपि वाऽनुपरिक्रामं यत्ते रुद्र पुरो धनुस्तद्वातो अनुवातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि यत्ते रुद्र दक्षिणा धनुर्यत्ते रुद्र पश्चाद्धनुर्यत्ते रुद्रोत्तराद्धनुर्यत्ते रुद्रोपरि धनुरित्यथैनद्याचितं ब्राह्मणाय दद्यादथास्यैष उदकुम्भ उत्तरे ओघ्यन्ते ऽश्मना संसृष्टः[2] शेते । स यो ब्रह्मवाऽऽस्तमायाने-नोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं परिषिञ्चन्पर्येति । स तथा करोति । परिषिच्यमाने यजमानं वाचयत्यश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्यो ऽधि संभृतां तां न इषमूर्जं धत्त मरुतः संरराणा इत्यथैतं कुम्भमश्मना संसृष्टं सादयत्यश्मंस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्म इति । निधाय कुम्भं

१ Thus M Tr BU (sec m.) Ms Keś, ग्रीवा॰ Bo U (pr. m)

२ Thus Bhav (one Ms) and Ms, अश्मा संसृष्टः M, संसृष्ट Tr Bo BU Bhav (another Ms) संसृ॰ H

7

यथेतं त्रिः पुनः प्रतिपर्यैत्यथैतस्मिन्नेव दीर्घवंशे प्रबध्नाति मण्डूकमवकां वेतसशाखां दर्भस्तम्बमिति[1] तेन यत्राक् स्वयमातृण्णायै भवति तद्विकर्षति समुद्रस्य त्वावकया हिमस्य त्वा जरायुणेति ॥ ४८ ॥

द्वाभ्यां पुरस्ताद्द्वाभ्यां दक्षिणतो द्वाभ्यां पश्चाद्द्वाभ्यामुत्तरतो[1] ऽद्भिर्विकर्षतीति ब्राह्मणमथैतयैव कार्ष्णाजिनीद्दपानह एतं[1] च[1] दीर्घवंशमङ्ग् संक्षिप्य पात्राणि संप्रकिरन्त्यथ प्राप्तो ऽग्नि-रित्याज्यस्थालीं स्रुवमादायाधिद्रुत्याज्यस्थाल्याः[2] स्रुवेणोप-घातं सर्पाहुतीर्जुहोति[1] समीची नामासि प्राची दिगिति पश्चादासीनः पूर्वे बिले जुहोत्योजस्विनी नामासि दक्षिणा दिगित्युत्तरत आसीनो दक्षिणे बिले जुहोति[1] प्राची नामासि प्रतीची दिगिति पुरस्तादासीनो ऽपरे बिले जुहो-त्यवस्थावा नामास्युदीची दिगिति दक्षिणत आसीन उत्तरे बिले जुहोत्यथैतेनैव यथेतमेत्य यथैव प्रथममहौषीत्तद्द्वे जुहो-त्यधिपत्नी नामासि वशिनी नामासीत्यथावद्रुत्याग्निं साम-भिरुपस्थापयति[1] गायत्रेण पुरस्तादुपतिष्ठते ऽग्नेर्हृदयेन दक्षिणमुपपक्षं रथंतरेण दक्षिणं पक्षं वारवन्तीयेन दक्षिणां श्रोणिमृतुस्थायज्ञायज्ञियेन[3] पुच्छं श्यैतेनोत्तरां श्रोणिं

१ Thus Tr BU Ms, एतं Be, एतम् MH

२ Thus U (see ni ) only, ०स्थाल्या all the other MSS, also Ma; but Mse ०आज्यस्थाल्याज्यकाशात्।

३ ०यज्ञीयेन Tr H Ms

बृहतोत्तरं पक्षं प्रजापतेर्हृदयेनोत्तरमुपपक्षं वामदेव्येन मध्यमं-याह होतरग्नेरुक्थेनाग्निमनुशꣳसेति । यदि होता न कामयते यजमान एव जघनेन पुच्छं तृणानि सꣳस्तीर्य तेषूपविश्याग्ने-रुक्थेनाग्निमनुशꣳसति पिता मातरिश्वाच्छिद्रा पदा धा अच्छिद्रा उशिजः पदानुतक्षुः सोमो विश्वविन्नेता नेषद्बृहस्पति-रुक्थामदानि शꣳसिषदोमिति सकृद्वा त्रिर्वाचयेनꣳ स्तुतशस्त्रयो-र्दोहं वाचयतीष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य न इष्टस्य वीतस्य द्रविणेह भक्षीयेत्यथापराह्णिकीभ्यां प्रवर्ग्योप-सद्भ्यां प्रचरत्यैतावदेवैतदहः कर्म क्रियते । वसन्त्येताꣳ रात्रिम् । ॥ ४९ ॥ षोडशः ॥

अथैतस्मिन्नेवैकादशे ऽह्नि द्वादशायाह्न उपकल्पयत औदु-म्बरꣳ स्रुवमौदुम्बरं द्रोणमौदुम्बरं प्रसेकमौदुम्बरीं वितष्टिं[1] तस्यां पञ्चगृहीतमाज्यं भवति दध्नः पूर्णामौदुम्बरीं तिस्र औदुम्बरीः समिधस्तिस्रो नानावृक्ष्या नानावृक्ष्यमिश्रं दधि मधुमिश्रं मुमुष्टिमवकाभारं पृश्निमश्मानमाज्यप्रोथं द्वितीयꣳ होतारमप्रतिरथस्यानुवक्तारं विम्नीमोत्पूतस्याज्यस्य द्वौ वा त्रीन्वा कुम्भान्मांसौदनिकान्व्रीहीन्सर्वौषधꣳ[2] रोहितं चर्मानडुहं कृष्णायै श्वेतवत्सायै पयो रथं चषालहोमीयꣳ शाकलान्परिधी-नित्यथ द्वादशे ऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरत्यथोप-निष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनमतं प्रय-

१ Thus Tr U Be B Ms, वितष्टीं MH

२ Thus MU Tr Ms, मध्वोदनि- B Be H

ह्वतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यामधस्तनव्रतं प्रयच्छत्यथादत्ते पञ्चगृहीतमाज्यं दधि मधुमिश्रं पुरुषिसनकामारमित्येत-स्मादायाधिद्रुत्यास्तुया पञ्चगृहीतेन स्वयमातृण्णां[1] व्याघारयति नृषदे षड्प्सुषदे षड्वनसदे षड् बर्हिषदे षट् सुवर्विदे षडित्येतयैव स्रुचोपधातं दध्ना मधुमिश्रेण गन्धर्वाहुतीर्जुहोति । हेतयो नाम स्थ तेषां वः पुरो गृहा इति पश्चादासीनः पूर्वे बिले जुहोति । निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहा इत्युत्तरत आसीनो दक्षिणे बिले जुहोति । वज्रिणो नाम स्थ तेषां वः पश्चाद्गृहा इति पुरस्तादासीनोऽपरे बिले जुहोत्यवस्थावानो नाम स्थ तेषां व उत्तराद्गृहा इति दक्षिणत आसीन उत्तरे बिले जुहोत्यथैतेनैव यथेतमेत्य यथैव प्रथममासीनाज्जुहोत्यधिपतयो नाम स्थ मध्या नाम स्थेत्यथाह प्रतिप्रस्थातरिममग्निं कूर्मेश्यन्तं कुर्विति । तस् ॥ कूर्मेश्यन्तं करोति । नाभौ चितमधिनिदध्यथ पुरुषिमादाय दध्ना मधुमिश्रेणावोक्षति ये देवा देवानां ये देवा देवेष्वधि देवत्वमायन्निति ॥ ५० ॥

द्वाभ्यां पुरस्तात्ताभ्यां दक्षिणतस्ताभ्यां पश्चात्ताभ्यामुत्तरतोऽनुपरिचारमवोक्षतीति[2] ब्राह्मणमथैनमनकामारेण प्रतिष्ठाप्य गोभारस् प्रमादिश्यावद्रुत्यापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयावेदेष्टा-

1 Thus M Tr UH; ॰क्षा the other MSS.

2 पुरषिचारम॰ M, but cp. TS v. 4.5.3

नरमारुतान्निर्वप[1] प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यं मञ्जूषाद्योद्वासनायेति चैतत्पदं कुर्वन्ति गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधात्यथ प्रवर्ग्यस्यावृता प्रवर्ग्यमुद्वास्याधिश्रयति वैश्वानरं द्वादशकपालं मारुतांश्च सप्तकपालानथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये ऽग्नीकरणं जुहोत्यग्निस्तिग्मेन शोचिषेत्यनुद्रुत्य वैश्वानरीयेण सविदाचो अग्ने इति जुहोत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव वैश्वकर्मणानि जुहोति य इमा विश्वा भुवनानि जुह्वदित्यनुद्रुत्य विश्वकर्मा ह्यजनिष्ट देव इति जुहोत्यपरं चतुर्गृहीतं गृहीत्वा चक्षुषः पितेत्यनुद्रुत्य विश्वकर्मन्हविषा वर्धनेनेति जुहोति नानेव सूक्ताभ्यां जुहोति नानेव सूक्तयोर्वीर्यं दधातीति ब्राह्मणमथ तिस्र औदुम्बरीः समिध आदधात्युदेनमुत्तरां नयेन्द्रेमं प्रतरां कृधि यस्य कुर्मो हविर्गृह इत्येताभ्यादधातीधं प्रणयनीयमुपोपयमनीः कल्पयन्ति चात्वालादेव संप्रैषमाहाग्नये प्रणीयमानायानुब्रूह्यग्नीदेकस्फ्ययानुसंधेहि द्वितीयो होताप्रतिरथमन्वब्रवीत्विति प्रतिपद्यत एष द्वितीयो होताप्रतिरथमाशुः शिशान इति दशर्चं भवतीति ब्राह्मणमथैतेनैव सहाग्निमादत्ते पृश्निमश्मानमाज्यमोषं दध्नः पूर्णामौदुम्बरीं तिस्रो नानावृक्ष्या नानावृक्ष्यसमिधः प्राकृतान्परिधीनित्यथैनमुद्यच्छन्त उदु त्वा विश्वे देवा इति षड्भिर्हरन्तीति

1 Thus Tr H Ms, मारुतानि॰ Bc, मारुतेनि॰ MUB

ब्राह्मणं । तासां द्वे परिशिष्टवती भवतो । ऽथ विषुवत्याग्नीध्रस्य काले पृश्निमश्मानं निदधाति विमान एष दिव उत्ता समुद्र इति द्वाभ्यामथ चतसृभिरा पृच्छादेतीन्द्रं विश्वा अवीवृधन्निति । धारयन्त्येतमग्निमथैनं संचितमाज्यप्रोक्षेण प्रोक्षति ॥ ५१ ॥

वसवस्त्वा रुद्रैः पुरस्तात्पान्त्विति पुरस्तात्पितरस्त्वा यम-राजानः पितृभिर्दक्षिणतः पान्त्विति दक्षिणत आदित्यास्त्वा विश्वैर्देवैः पश्चात्पान्त्विति पश्चाद्द्युतानस्त्वा मारुतो मरुद्भिरुत्त-रतः पात्वित्युत्तरतो देवास्त्वेन्द्रज्येष्ठा वरुणराजानो ऽधस्ता-च्चोपरिष्टाच्च पान्त्वित्युपरिष्टादथैतेनैव सहाग्निनाधिद्रवति प्राचीमनु प्रदिशं प्रेहि विद्वान्क्रमध्वमग्निना नाकमुख्यं पृथिव्या अहमुदन्तरिक्षमारुहं स्वर्यन्तो नापेक्षन्ते ऽग्ने प्रेहि प्रथमो देवयतामिति पञ्चभिर्धारयन्त्येतमग्निमथ दध्नः पूर्णामौदुम्बरीं स्वयमातृण्णायां जुहोति । नक्तोषासेति पुरोऽनुवाक्यामनूच्याग्ने सहस्राक्षेति जुहोत्यथ प्रदक्षिणमावृत्यैवं प्रतिष्ठापयति सुपर्णो ऽसि गरुत्मानिति । तिसृभिः सादयतीति ब्राह्मणमथैनं विश्वप्साकृतिपार्श्वं कल्माषराकृतिभिरभिजुहोत्यग्निर्यज्ञं नयतु प्रजानन्नैनं यज्ञहनो विदन्देवेभ्यः प्रभूतावक्षं प्र यज्ञपतिं तिर स्वाहा वायुर्यज्ञं नयतु प्रजानन्सूर्यो यज्ञं नयतु प्रजा-नन्यज्ञो यज्ञं नयतु प्रजानन्नैनं यज्ञहनो विदन्देवेभ्यः प्रभूता-यज्ञं प्र यज्ञपतिं तिर स्वाहेत्यथावद्रुत्याग्निरुत्तरं परिधाद्वं परिस्मृह्य धोयुषिना तिर्यञ्चं रपयं कृत्वा संप्रेषमाह

प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्यथाधिद्रुत्य शाकलान्परिधीन्परिधाय नानावृक्ष्यमिध्ममभ्यज्य स्वाहाकारेणाभ्याधाय तिस्रो नानावृक्ष्याः समिध आदधाति प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीमथ द्वे स्रुवाहुती जुहोति चित्तिं जुहोम्यग्ने तमद्येत्यथ स्रुचि चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णाꣳ स्रुचं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इत्यथ जुह्वन्समया दिशो ध्यायेद्दिग्भ्य एवैनमवरुन्द्धे' दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टात्तेजश्चैवास्मा इन्द्रियं च समीची दधातीति ब्राह्मणमथात्रैव तिष्ठन्याचति वैश्वानरं द्वादशकपालं मारुताꣳश्च सप्तकपालानथोपकीर्य सर्वत्र एव वैश्वानरमवदधदाहाग्नये वैश्वानरायानुब्रूहीति' द्विरभिघारयत्यथाश्राव्याहाग्निं वैश्वानरं यजेति' वषट्कृते मध्ये जुहोत्यथैनꣳ स्रुवाहुतिभिरभिजुहोति सुवर्ण[१] घर्मः स्वाहेति पञ्चभिरथ मारुतैः प्रचरति[२] ॥ ५२ ॥

पर्युपस्तारं दर्विहोमाकारमीदृङ्[३] चान्यादृङ् चेत्यनुद्रुत्य शुक्रज्योतिश्च चित्रज्योतिश्चेति जुहोति' शुक्रज्योतिश्च चित्रज्योतिश्चेत्यनुद्रुत्य ऋतजिच्च सत्यजिच्चेति जुहोत्यृतजिच्च सत्यजिच्चेत्यनुद्रुत्यर्तश्च सत्यश्चेति जुहोत्यृतश्च सत्यश्चेत्यनुद्रुत्य यो

१ Thus U Ms, cp TS v 7 5 b, सुवर्ं the other MSS

२ ॰सैः प्रचरति Tr U B Ms ॰सैश्चरति MH Be Bhav.

३ दार्विहो॰ M

ऽरण्ये ऽनुवाक्यो गणस्तमनुद्रुत्य जुहोति । यो ऽरण्ये ऽनुवाक्यो गणस्तमनुद्रुत्येदृक्षास एतादृक्षास इति जुहोतीदृक्षास एतादृक्षास इत्यनुद्रुत्य मितासश्च संमितासश्च न इति जुहोति । मितासश्च संमितासश्च न इत्यनुद्रुत्येदृङ् चान्यादृङ् चेति जुहोति । तानभितो वैश्वानरं परिचिनोति । गणेन गणमनुद्रुत्य जुहोत्युभे वैश्वानरस्याश्रावयत्युपांशु मारुताञ्जुहोतीति ब्राह्मणम् ॥ ५३ ॥

अथैतं प्रसेकमग्नावायामयति दक्षिणतो वोदञ्चं पश्चाद्वा प्राञ्चं । तस्य स्रुगिव पूर्वार्धो भवत्यंस इव मध्यं । चमस इव बुध्नस्तस्मिंस्तदर उपस्तृणाम आज्यमतः संततमानय वसोर्धारां निगदिष्यामीति । स यत्र धारानिं प्राप्नोति तत्प्रतिपद्यते ऽग्नाविष्णू सजोषसेति सर्वामानं[1] वसोर्धारामथैतं प्रसेकमग्न्यनुप्रहरत्यथैनं सङ्स्रावेणाभिजुहोत्यथ यदाज्यमुच्छिष्यते तस्मिन्ब्रह्मौदनं पचति । तं ब्राह्मणाश्चत्वारः प्राश्नन्ति । तेभ्यश्चतस्रो धेनूर्ददातीति[2] ब्राह्मणं । अथैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाक्तेन मधुदाक्तं भवति । तस्मौदुम्बरेण स्रुवेणोपघातं वाजप्रसवीयं जुहोति वाजस्येमं प्रसवः सुषुवे अग्रे वाजो नः सप्त प्रदिश इति चतुर्दश स्रुवाहुतीरभिषेकाय प्रसेकं परिशिनष्ट्यथैनमपिधाय प्रज्ञातं निदधात्यथ नक्तोषासेति

१ सर्वां॰ M Tr H Ms, सर्वान्॰ U BeB Bhar

२ Thus MU Be B Ms (cp. TS v 7.3.1), ददाति i.e. of ददा दिति H

कृष्णायै श्वेतवत्सायै पयो जुहोत्यथ पञ्चाक्षमतो जुहोत्यृताषाडृतधामेति । भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोत्यथ तिस्रो रुचो जुहोति यास्ते अग्ने सूर्ये रुचो या वो देवाः सूर्ये रुचो रुचं नो धेहि ब्राह्मणेष्वित्यथ पाथ्यामाज्यमानीयाञ्जलिनोपघातं वातनामानि जुहोति समुद्रो ऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा मारुतो ऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहावस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहेति । वातसु हैके जुह्वतो मन्यन्ते[1] । ऽथैताञ्छाकलान्परिधीनग्नावनुप्रहरति । सहैतच्छाकलान्तम् । ॥ ५४ ॥ सप्तदशः ॥

अथ सदोहविर्धाने संमिनोति । सदोहविर्धाने संमित्याग्नीध्रं धिष्णियान्निवपति । तेषूपर्यग्निधिष्णियानुपदधाति नमाग्ने वर्चो विहवेष्वस्त्वित्याग्नीध्रीय एकां च याजुषीं सप्त च लोकंपृणा । अथ होतुर्धिष्णिय एकां चैव याजुषीमेकादश च लोकंपृणा । अथेतरेष्वेकैकां चैव याजुषीं सप्तसप्त च लोकंपृणा । अथ[2] मार्जालीय एकां च याजुषीं पञ्च च लोकंपृणा । अथाग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्याहुता यूपमुच्छ्रयति । स्वरेणैनं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वपाश्रपणी अनुप्रहृत्य[3] वसतीवरीर्गृह्णात्यथ[4]

---

1 Thus M Tr U H Bhav. Keś., मन्यते Be, मन्वते D

2 B ins च, Bo च लोकंपृणा।

3 Here Tr ins सङ्गृह्य चात्वाले मार्जयन्ते च

4 ॰चरो परिग्रह॰ U Be Ms.

पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवाꣳ हवीꣳष्यग्नये गृहपतय इत्येतानि । तानि नानावन्ति[1] । नाना श्रपयन्ति । नानाधान्यानि भवन्ति । प्रैषवान्पशुपुरोडाशो ऽनुब्रूहि यजेतीतरेषाꣳ हविषाꣳ । स यत्र वारुणस्यावद्यन्नाह वरुणाय धर्मपतये ऽनुब्रूहीति तदुपभृति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यथाश्राव्याह वरुणं धर्मपतिं यजेति । वषट्कृते जुहोत्यथ वै भवतीष्टो वरुणो भवत्यनिष्टः स्विष्टकृद्यास्य मह्या हस्तं गृह्णातीति । स[2] यत्रेष्टो वरुणो भवत्यनिष्टः स्विष्टकृद्यास्य मह्या हस्तं गृह्णाति[3] ॥ ५५ ॥

सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनां बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनामित्यैतदेव सर्वं भवति ये देवा देवसुव स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्यथैनं यजमानायतने तिष्ठन्तं प्राहैष वो ऽमी[4] राजेति येषाꣳ श्रेष्ठी भवति । सोमो ऽस्माकं ब्राह्मणानां राजेतीतरे प्रत्याहुरथ भूर्भुवः सुवरिति वाचं विसृजते । ताभ्यां सुखं विसृष्टे प्रति

[1] Thus MU Bo; नानावघ्नति H; नानावधति B; नानाविघ्नन्ति Ma, तानि नाना पृथक् चविघ्नन्ति (sic) Mac.

[2] This clause is omitted in most of the MSS.

[3] मरुतां (as TS 1.8.10 d) Tr only, 1, 8 of मौ ।

त्यचाम राज्यमधायि सर्वं माता वरुणस्याभूवन्निति ' गायत्राविष्णुक्रमान्क्रमते[1] विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्यथ स्विष्टकृता चरन्ति ' न रौद्रस्येडामवद्यत्यपां नेनमभ्यवहरन्ति गम्भिष्ठमिडान्ताः[2] पुरोडाशाः संतिष्ठन्ते ' पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येके ' ऽथ वसतीवरीः परिहृत्य पयांसि विग्रिह्योपवसन्ति ' ॥ ५६ ॥ अष्टादशः ॥

अथातो महाराव एव बुध्यन्ते ' समानं कर्मा सुत्याः सादनात्सादयित्वा स्रुचो ऽग्निं योगेन युनक्त्यग्निं युनज्मीमौ ते पक्षौ चिदसि समुद्रयोनिरिति तिसृभिरथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति ' परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यग्निरदेति[3] ' यः क्रतुमुपैति ' प्रसिद्धो ऽभिषवः ' प्रसिद्धं ग्रहा गृह्यन्ते ' समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्येति ' सर्वन्तं यूपमुत्सृज्यैकादशिनान्पशूनुपाकरोत्याग्नेयं कृष्णग्रीवं सारस्वतीं मेषीं बभ्रुं सौम्यं पौष्णं श्यामं शितिपृष्ठं बार्हस्पत्यं शिल्पं वैश्वदेवमैन्द्रमरुणं मारुतं कल्माषमैन्द्राग्नं संहितमधोरामं सावित्रं वारुणं पेत्वमिति ' तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय '

---

1 Thus Ma Tr B H, गायत्रान्वि° Be

2 Thus Ú (see m) Ms, गंभीर° Tr HU (pr. m.) गंदिष्ठ° Be B, गम्भीरे ह्रदे M, which seems to be a periphrase of वपा गभिष्ठम् Bhav रौद्रं चरुमेषमभु निनयति गम्भीरे ह्रदे।

3 Thus only M, all the other MSS उदेति।

तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । स[1] यत्र क्व च मध्यंदिनो[2] भवति तदेतद्धिरण्मयपात्रं मधोः पूरयित्वा सौर्यां चित्रवत्यावेक्ष्याघ्रायावघ्राय ब्रह्मणे ददाति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्म दाक्षिणेभ्यो । दाक्षिणानि हुत्वा त्रिभिर्मरुत्वतीयैश्चरति । सीदन्ति नाराशंस्या आप्याययिता दक्षिणस्य हविर्धानस्यापालम्बमधो ऽधो माहेन्द्रायाथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्य सर्वौषधेन पुरस्तात्प्रत्यञ्चमभिषिञ्चति । आशीर्षतो ऽभिषिच्य मुखादन्ववस्रावयति ॥ ५७ ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति[3] । मनुन्मृष्टे मनुत्कोऽयमभ्यषेच्यथमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ताग्निषवेनेत्यथ भूर्भुवः सुवरिति वाचं

---

1 om Be H.

2 माध्यंदिनो Tr H.

3 Some of the MSS. (MU Tr) give the formula बृहस्पतेस्त्वा etc. before इन्द्रस्य त्वा etc.; B Be give a text exactly as found TS i. 7.10 h, H abbreviates thus: ॰देस्त्वा साम्राज्येनाभिषिञ्चामिन्द्रस्य त्वा ॰मिति

विसृजते ' ताभ्यां मुखं विमृष्टे ' गायत्र्याग्निष्णुक्रमानाक्रमते '
उत्योपरिष्टादभिषेकस्य षट् पार्थानि जुहोति ॥ ५८ ॥

इन्द्राय स्वाहा घोषाय स्वाहेति ' द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यृतुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते ' प्रसर्पन्ति तृतीयसवनाय ' प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति ' समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरन्ति[१] ' तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यौ दिशौ ' नाना दिश इत्येके ' समानं कर्मा यज्ञायज्ञियस्य[१] स्तोत्राद्यज्ञायज्ञियस्य[२] स्तोत्र एकधाप्रस्तुतं भवत्यग्निमभिमृशति नमस्ते अस्तु मा मा हिꣳसीरित्युद्गातोदधिं भिनत्तीति दाम्याद् ' समानं कर्मा पत्नीसंयाजेभ्यः ' पत्नीः संयाज्य गार्हपत्ये स्रुवामाप्याय्याध्वरिकाणि समिष्टयजूꣳषि हुत्वा दशाग्निकान्युपजुहोति यदाकूतात्समसुस्रोदिति ' स्वर्गं समावभृथादेतेतस्मिन्नवभृथे द्वितीयमवभृथयजुर्जुहोति समुद्राय वयुनाय सिन्धूनां पतये नम इति ' ... ' उदयनीयेष्टेः

मैत्रावरुणीं वशामुपाकरोति । तस्यै मैत्रावरुण्यामिक्षाध्यवदानीया भवति । सर्वपशूनां पशोः कृत्वाथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाप्यस्य पूर्णाꣳ स्रुचमग्नेर्विमोकं जुहोतीमꣳ स्तनमूर्जस्वन्तं धयापामित्यथैनमुपतिष्ठते ये अग्नयः पुरीष्या इत्यथैनमाप्तिभिरुपतिष्ठत आपं त्वाग्ने मनसेति नवभिरनुष्टुप्छन्दसमथोदवसानीयया यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ वैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संवत्सरं न कंचन प्रत्यवरोहति । न शीर्षमाꣳसं खादति न वयसां माꣳसं । नाग्निं चित्वा रामामुपेयान्नाग्निपिदर्पति धावेद्यदि धावेदुपावर्तेतापाथमेवाभ्युपावर्तेत इति ब्राह्मणम् । ॥ ५९ ॥ एकोनविंशः ॥

॥ इति दशमः प्रश्नः ॥

दग्रान्तःपात्रमहौषीदंयात्[1] आग्नीध्र[2] एव होक्ष्यति । यूपमुच्छ्रयिष्यन्नाविधं जुहोति । यदाध्वर्युस्[3] यजमानस्य पुरस्तात्प्रत्यञ्चावञ्चन्तावभिपर्येतो[4] ऽथ प्रतिप्रस्थाता पश्चात्प्राङ् वासोभिर्वेष्टयन्नभिपर्यत्युदीचीमद्गैर्वा विपश्नाति धनुर्वेद्यौर्वा[5] प्रवेष्टयत्येतस्मिन्काले प्रतिप्रस्थाता गोधूमकलापीमुभयतः समा शलोष्णीषेण विपश्नाति । तस्यां तस्येष्टिम्ति यजमाने । सर्वेन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्नाविधं जुहोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्नाविधं जुहोति । पशुपुरोडाशं निर्वप्स्यन्नाविधं जुहोत्यनुसवनं मौति । तानि समद्गोऽपि[6] वा[6] सवनेसवन एव जुहुयादित्येतदपरमेव पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवाहविंष्यग्नये गृहपतय इत्येतानि । तेषामुक्तं चरणं यथाग्नेर्विधायामिडान्ताः

---

१ After °षीत् B Bo U ins इति; Ket cites the clause without इति; it could, however, be right, cp Vol I p. 193, 15

२ आग्नीध्रीय Tr.

३ यदा° Be B; the passage referred to is Vol I, p 113, 5 sqq.

४ Thus Bo (sec m) Bhav., प्रत्यञ्चावञ्चन्तावभि° Tr; °ञ्चावभि° Bo (pr. m.) B; °ञ्चावचमर्पतो UH, °ञ्चावचपर्येतो Bell; °ञ्चाभिपचव M, °ञ्चावच° F; read perhaps °प्रत्यञ्चावञ्चमोपर्येतो ।

५ धनुर्वेद्यौर्वा प्रवे° Tr Bo B; धनुर्वेद्या प्रवे° Bo II HF; धनुर्वेदि प्रवे° U; धनुर्वेद इव प्रविवे° M. The Dvaidhasūtra citing this passage reads धनुर्वेद्यौर्वा प्रवे°; I am not certain about the correct reading and the meaning of these words. Bhav comments धनुर्वेदमवदेशमिति वा ।

६ अपि वा om B Be

दीक्षते । तस्य सप्तदश दीक्षास्तिस्र उपसदः सप्तदश्यां[1] प्रसुतो ऽपि वा सप्तदश दीक्षास्तिस्र उपसद एकविंशत्यां प्रसुतो ऽपि वा तिस्र एव दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः ॥ १ ॥

अथ यै भवति सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति । दीक्षणीयां[2] निर्वप्स्यन्सावित्रं जुहोति देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः स्वाहेति । दीक्षाहुतीर्होष्यन्सावित्रं जुहोति । प्रायणीयां[3] निर्वप्स्यन्सावित्रं जुहोत्यन्तर्हिरण्याद्[4] होष्यन्सावित्रं जुहोति । पदेन चरति । पदेन चरित्वा राजानं क्रीत्वातिथ्यं निर्वप्स्यन्सावित्रं जुहोति । प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्यन्सावित्रं जुहोत्येतस्मिन्काले प्रतिप्रस्थाता दक्षिणे शालाकाण्डे ऽश्वं स्नापयित्वा वाजपेयरथाय संधापयति । महावेद्यां पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं जुहोत्याहवनीयं प्रणेष्यन्सावित्रं जुहोति । रथवाहने सदोहविर्धाने संमेष्यन्सावित्रं जुहोत्यग्नीषोमौ प्रणेष्यन्सावित्रं जुहोतीति

१ Thus M Tr U Be H Bc (sec. m.), सप्तदशी (as Āp xviii 1.6) B Bc (pr. m.), सप्तदश्यां F.

२ Thus M Be (sec. m.) Be H F, °क्षणीयाभि° Tr BH Be (pr. m.), दीक्षणीयायां U

३ Thus Be UF, प्रायणीयाभि° Tr BH Be, प्रायणीय M.

४ Thus U Tr HF Bc H Bhar °हिरण्यङ् M Be

द्याग्नेःशालमध्यौषीदिति[1] आग्नीध्र[2] एव होष्यति । यूपमुच्छ्रयिष्यन्नाविश्वं जुहोति । यदाध्वर्युश्च[3] यजमानश्च पुरस्तात्प्रत्यञ्चावञ्जन्तावभिमर्शतो[4] ऽथ प्रतिप्रस्थाता पश्चात्प्राङ् वासोभिर्वेष्टयन्नभिमर्शत्युदीचीनदशैर्वा विपथ्नाति धनुर्वेष्टीर्वा[5] प्रवेष्टयत्येतस्मिन्काले[5] प्रतिप्रस्थाता गोधूमकल्माषीमुभयतः समां क्षत्वोष्णीषेण विपथ्नाति । तस्यां तच्चेष्टन्ति यवपाले । स्रवन्तं यूपसंस्कृत्याग्नीषोमीयं पशुमुपाकरिष्यन्नाविश्वं जुहोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्नाविश्वं जुहोति । पशुपुरोडाशं निर्वप्स्यन्नाविश्वं जुहोत्यनुसवनं मौषि । तानि यत्रदर्शापि[6] वा[6] सवनेसवन एव जुहुयादित्येतदपरमेव पशुपुरोडाशं निर्वपति । तमनुवर्तन्तेऽष्टौ देवसुवां हवींष्यग्नये गृहपतय इत्येतानि । तेषामुक्तं चरणं यथाग्रेविधायामिडान्ताः

---

१ After अध्यौषीद् B Be U ins इति; Kei cites the clause without इति; it could, however, be right, cp. Vol. I. p 193, 15

२ आग्नीध्रीय Tr.

३ यथा॰ Bo B; the passage referred to is Vol I, p 113, 5 sqq.

४ Thus Be (sec. m) Bhav ; प्रत्यञ्चावाञ्जन्तावभि॰ Tr; ॰वंजतावभिम॰ Be (pr. m) B; ॰वजमानावबर्षतो UH, ॰वांजमानावधर्षतो BeH, ॰वकषो॰ ॰वव M, ॰वाजमवत्रवह॰ F; read perhaps ॰प्रत्यञ्चावङ्क्षोपमर्शतो ।

५ धनुर्वेष्टीर्वा प्रवे॰ Tr Bo B, धनुर्वेष्टिंवा प्र॰ Be H HF; धनुर्वेष्टिर्व प्रवे॰ U; धनुर्वेष्ट इव प्रविशे॰ M. The Dvaidhasūtra citing this passage reads धनुर्वेष्टीर्वा प्रवे॰; I am not certain about the correct reading and the meaning of these words. Bhav. comments धनुर्वेष्टनवद्वेष्टयति वा ।

६ अपि वा om. B Be

पुरोडाशाः संतिष्ठन्ते । पत्नीसंयाजान्ताः पशुरैन्द्रः पशुकान्त इत्येके । ऽथैतान्दुन्दुभीनुद्दिशमाघ्नन्ति यथ दक्षिणायाः श्रोण्यां पश्चोत्तरस्यां चतुरो दक्षिणे ऽंसे त्रीनुत्तरे ऽंसे । तथा चाग्नि दिग्भ्यो वाचमवरुन्धत इति ह स्माह बौधायनो । ऽथै- णामेभिं गुल्मशता आमकाः स्युरित्याश्वीगविरंभितः सद इति कात्यो । ऽथ वधनीवरीः परिहृत्य पयाङ्गुसि विशिथ्योप- वसन्ति । ॥ २ ॥ प्रथमः ॥

अथातो महाव्रत एव युञ्जते । प्रातराज्यानि गृहीत्वा राज्ञामुपावसृज्य प्रातरनुवाकमुपाकरोति । परिहिते प्रात- रनुवाके ऽपो ऽच्छेत्यपो ह्वाध्वर्युरभिद्रवत्येतस्मिन्काले[1] प्रति- प्रस्थाता वाजपेयग्रहान्संपवय्य[2] मन्थानामादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्यावृत्यापरया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसादयत्यथाध्वर्युरद्भिरुदैति[3] । सर्वाग्रहानु- पैति । मथितो ऽभिषवः । प्रमितं यथा गृह्णन्ते । समानं कर्माग्रयणाद्ग्रहादाग्रयणं[4] गृहीत्वा पञ्चैन्द्रानतिग्राह्यान्ग्रहानुप- यामगृहीतो ऽसि नृषदं त्वा द्रुषदमित्येताभिः पञ्चभिर्यथैना-

---

१ ह before अध्वर्यु॰ only in Tr Be H; वाध्वर्यु॰ M and ऽभिद्रवति Bc H Tr, ऽभिद्रवति H

२ Thus Tr U Bo Be H (pr. m); संपवय्य F, संपवयति M; संप- वयंति Bc H (sec m), संपवयत H

३ Thus M, ऽदैति all the other MSS.

४ Some of the MSS insert ग्रहं।

न्दक्षिणार्धपूर्वार्धे खरस्य गुल्फदघ्नतान्सादयति । यावदेवाचाध्वर्यु-र्येष्टति तावदेव प्रतिप्रस्थाता अत उदीचीनदशेन वालेन सुरां पुनाति पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तनेति । वायव्यमेवाध्वर्युरादत्त उपयामं प्रति-प्रस्थाताध्वर्युः पूर्वो वायव्येन द्रोणकलशात्सोमग्रहान्गृह्णात्यया विष्ठा जनयन्कर्वराणीत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः प्रजा-पतये त्वेत्यथ प्रतिप्रस्थातोपयामेन शतात्सुराग्रहान्गृह्णाति कुविदङ्ग यवमन्तो यवमित्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये[1] त्वेति गृह्णाति । प्रजापतये त्वेति सादयति । नेद[1] जुष्टं करोति न[1] योनिं । तावेवमेव व्यतिषङ्गं ग्रहान्गृह्णीतः सम्प्रद्यतरः सम्प्रद्यतरः । पुरो ऽयमेवाध्वर्युः सोमग्रहान्हिरण्येषि[3] वा पिशेषि[3] वोदीच आयातयति । पश्चादयं प्रतिप्रस्थाता सुरा-ग्रहान्हिरण्येषि[3] वा पिशेषि[3] वोदीच आयातयत्यथ षोडशिनं गृह्णात्यासिष्ठ रथमयमित्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनि-रिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । समानं कर्मा-

---

१...१ Thus according to B B. Tr., MFH only. प्रजापतये त्वेति सादयति नेद ; Bo H U प्रजापतये त्वा गृह्णामीति इमां परिमृज्य प्रजापतये त्वेति सादयति नेद ।

२ नेद Bo H U.

३ हिर॰ and पिश॰ HU

क्रम्य स्वधामिः पशून्त्समनक्ति । न[1] एते[1] नानादेवत्याः पशवो नानास्वरवो नानाशाखा अथैते समानदेवत्याः पशवः समानस्वरवो नानाशाखाः[2] । समानं कर्म पर्यग्निकरणादथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते । तेषाङ् शास्त्युत्तरार्ध्यो भवत्याग्नेय उपचारत[3] । आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते । पृथगितराण्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्त[4] । आग्नेयायैवाध्वर्युः पशवे निह्नूयमानाय बर्हिरुपास्यति पृथगितरेभ्यस्तत इतराञ्प्राचो वोदीचो वा निघ्नन्त्यक्लमो नायूञ्सञ्ज्ञपयतेत्युक्तेनैव यथेतमेत्य पृथद्राज्यावकाश आसत इह प्रजा[5] विश्वरूपा रमन्तामग्निन्यञ्चे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माङ् अवन्तु पयसा घृतेनेति । संज्ञप्तान्याहुर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायुमकृषतेत्ययाश्रेति[6] शमितार उपेतनेति । पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति । पृथग्विषाणाभिरुपक्रमेमां दिशं निरस्यत्यरातीयन्तमधरं करोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमिति । ॥ ४ ॥

---

1 Thus M Tr Bo H HF, नदेते B Be U (sec. m)

2 समानशाखाः M

3 उपचरेत M Tr U

4 Thus M Be H UHF, °नुपूर्वं° Be B Tr

5 Thus (cp Vol I, p 118, 1) Be H F; पशवो M Tr Be UH Ked.; Āp. (vii 17, 1) has also पशवो but the fem. घृताचीः (घृताच Tr F) points to प्रजाः, cp also Maitr S iv 2 10

6 Thus all exc H (: °श्नेति)

श्विनाद्दक्षिणार्धाच्चित्रं पशुं गृहीत्वा यद्गमना आदाय यूपमभ्येति[1] । स्वर्वन्तं यूपमुत्सृज्याथैतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं सारस्वतीं गोषमाग्नं सप्तदश प्राजापत्यांश्चामानेकरूपान्सारस्वतीमन्ततो । इष निसंग्यन्त्यपाच्या निमंध्येन चरन्ति । सदन्याभिङ्ग्याथैता-नामादैवत्यान्पशून्पृथग्दिग्गुणाभिरभिधाय पृथक् नियुनक्ति नियुनक्त्यथैतानसमानदैवत्यान्पशून्पृथग्दिग्गुणाभिरभिधायैकस्यां यूपायां नियुनक्त्यपि वा पशौ पशुं प्रभजति[2] । सारस्वती-मन्ततो नियुज्याथैनानभ्योक्ष्य निपाय्योपोष्योदूष्य प्रोक्षणी-धानम् ॥ ३ ॥

अथैतास्समिधमादाय आहाग्नये समिध्यमानायानुब्रू-ह्यथ्यादधातीध्मं । परि समिधः शिनष्टि । वेदेनोपवाजय-त्यनूच्यमानासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे स्रुग्भ्यामुत्तरमाघारमाघार्य ध्रुवायामुद्धृत्याक्रम्य जुह्वा पशुं समज्य मादयित्वा स्रुचौ प्रवरं प्रवृणीते । समिद्धस्तनिश्रो वृणीते । सीदन्ति होता । मन्नमाकाङ्क्षति । प्रसूतः स्रुचावादायात्या-क्रम्याश्राव्याह समिधः प्रेष्येति । वषट्कृते जुहोति प्रेष्य प्रेष्येति चतुर्थाष्टमयोः समानयमानो ऽष्टमे सर्वं समानयते । परि स्वाहाकृतीभ्यः सर्वावट् शिनष्टि । दश प्रयाजानिष्ट्वोद्धृत्या-

---

[1] Om. M Tr Be U.

[2] Thus M Tr B Be Kcs, चाथेति BeII UPH

[3] Thus BeII F, प्रभजति Tr, प्रतिसृजति U, प्रभजति H; प्रसेजयति M, नियुनक्ति Be.

ग्रन्थ स्वरुग्रासैः पशून्समनक्ति । त[1] एते[1] नानादेवत्याः पशवो नानास्वरवो नानाग्रासा अथैते समानदेवत्याः पशवः समानस्वरवो नानाग्रासाः[2] । समानं कर्मा पर्यग्निकरणादथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते । तेषाꣳ सारस्वत्युत्तरार्ध्या भवत्याग्नेय उपचारतः[3] । आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते । पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्त[4] । आग्नेयायैवाध्वर्युः पशवे निहन्यमानाय बर्हिरुपास्यति पृथगितरेभ्यस्तान् इतरान्प्राचो वोदीचो वा निपन्नान्संज्ञपयतो मायून्संज्ञपयतेत्युक्त्वैतेनैव यथेतमेत्य पृथगाज्यावकाश आघत इह प्रजा[5] विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं गोपायमभिसंवसाना अस्माꣳ अवन्तु पयसा घृतेनेति । संज्ञप्तान्प्राहुर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायुमकृषतेत्यथाप्यैति[6] शमितार उपेतनेति । पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति । पृथगश्रिमाखाभिरपसृज्यैता द्विषं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानिति । ॥ ४ ॥

१ Thus M Tr Be 11 HF, अथैते B Be U (sec m)

२ समानाग्रासा॰ M

३ उपचरत M Tr U

४ Thus M Bo 11 UHF, ॰नुपूर्वम॰ Be B Tr

५ Thus (cp. Vol I, p 118, 1) B₁ 11 F, प्रजावो M Tr Be UH Keś, Āp (vii 17 1) has also प्रजावो but the fem. घृताचीः (घृताच Tr F) points to प्रजाः, cp also Maitr S iv 2 10

६ Thus all exc B (: ॰थ्यैति).

अथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्य आनुपूर्व्यं[1] पशूनां प्राणानाप्याययत्यथाध्वर्युर्नेष्टा उत्खिदन्नेत्या- ग्नेयस्यैवाध्वर्युर्वपया[2] प्रथमया प्रतिपद्यते ऽनूचीरितरा आहर- न्त्याग्नेयस्यैव वपायै प्रतितप्यमानायै बर्हिषो ऽग्रमुपास्यत्युपेतरा अध्वर्युराग्नेयस्यैव वपाꣳ स्रुवाहुत्याभिजुहोत्युपेतरा अध्वर्युरथ स्वाहाकृतिप्रैषेण चरित्वा मेदःस्रावेण पृषदाज्यमभिघार्याग्नेयस्यैव वपामभिघारयत्युपेतरा अध्वर्युरथ पुरस्तात्स्वाहाकृतिꣳ स्रुवा- हुतिꣳ हुत्वाथैतेषां नानादेवत्यानां पशूनामनुब्रूहि प्रेष्येति वपाभिश्चरत्यथैतेषाꣳ[3] समानदेवत्यानां पशूनां मुख्यस्य वपाꣳ प्रभवत्युपस्तीर्याह प्रजापतय इत्युपांश्वेव छागानां वपानां मेदसो[4] ऽवदीयमानस्यानुब्रूहीत्युक्त्वेयावतीः[5] स्रुक्संभवन्त्यथेतराः[6] याभ्या मेदःस्रुतेन वौषडित्यध्वर्यू द्विरभिघारयत्यथाकाम्याश्राव्याह प्रजा-

---

१ Thus Tr B Be F, आनुपूर्वं U Be II H, यथायथानुपूर्व्यं M.

२ Thus (उत्खिदन्नेति) Tr; उत्खिदन्नेति M Be; उत्खिदन्नेति B, उत्खि- दन्ति or उत्खदन्ति the other MSS., Bhav उदस्यन्नेति।

३ चरित्वाथै॰ Tr Be B.

४ मेदसोऽवदीयमानस्य Tr Be (pr m) BF, ॰वदीयमानानाम॰ Be II U; H is partly corr but reads ऽवदीयमानस्य; M pr m. gen sing., sec. m. (not wholly certain) gen. plur. of the part., मेदसोऽवदीयमानानाम॰ Be II U Keś, वपानां मेदसामवदीयमानानाम॰ Be (sec. m.).

५ यावतीः (sc. वपाः?) M Be II U; यावत् Be B; यावति Tr.

६ Thus only Tr, cp xv 31 स्रुक्संभवन्ति U H, स्रुक्संभवन्ति F; स्रुवसंस्रावमवन्ति H, स्रुक्संभवन्ति M; स्रुक्स्त्रावयन्ति Be II Be

पतय इत्युपांशु छागानां वपा¹ मेदः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते वपा² जुहोत्युपांशु सारस्वत्यै वपया ³चरत्यथोपरिष्टात्स्वाहाकृतिं स्रुवाहुतिं हुत्वा वपाश्रपणीरनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते ऽथ पशून्विशास्ति⁴ शमितरित्याह यथाकृत्या पन्नवदानीयं तदभ्यर्थाच्छ्रपयतादित्यथ⁵ सावित्रं हुत्वा प्रसर्पन्ति प्रातःसवनाय तदृजुधा संतिष्ठते ॥ ५ ॥ द्वितीयः ॥

अथ सावित्रं हुत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारा वित्यत एवोर्ध्वेन संप्रसृप्तान्विदित्वाध्वर्युः प्राङनयसाव चात्वाले रथचक्रं निमिनुत रथवाहने रथमाधत्ताश्वान्पल्पूलयत यद्वाश्मसि⁶ तद्दिषात उपस्थापयाभिषोतार⁷ एत क्रयत ग्रावस्तुतमेहि यजमानेति प्रविष्टो ऽभिषवः प्रविष्टं यथा गृह्यन्ते समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा षोडशिन-

---

१ वपा Be 11 HF, वपानां M Tr Be B.

२ वपा om. all exc. Be B

३ प्रचरत्य° B Be H

४ विशास्तीति Be U (sec. m.), विशाधिति B, विशाधि the other MSS. (also U pr. m.)

५ Thus Be 11 (sec. m.), तदर्थाच्छ्° M, तदस्यर्थाच्छ्° T₁, तदध्यर्धाच्छ्° Be 11 (pr. m.), तदध्यर्ध(?)च° H, the other MSS. corr., Bhav. seems to have read वध्यर्धात्, the meaning is हस्तात्।

६ Thus U Be 11 H; ददाश्मसि F, वेददाश्मो B, यद्दाश्मो Be, यद्दाश्म (broken off) मिमीदशिप° M, यद्दाश्मो Tr, after वसि H ins. वेदेर्, Be H साज्जालीये, T₁ साज्जालीयं, these MSS om. तद् ।

७ Thus Be 11 UHF, °स्थापयताभि° M Tr B Be.

नभिमृशतीन्द्रमिद्धरी वहत इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयन्नेष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । समानं कर्म दाक्षिणेभ्यो । दाक्षिणानि होष्यन्नाधावत्याध्वर्यग्नीँ सम्रुवाड् स्रुवं वाससंवेष्टितस्य वसनस्यान्तमायां दशायां निबद्धरज्जुः समर्पिता[1] भवत्येतस्मादादायाहेहि[2] यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण[3] सदः परीत्याग्रेण शालां तिष्ठते[4] प्रतिप्रस्थाता एतानि शस्तानि समाहृत्याहेहि यजमानेति । रथ एव दक्षिणे श्रोण्यां रथवाहन आहितो भवति । तमुपावहरन्तीन्द्रस्य[5] वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादितीमं धूर्षदीतमन्तर्वेद्यध्यवतंसयन्ति[6] वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषदित्यथाश्वानप्सू- नयत्यप्स्वन्तरमृतमप्सु[7] भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिन इत्यथ दक्षिणं योग्यं युनक्ति वायुर्वा त्वा मनुर्वा त्वा

---

१ Thus Be H UF, Bhar., Keś; °षितो the other MSS.

२ भवतीत्येव° M Tr

३ पर्याहृत्य i. e. c. परीत्य Be B.

४ तिष्ठन् M; तिष्ठति F, तिष्ठते the other MSS

५ Thus Tr Be H Be BU (sec. m.); pluralis verbi the other MSS.; अवहारयति Bhar. Keś

६ Thus M Tr U (pr. m.); अध्यावर्तयति Be BTU (sec. m.). अवर्तयति H, प्रवेशयति Keś, cf. infra xii 7 (p. 95, l. 10).

७ The first अप्सु om. MH

गन्धर्वाः सप्तविंशतिः । ते अग्रे अश्वमयुञ्जन्ते अस्मिञ्जवमादधुरित्ययास्य पृष्ठं समृज्यते ऽपां नपादाशुहेमन्य ऊर्मिः ककुद्मान्प्रतूर्तिर्वाजसातमस्तेनायं वाजꣳ सेदित्येवमेवोत्तरं योग्यं युनक्ति । तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति । तयोरेवमेव पृष्ठे[1] समृज्यत । एतस्य योगमनु सर्वमापिवयुज्यते । ऽधिकक्ष्यान्हस्तिनः कुर्वन्ति । संवेष्टयन्ति वासोभारान्वसनानां दशास्तु निष्करज्जूः सयथ्नन्ति । पूगशो दक्षिणा आयातयत्यथ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति । नयवत्यर्चाग्नीध्रे जुहोति[2] । सृज्यन्ते[2] दक्षिणा दक्षिणापथेन । स यत्किंचिद्ददाति[3] हिरण्यमुखमेव ददात्यथ वासाꣳस्यथ[4] युक्तानि गोऽश्वꣳ हस्तिपुरुषमन्ततो[5] । ऽदत्ता एवैते रथा अतिवर्तन्ते । नैते ऽन्यस्य सन्त आजिं धावन्ति । सनमेव स्वरथमध्वर्यवे ददाति मनसा समनुदिश्य[6] दक्षिणास्त्रिभिर्मरुत्वतीयैश्चरति । सौदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[7] माहेन्द्राय । ॥ ६ ॥

१ पृष्ठे M Tr Be U, पृष्ठं BFH

२ Thus M Tr Be H HF, जुहोत्युत्सृज्यन्ते Be B, जुहोति सृजन्ति U

३ यत्किंचद्द॰ Tr

४ Thus Tr HF, Be B वासाꣳसि i s of वास, M (injured) वासांसि ...सि ददाति अथ युक्ता अन्तो ।

५ Before पुरुष॰ Tr F ins दास॰, H दासी; Bhav. हस्तिपुरुषम्, cf infra xii 7

६ समनुदिश्य UH Be H, समुद्दिश्य M Tr Be B, समुद्दिश्य F

७ Thus, with ऽप, all, also K.. but B ... m ॰पालम्ब॰ ।

अथ यावति नैवारश्चरुः श्रपयितवै स एव श्रीरे श्रृतो भवति । तेन चरन्ति[1] बृहस्पतये ऽनुब्रूहि बृहस्पतिं यजेति । तमनिष्टस्विष्टकृतमपिधाय प्रज्ञातं निदधात्यथैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन मधुदायुतं भवति । तस्मौदुम्बरेण स्रुवेणोपघातं सप्तान्नहोमाञ्जुहोति वाजस्येमं प्रसवः सुषुवे ऽग्र इत्यथाभिषेकाय प्रसेकं परिश्रित्यैनमपिधाय प्रज्ञातं निदधात्यथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्य सर्वौषधेन पुरस्तात्प्रत्यञ्चमभिषिञ्चति । शीर्षतो ऽभिषिञ्चन्मुखादन्ववस्रावयति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा[2] साम्राज्येनाभिषिञ्चामि[2] बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति । सम्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता वाजपेयेनेत्यथ भूर्भुवः सुवरिति वाचं विसृजते । दाभ्यां मुखं विमृष्टे । गाथवाग्विष्णुक्रमानक्रमते[3] । ऽथोपरिष्टादभिषेकस्य षट् पार्थानि जुहोती-

---

१ अचरन्ति Be B

२ Tr Be B U (sec. m.) om., M places बृहस्पतेस्त्वा etc before इन्द्रस्य त्वा ।

३ Thus Tr U Be H H F, मायमादि॰ M Be B

न्द्राय स्वाहा घोषाय स्वाहेति । हुत्वा श्लोकायांशवेऽग्नौ जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यथैतस्य बार्हस्पत्यस्य शिष्टेन चरत्यथैनमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत[1] एते[2] रथा युक्तास्तिष्ठन्ति[3] । तदेतानश्वयुजो ऽश्वानवघ्रापयति वाजिनो वाजजितो वाजं सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रतेत्यथैनमपिधाय प्रज्ञातं निदधात्यथ रथमभिप्रैति विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्यथ रथस्य पक्षसी संमृशत्यक्षौ न्यक्षावभितो रथं याविति[4] । रथमातिष्ठति देवस्याहं सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्यथैतदग्न्युत्काले चात्वाले रथचक्रं निमितं भवत्या-रोहति । समत[5] एतामनुमन्त्रयते देवस्याहं सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकं रुहेयमित्यथ यजमानमन्वारब्धायोज्जितीर्वाचयत्यग्निरेकाक्षरेण वाचमुदजयदिति सप्तदशायामा स्याजनो[6] मध्यन्दिनमपाजनि वाजिनि वाजिषु वाजिनीवत्यश्वानमनु वाजयेति । तदा यथायुक्तमथाश्विप-

---

1 °त्तरतो° M U De H Bo Bo (pr. m.), °त्तरतो° Tr Bo (sec. m.) Bhav, Kei

2 रथे Tr De H U

3 युक्ता om. De H.

4 Tr De B ins. अथ ।

5 समत i.e. सम M.

6 Thus De H U P, Kei, Bhav (see copy); स्याजनि Tr, स्याजने M, स्याजिनि Bo, स्याजनि B, स्याजनि H

त्यर्वासीति दक्षिणं अग्निरसीति मध्यमं वाय्व्यसीत्युत्तरमथै-तानाजिसृतो[1] ऽभ्याख्यापयति[2] वाजिनो वाजं धावत मरुतां प्रसवे जयत वि योजना मिमीध्वमध्वनः स्कभ्नीत काष्ठां गच्छते-त्यौदुम्बर्या स्थूणा सप्तदशसु प्रव्याधप्रव्याधेषु निमिता । तां काष्ठे-त्याचक्षते । तामाजिसृतो ऽभीत्य[3] मा[3] गच्छत[3] मो[4] एनाम-प्राप्य[4] निवृत्तान्तःपशमनेनां[5] कृत्वा सव्यानकृत्य दक्षिणैरनु-परिवर्तयाश्वैः[6] मो[6] अप्रसूताः[6] सर्पतेति[6] । ॥ ७ ॥ तृतीयः ॥

अथाहाभिमर्षे यजमान माहेन्द्रं ग्रहं ग्रहीष्यामीत्यन्वारब्धे यजमाने माहेन्द्रं ग्रहं गृह्णाति महाꣳ इन्द्रो य ओजसेत्यनु-द्रुत्योपयामगृहीतो ऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेति । तदेतान्पञ्चै-न्द्रानतिग्राह्यान्सह संसादयत्यथाप[7] उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा श्लोकमुपाकरोति । स्रुवते

---

१ °नदैनाम° Be B Keś, °नदैवान° the other MSS

२ Thus M Tr Bo B F H Keś, °विध्याप° Bo II U and Comm on Taitt. S Vol I, p. 1024.

३ These three words only in Be B and Bhav, the other MSS and Keś omit them

४ Thus Tr Be B Keś, °मैनाम° the other MSS

५ Thus Be B, निवृत्तांतान° Tr, निवृत्तान° M Bo II U; निवृत्तान्तः° H, निवर्त्यान्तंनान° F

६ Thus Be B, °याश्वैर्मो FH; °यर्ध्वप्रसूतास्सर्पतेति Tr.; °याश्वैमाप्रसूता सर्पतेति M, °याश्वैमा प्रसूताः सर्पतेति Keś

७ °सादयत्य° MH Keś

माहेन्द्राय[1] । प्रस्तुते साम्नि संप्रैषमाह ब्रह्मन्वाजिनाꣳ साम गायाजिसृत आजिं धावत दुन्दुभीन्समाघ्नताभिषोतारो[2] ऽभिषुणुताग्नीदाग्निरं विनयोलूखलमुदाहर प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । गायति ब्रह्मा वाजिनाꣳ साम । तं य एव कश्च[3] परिकर्म्यावेष्टयति । धावन्त्याजिसृत । आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाचः । संप्रोदिता[4] वाचो ऽनुमन्त्रयत इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदित्यथ रथान्धावतो ऽनुमन्त्रयते वाजेवाजे ऽवत वाजिनो न इति चतसृभिरनुच्छन्दसं । शाम्यन्ति घोषाः शान्ताय । होत एषोत्तमेति प्राङ्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येममाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिष्टौति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योपच्छत एतं माहेन्द्रं ग्रहमनूपच्छन्त इतरानुपोपच्छन्ते नाराशꣳसानंपाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा[5] यज सोम-

---

1 माहे॰ M Tr U Be B Be 11, महे॰ HF

2 Thus (समाघ्नत, cp Pitṛmedhasūtra, p 37. 14) Tr U Be B Be 11 ; समाधत MHF

3 Thus M Tr U Be B, कथन Be11 H, कसन F.

4 संप्रवदिता, संवदिता, संप्रवदंता or संप्रवदन्तो the MSS. ; this last reading, presented by M, could also be defended, if we take the part as an acc pl. masc, but cp Bhār आ संप्रवदन्तो and infra xii 13, where the correct reading is given by M

5 Be B ins इति after श्रौषट् ।

स्त्वेति । वषट्कृते जुहोति । तदेतान्पञ्चैन्द्रानतिग्राह्यान्गृह्ण[1] जुह्वति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्ति । द्विरुक्तो माहेन्द्रः परिशेते । आयन्ति रथा । आगतान्रथान्दृष्ट्वा याचत्याज्यस्थालीꣳ सस्रुवाꣳ । स यदस्मै रथस्नेयमासवत आग्नीध्र[2] एतां जुहोत्युत आस द्रवत- स्त्वरयत इत्युभयेनैव रथविमोचनीयं जुहोत्या मा वाजस्य प्रसवो जगम्यादिति । ॥ ८ ॥

अथ याचति नैवारꣳ सप्तदशशरावꣳ सप्तदश सुवर्णानि[3] कृष्णलानि हिरण्मयपात्रं मधोः पूर्णमित्येतत्समादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्करत[4] एते रथा युक्तास्तिष्ठन्ति । तदेतान्यजुर्युजो ऽश्वानवघ्रापयति वाजिनो वाजजितो वाजꣳ ससृवाꣳसो वाजं जिगिवाꣳसो बृहस्पतेर्भागे निमृड्ढ्वमित्येनमपिधाय प्रज्ञातं निदधात्यथ रथान्विमुच्यमानाननुमन्त्रयत इयं वः सा सत्या संधाभूद्यामिन्द्रेण समधद्ध्वमिति । दुन्दुभीनवसृतो ऽनुमन्त्रयते ऽजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति । तदेतं यजुर्युजꣳ रथं विमुञ्चति यथादत्तमितरान्व्यावर्तयन्त्युपसंगच्छन्त एनमेत आजिसृतस्तेभ्य एकैकं कृष्णलं व्युत्प्रयच्छति । तानि सार्धꣳ समादाय हिरण्मयपात्रं मधोः पूर्णमित्येकधा ब्रह्मण उपहरति । ॥ ९ ॥

१ तदेतान् om. Bo B, तदेतत् M.

२ आग्नीध्रीय Bo B

३ सौवर्णानि U.

४ °कामत्यु° Tr HF, °कार्मत्यु° MU Bo B Bc H.

तद्ब्रह्मा प्रतिप्रस्थातोपावरोहत्यथाहाजिसृतो दक्षिणापथेनो-पेतोत्य दक्षिणाꣳ श्रोणिमभिनिश्रयध्व[1] मारुता अग्रेणाहव-नीयं परीत्य दक्षिणमꣳसमुपसꣳश्रयध्वमिति[2] । तदेनान्वि-मिताभ्यामभिविष्ठन्त्यथाहैहि[3] यजमानेति । पूर्वया द्वारा हवि-र्धानं प्रपाद्य यजमानꣳ सोमग्रहानुपस्थापयति ॥ १० ॥

संपृच स्थ सं मा भद्रेण पृङ्क्तेति । विपृच स्थ वि मा पाप्मना पृङ्क्तेति सुराग्रहानथैताꣳ सुराꣳ समरेकामादाये-ताꣳश्च सुराग्रहानाजिसृद्भ्य उपहरन्ति । तां ते पिबन्तो रम-माणा महीयमाना आसते । ऽथ यस्मात्तया अनवदानीयं तदुभयानन्तरेण[4] पर्णमात्रास्तु न्यस्यति । तत्समुत्कुम्य[5] विमाथी-कुर्वते[6] । ऽथ याचत्याज्यस्थालीꣳ सस्रुवां तार्प्यं दर्भमयमित्येत-त्समादायाऽऽहैहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्याहवनीये जुहोत्यन्वारब्धे यजमाने वाजस्य प्रसवयेति द्वादश स्रुवाहुती-रथ यजमानं तार्प्यं परिधापयति क्षत्रस्योल्बमसीति । क्षत्रस्य

---

१ °भिनिःश्र° Bo (sec. m) only

२ Thus M Tr H' Keś., उपश्रय° Bell U, °अभिनिश्रय° B Be

३ तदेनान् i.s.b. तदेनाम् M Tr U Bell H F, अथैनान् Bo B; अभि-विश्रित्य° Bo (sec m) Tr Bhav, अभिनिश्रित्य° MU Bell F, निश्रित्य° H, अभिविस्रस्य° H Be (pr m.)

४ तदुभयोरन्तरेण M

५ Thus Be B, समुत्कृष्य M U Bell H, समुत्कृष्य F, समत्कुशोभैः क्रोशन्त Keś

६ cp. Āp xiii 7 6, विमाथ कुर्वते (as TBr. I 3 6 4) M.

योनिरसीति दर्भमयं पत्नीमध्यधात् श्रितिं[1] यजमान आयतनात् प्राचीं वोदीचीं वा यूपमभ्यायातयत्यथ जायामामन्त्रयते जाय एहि सुवो रोहावेति रोहाव हि सुवरितीतरा प्रत्याहाहं नावुभयोः सुवो रोक्ष्यामीति यजमानस्त्वं नावुभयोः सुवो रोहेति पत्नी तां दशभिः कॢप्तै रोहत्यायुर्यज्ञेन[2] कल्पतामित्यन्तं गत्वा बाहू उद्गृह्णाति सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूमेत्यथेमं लोकं प्रत्यवेक्षते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोष इत्यथैनामुपावरोहति स यावति मन्येत एतावति मोदास्यन्तीति[3] तदेनमामपुटैर्घ्नन्ति[4] ॥ ११ ॥

अन्नाय त्वेति पुरस्तादध्वर्युरन्नाद्याय त्वेति दक्षिणतो ब्रह्मा वाजाय त्वेति पश्चाद्धोता वाजजित्यायै त्वेत्युद्गातोत्तरतो। यद्यु वा एते न कामयन्तेऽध्वर्युरेव पुरस्ताद्घ्नन्ति दक्षिणतः प्रति-

---

१ Thus M Tr Be B, श्रौतिं U Bell H F, श्रौतिं Bhav. (one copy), त्रितिं (the other copies), Keś has three श्रौतिं corrected from original त्रितिं or श्रौतिं।

२ Thus (as TBr I 3 7 4) M Tr UBF Dvaidhasūtra and Bhav on this passage of the Dvaidha, कॢप्तैरोह॰ Be H, thus also Bhav. on the passage of the Vājap

३ Thus, conjecturally, corrected, मोदास्यन्तीति M Tr, मेदास्यन्तीति UBF, मोजास्यन्तीति Be B

४ कपुटै॰ FH Be (pr m.), although at the beginning of this praśna the कपुटाः have been mentioned, आमपुटै is here the correct reading, cp Bhav a h l

प्रख्याताः पश्चादाग्नीध्रं धिष्ण्योत्तरतस्तेषां[1] तथा विभागो यथा दुन्दुभीनामंशावो[2] प्रत्यवरोहणत[3] आसन्दीं निदधाति । तस्यां बस्ताजिनमास्तृणाति बस्ताजिने यजमानः हिरण्मयं दक्षिणं पादः हिरण्य[4] उपावरोहत्यमृतमसीति[4] पृथिव्यसि प्रजननमसीति सव्यं बस्ताजिने । उपैमस्तेतयासन्द्या सह आवहन्त्य[5] वा[5] प्रजर्त्यन्वायणयेनमेते[5] चमसा । अथैतस्य बार्हस्पत्यस्येडामुपह्वयन्ते । इडोपहूतं मार्हेन्द्रः होता चैवाध्वर्युश्च संभवयतो नराशंसयोरतेन नाराशंसानचैतेषामतियाभ्यामां मुखे पात्रे अङ्गावाम्रमवनीय यजमान एव प्रत्यक्षं भक्षयत्यपि वैनाम्यवैश एव चमसेषु व्यवनीय भक्षयेयुरित्येतदपरः । होत्रचमसमेवैते सर्वः समुपहूय भक्षयन्ति । यथाचमसं चमसान्निम्न इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्सर्वभक्ष

---

१ Thus M Tr; उपरत चत्रैवा all the other MSS

२ Thus Tr Be B Be 11 (sec. m), अन्वांशै UFH Be 11 (pr. m.), ऋव om M

३ Thus corrected on account of the collateral passage xviii 17 s. f. and the Vivarana. प्रत्यवरोह(ण)तः यत्र प्रत्यवरोहति तत्र ; MSS. प्रत्यवरोहत ।

४ हिरण्मयुपा॰ M U Be 11 H F, हिरण्मउपा॰ Be; हिरण्यैवपा॰ B, हिरण्य om. Tr.

[illegible] Thus Be 11; ॰वर्हत्वानामन्यास्य॰ U; ॰वर्हत्वत्यानांगांशा॰ M, ॰प्रजात्य॰ Tr Be [illegible] H F, but cp. Bhav . यद्वैवासन्दोपयस्य वहा आपयन्ति सदसेन वा गच्छति ।

मार्जयन्ते ' उपेन्द्राय मैन्द्राय मैत्रेयं चिभिहक्ष्यपर्यायैश्चरन्ति[1] ' संतिष्ठते माध्यंदिनꣳ सवनम् ' ॥ १२ ॥ चतुर्थः ॥

अथ सावित्रꣳ कृत्वा प्रसर्पन्ति तृतीयसवनाय ' प्रसिद्ध-मादित्यग्रहेण चरित्वाथाग्रयणं गृहीत्वाथ षोडशिनमभिगृह्णात्यसावि सोम इन्द्र ते इत्युपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति ' परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति ' समानं कर्म पवमानात्पर्यावर्तनेन चरित्वा स्वे धामन्यप्यभिचरन्ति[2] ' तेषां नाना ग्रहा नाना देवता नाना प्रत्यभिमर्शना नाना वषट्कारहोमाः समानो वनस्पतिः समानः स्विष्टकृत्समानीडा समान्यो दिशो ' नाना दिश इत्येके ' समानं कर्म ध्रुवग्रहणमेभ्यो ' ध्रुववद्ध्रियमेवचरित्वा चिभिहक्ष्यपर्यायैश्चरन्तीन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामित्यथ[3] षोडशिना चरत्यथ प्राजापत्याह होतृचमसमनूप्याध्वर्युर्देशः सत्य एव राजानमुन्नय मातिरीरिच इति ' होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वांश्च एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति ' तदेतान्प्राजापत्यान्सꣳसादयन्त्यथाय उप-स्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपा-

---

1 Thus M Tr, चरंति UB Be II Be II F

2 Thus M Tr BHF; चरंति Be II U

3 ०चरन्तीन्द्रा० M Tr, the other MSS read plural.

करोति । स्तुवते । तदेतद्बृहत्सामैकविंशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति । होत्र एवोत्तमेति प्राक्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योपच्छन्न एतं होतृचमसमनूपच्छन्त इतरानुपोपच्छन्ते चमसानध्वा- श्रावयध्वो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृते जुहोति । तदेतान्प्राजापत्यान्भक्ष जुह्वति । वषट्कृतानु- वषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षः प्रजापतिना पीतस्येत्यथैतेषां[1] प्राजापत्यानां मुख्ये पात्रे संस्रावान्समवनीय[2] यजमान एव प्रत्यक्षं भक्षयत्यपि वैनान्सर्वत्र एव चमसेषु व्यवनीय भक्षयेयु- रित्येतदपरमेव चमसाध्यया चमवदानीयं तदुल्लिख्य उप- हरति[3] । तदेतत्समावच्छो[4] विभज्य प्राश्नन्ति । होतृचमसमेवैते चयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्विन्ध म इत्या- त्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसाञ्छर्वभक्षा मार्ज- यन्ते । अथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहर-

---

१ Thus M Tr U Be 11, चथैतां Be BFH.

२ Thus M Tr, संस्रावमवनीय Be 11 UH Keś ; संस्रावानवनीय F; ऽस्रावान्प्रत्यवनीय B Be, cp. supra p 81, 9.

३ ॰हरति Be BH Bhav., हरति M Tr F.

४ Thus MUHF ; तद्देवमा॰ Tr Be B, तदेवैषमा॰ Bo (sec. m.).

न्येतानाग्नीध्रादौपयजानङ्गाराञ्छूर्पाभ्यां[1] होतारं निवपन्त्युप-भीद्दत्युपयष्टा गुदकाण्डैर्[1] वैतानि गुदकाण्डान्येकादशधा छित्त्वोपयष्टोपयजति । समानमत ऊर्ध्वं । संतिष्ठते वाजपेयो । वाजपेयेनेष्ट्वा प्रत्यवरोहणीयेनाग्निष्टोमेन[2] यजेत । संतिष्ठते वाजपेयः संतिष्ठते वाजपेयः । ॥ १३ ॥ पञ्चमः ॥

॥ इत्येकादशः प्रश्नः ॥

---

१ Thus (०वर्तन्ते) all exc. B, which has the sing. and M, which omits this passage altogether

२ चतुष्टोमेन ins. Tr

राजसूयेन[1] यक्ष्यमाणो भवति। स पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्या आमावास्येन[1] हविषेष्ट्वा दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः। संतिष्ठत एष प्रायणीयो ऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तो। ऽथाष्टमे ऽह्न्यानुमतं निर्वपति। हविष्कृता वाचं विसृजते। समानं कर्माधिवपनादुद्धृत्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपधायैकं प्रतिप्रस्थातोत्तरतो नैर्ऋताय। हविःपेष्यै प्रयच्छन्नाह प्राचश्च प्रतीचश्च व्यवघ्नातयन्ती पिण्ढीति[2]। स ये प्राञ्चः शम्याया अवशीयन्ते तानध्वर्युः समुप्य संयुत्यानुमतꣳ श्रपयत्यथ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान्प्रतिप्रस्थाता समुप्य संयुत्य नैर्ऋतꣳ श्रपयत्याददत[3] एतं[4] नैर्ऋतमुपस्तीर्णाभिघारितं[4] कृष्णं वासः कृष्णतूषमन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादाय गार्हपत्ये स्रुवाहुतिं जुहोति वीहि स्वाहाहुतिं जुषाण इत्यथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणꣳ स्यष्टं भवति प्रदरो वा।

---

1 ... 1 Thus MT Be 11 (the last two om. however स); the other MSS.: राजा राजसूयेन यजेत फाल्गुन्यै वा चैत्र्यै वा पुरस्तादामावास्येन। The Vivaraṇa begins also राजा राजसूयेन यजेतेति, but infra it cites the words यक्ष्यमाणो भवति and cp. comm. on T.S. i. 1.8 and on Tāṇḍ. br. xviii 8.1.

2 पिंढीति M; the other MSS. still more corrupted.

3 Thus M, श्रपयित्वाददत T Bo 11, Be BU om. आददत।

4 Thus M, एतद्॰ all the other MSS.

तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्याङ्गुष्ठाभ्यां[1] परिगृह्य नैर्ऋतं जुहोत्येष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममंहसः स्वाहेत्यथ कृष्णं वासः कृष्णतूषं दद्यादथापो व्यतिषिच्य पराञ्चः पाथमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यै-तेनैव पथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति स्वाहा नमो य इदं चकारेत्यथानुमतेन[2] यष्ट्या करोति । धेनुं ददाति[3] । ॥ १ ॥

अथ नवमेऽहन्यादित्यं चरुं निर्वपति । वरं दद्यादथ दशमेऽहन्याग्नावैष्णवमेकादशकपालं । वामनं वहिनं दद्यादथैकादशेऽहन्यग्नीषोमीयमेकादशकपालं । हिरण्यं दद्यादथ द्वादशेऽहन्यैन्द्राग्नमेकादशकपालमृषभं वहिनं दद्यादथ त्रयोदशेऽहन्याग्नेयमष्टाकपालमैन्द्रं दध्यृषभं वहिनं दद्यादथोपानीत्यामयपयस्वीऽथ चतुर्दशेऽहनि सरस्वत्यै चरुं । वत्सतरीं दद्यादथ पञ्चदशेऽहनि सरस्वते चरुं । वत्सतरं ददाति । पशु वै चतुर्दशमेवोपवसथः संपद्यत एवमेवैतद्यदेताभ्यामिष्टिभ्यां[4] नानाबर्हिर्भ्यां[5] यजेतापास्तैतद्धविर्भ्यो देवेभ्यो वत्सा अपाकृता भवन्ति । वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य

---

1 [illegible] i.s.o. अङ्गुष्ठाभ्यां B Be U.

2 °चकारेत्यनुमतेः Be BU

3 धेनुर्दक्षिणा Be BU.

4 एकमे° i.s.o. एवमे° M Be BU.

5 Thus M; °बर्हिभ्यां Be BU, °औषिभ्यां Be H T

वाग्यता तूष्णीं वाथ श्वो भूते वैश्वदेवहविर्भिरिष्ट्वा पौर्णमास-वैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । अथ श्वो भूत इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपत्यभिहितो रथ उभा-काङ्क्ष्यकवचो[1] गर्भिणीभिर्वा वडवाभिर्युक्तः साण्डैर्वाश्वैरावेष्टो निष्कसहद्दात्यथ श्वो भूत इन्द्रायांहोमुचे पुरोडाशमेका-दशकपालं निर्वपत्यनभिहितो रथो[2] ऽकाङ्क्ष्यकवचो[2] ऽगर्भा-भिर्वा वडवाभिर्युक्तो निरष्टैर्वाश्वैः[3] सद्रुक्मो[3] निष्कस-हद्दाति । ॥ २ ॥

एते संतनी इत्याचक्षते । अथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्विपर्यासं[4] यजमान-श्चतुरो मास[5] एति[5] काममिष्ट्वा कामं पशुबन्धेन कामं

---

१ Thus hesitatingly emended उभे कांक्ष्यकवचो M, इभैकाक्ष्यकवचो T Be 11, उभौकांक्ष्यकवचो Be BU. Bhav उभे कांक्ष्यकवचो सिरस्त्राणम्, but this may be a periphrase of our compositum So much, at any rate, is certain, that an adj is required with the sense उभयतः कांक्ष्य-कवच (cp Kāty xvii 10 30-31, Lāṭy ix. 4 11)

२ Again emended, रथो म उकांक्ष्यो उकवचो उग० M; could उ in Nandināgarī represent the avagraha? Then the reading of M would be; रथो [म] ऽकांक्ष्यो ऽकवचो ऽग० ; रथ कांक्ष्यकवचो Bo BU, इभै-काक्ष्यकवचो Bo 11 T (omitting रथो)

३ ०र्वाश्वैः सद्रुक्मो M, ०र्वाश्विसद्यक्का T Be 11, ०र्वाश्विसद्रुक्मद० Be, ०र्वाश्विःसद्रुक्मद० B, the last two om निष्कस्।

४ Here and infra B Bo U have sometimes विपर्यासाभ्यां, Be 11 T om the word every time

५ Thus here and infra M, मास इति B Bo U, मासानेति Be 11 T

यवाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वा[१] वरुणप्रघासहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानो ऽपराह्णश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामम् श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वा साकमेधहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानो ऽपराह्णश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामं व्रीह्याग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वा शुनासीरीयहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानः संवत्सरमन्वेति काममिष्ट्वा कामं पशुबन्धेनाथाप्ये ऽह्नीन्द्रतुरीयमाग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुमन्वाहार्यमाषाढ वहिनीं धेनुं ददाति । ॥ ३ ॥

अथ तदानीमेव पञ्चबिलीयेन प्रतिपद्यते । पञ्चधाङ्गाराग्निरूह्य पञ्चशरावान्यादधाति पर्णमयं पुरस्तान्नैयग्रोधं दक्षिणत आश्वत्थं पश्चादौदुम्बरमुत्तरतः प्लाक्षं मध्ये । ऽथैनानाज्येन व्याघारयति ये देवाः पुरःसदो ऽग्निनेत्रा रक्षोहणस्ते नः पान्तु

---

१ Thus here and infra MT Bo II, संतत्येष्ट्वा B Bc.

ते नो ऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवा दक्षिणसदो ये देवाः पश्चात्सदो ये देवा उत्तरसदो ये देवा उपरिषद इत्यथोपवेषेणाङ्गारान्समूहति[१] समूढꣳ रक्षः संदग्धꣳ रक्ष इदमहꣳ रक्षो ऽभिसंदहामीत्यथैनान्स्रुवाहुतिभिरभिजुहोत्यग्नये[२] रक्षोघ्ने स्वाहेति पञ्चभिरथ[३] प्रष्टिवाहिनꣳ रथं ददात्यथ याचति पर्णमयꣳ स्रुवमपामार्गसक्तून्प्रतिवसनीयं वासो ऽन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादायोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य स्वक्षमिरिणꣳ स्पष्टं भवति प्रदरो वा। तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्य पर्णमयेन स्रुवेणापामार्गसक्तूञ्जुहोति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि स्वाहेति[४]। हतꣳ रक्ष इति स्रुवमनुप्रहरत्यवधिष्म[५] रक्ष इत्युपतिष्ठते[६]। ऽत्र[७] यद्वस्ते तद्ददात्यथापो व्यतिषिच्य पराञ्च आवसथमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेन यथेतमेत्यैन्द्रतुरीयेण सꣳस्थां करोत्यथ नवमे ऽह्नि पूर्वाणि देविकाहवीꣳषि निर्वपत्यनुमत्यै चरुꣳ राकायै चरुं धात्रे पुरोडाशं द्वादशकपालमित्यन्वाहार्य-

---

१ निरूहति Be T

२ स्रुवाहुतिभि॰ M Bo U, स्रुवाहुतीर॰ BT Bo 11

३ पंचभिर् om Be BU

४ इति om Be BU

५ ॰नुप्रहृत्याव॰ Be BU

६ उपोतिष्ठते MT Bo 11, but cp Āp xviii 9 18

७ om B Be U

आमाद्य[1] वत्सतरीं[2] ददात्यथ दशमे ऽहन्युत्तराणि देविका-हवींषि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं धात्र एव[3] पुरोडाशं द्वादशकपालमित्यन्वाहार्यमामाद्य[4] वत्सतरं[5] ददा-त्यथैकादशे ऽहनि त्रिषंयुक्तैः प्रतिपद्यत आग्नावैष्णवं निर्वप-त्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं । वामनमृषभं दक्षिणं ददात्यथ द्वादशे ऽहन्यग्नीषोमीयमेकादशकपालं निर्वप-तीन्द्राषोमीयमेकादशकपालꣳ सौम्यं चरुं । बभ्रुं ददात्यथ त्रयोदशे ऽहनि सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ । श्यामं ददात्यथ चतुर्दशे ऽहनि वैश्वानरं द्वादशकपालं निर्वपति । हिरण्यं ददात्यथ पञ्चदशे ऽहनि वारुणं यवमयं चरुमश्वं ददाति । ॥ ४ ॥ प्रथमः ॥

अथैनमामावास्येन हविषेजानꣳ रत्निनः पर्युपासन्ति[6] दक्षिणतो वोदञ्चो पश्चाद्वा प्राञ्चस्तेषामवमितानां महीव दक्षि-णार्थो वापरार्थो वा भवति । स[7] यत्किंच यज्ञपरिभोजनं[8] ब्राह्मण एव[9] तद्गृहे[8] भवत्यथारण्योरग्नीन्समारोह्य ब्राह्मणो

१ इति om T Bo 11 U
२ °तर Bo 11 T.
३ om B Be U, the word should be supplied, also Vol 1, p 264, 4
४ इति om all the MSS
५ °तरी Bo 11 T
६ पर्युपविशन्ति B Be U
७ om. Bo 11 T
८ °भाजनं B Be U
९ Thus M Bo 11 T, एवैत° [illegible] Bo

गृहानध्यवसाय मथित्वाग्नीन्विहृत्य बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । शितिपृष्ठं ददात्यथारण्योरग्नीन्समारोह्य[1] स्वान्यग्न्यायतनान्यभिप्रव्रजति[2] । तं यन्तमनुमन्त्रयतेऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्यथ स्वान्यग्न्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रतिनिर्वपत्यथास्यैतदहः[3] श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्य निदधात्यथ श्वो भूतेऽरण्योरग्नीन्समारोह्य राजन्यस्य गृहानध्यवसाय मथित्वाग्नीन्विहृत्यैन्द्रमेकादशकपालꣳ राजन्यस्य गृह । ऋषभं ददाति । तथारण्योरग्नीन्समारोह्य स्वान्येवाग्न्यायतनान्यभिप्रव्रजति[4] । तं तथैव[5] यन्तमनुमन्त्रयते । यस्य यस्य गृहे यजते सर्वोऽनुमन्त्रयतेऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्यथ स्वान्येवाग्न्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं प्रतिनिर्वपति । समानमेवास्यैतदहः श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्यैव[6] निदधात्यथ तृतीयेऽह्न्यादित्यं चरुं महिष्यै गृहे । धेनुं ददात्यथ चतुर्थेऽहनि भगाय चरुं वावातायै गृहे । विचित्तगर्भां पष्ठौहीं ददात्यथ पञ्चमेऽहनि

---

१ ०रोप्य here and infra sometimes B Be U.

२ ०व्रजति MT Be Be Bh, ०द्रति B

३ प्रति om. MT Be Bh but cp Āp xviii 10 23

४ एव after स्वानि om MT Be Bh, ०व्रजति T Be Bh B, ०व्रजति M Be

५ Thus MUB Be; एव om Be Bh T

६ एव om Be BU

नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णां कूटां ददात्यथ षष्ठे ऽह्न्याग्नेयमष्टाकपालꣳ सेनान्यो गृहे। हिरण्यं ददात्यथ सप्तमे ऽह्नि वारुणं दशकपालꣳ सूतस्य गृहे। महानिरष्टं ददात्यथाष्टमे ऽह्नि मारुतꣳ सप्तकपालं ग्रामण्यो गृहे। पृश्निं ददात्यथ नवमे ऽह्नि सावित्रं द्वादशकपालं क्षत्तुर्गृहे। उपध्वस्तं ददात्यथ दशमे ऽह्न्याश्विनं द्विकपालꣳ संग्रहीतुर्गृहे। सवात्यौ ददात्यथैकादशे ऽह्नि पौष्णं चरुं भागदुघस्य गृहे। श्यामं ददात्यथ द्वादशे ऽह्नि रौद्रं गावीधुकं चरुमक्षावापस्य गृहे। शबलमुद्वारं ददाति। प्रसिद्ध-मेवास्यैतदहः[1] श्वेतायै श्वेतवत्सायै पयो दोहयित्वा[2] समानत्यैव[3] निदधात्यथ त्रयोदशे ऽह्नि मैत्राबार्हस्पत्यं भवति। ॥ ५ ॥

अथ वै भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयं-मथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्विचिनुयादित्यथ वै भवति स्वयं-कृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्म इति। राजै-वायꣳ[4] स्वयं कर्मभिः पूजितो भवति। स[5] स्वयमेव वेदिं करोति स्वयमिध्माबर्हिः संनह्यति स्वयमाश्वत्थं पात्रं चतुःस्रक्तिं[6]

१ Thus B Be U, प्रसिद्धमेवाह्नैनं द्वादशाहे M; अथ प्रसिद्धमेवाह्नैद्वादशाहं T Be 11.

२ दोहयित्वादोहयित्वा M.

३ समानथ्यसमानत्यैव M; सामर्थ्यभागादत्यैव Be 11 T.

४ corrected; राजैवायम् M Be BU; राजैवेषं Be 11 T.

५ om. T Be 11

६ स्रक्ति T Be 11, but cp. Āp. xviii. 11. 2.

करोति[१] स्वयमवपन्नायै शाखायै कर्णांश्चाकर्णांश्च तण्डुलान्विचिनोत्यथ वै भवति ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये मैत्र इत्यथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमानीय[२] तिरः[२] पवित्रमकर्णानोप्य[२] तेन[३] बार्हस्पत्यमपिदधाति[३] । तं तथापिहितमन्तर्वेद्यासादयति[४] । समानं कर्म प्रयाजेभ्यः । पञ्च प्रयाजानिष्ट्वोद्धृत्याक्रम्य संस्रावेण बार्हस्पत्यमभिघार्य मैत्रमभिघारयति । बार्हस्पत्येन पूर्वेण प्रचरत्यथ मैत्रेण । बार्हस्पत्यस्य पूर्वस्य स्विष्टकृतेऽवद्यत्यथ मैत्रस्य । बार्हस्पत्यस्य पूर्वस्येडामवद्यत्यथ मैत्रस्यान्वाहार्यमासाद्यैतामेव श्वेतां श्वेतवत्सां ददाति । संतिष्ठते मैत्राबार्हस्पत्यं हविः । ॥ ६ ॥ द्वितीयः ॥

अथैतस्मिन्नेव पूर्वपक्ष उक्थ्यायाभिषेचनीयाय दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं क्रीणाति यथा मन्यतेऽमावास्यायै मे यज्ञिये[५]ऽहन्सुत्या संपत्स्यत इति ।

---

१ यात्यति B Bo U

२ Thus M; Bo BT om आज्यमानीय तिरः पवित्रं and Bo BU have कर्णान् i.s.o अकर्णान्।

३ अभिद॰ Bo 11 T.

४ हितमपिहित॰ T Bo 11

५ Thus MB Bo; यज्ञीये U, यजनीये T Bo 11; this latter might be the right reading, but as the expression यज्ञिये ऽहन् occurs several times infra, xvii 55-61, without any various reading, I did not venture to write यजनीये in the text.

तस्य तथा संपद्यते ' ऽथ प्रायणीयेन चरति ' प्रायणीयेन चरित्वा पदेन चरति ' पदेन चरित्वा रोहिते[1] चर्मणि[1] राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्योपांश्वदमुपसद्भि-श्चरित्वाथाहवनीयं प्रणयत्याहवनीयं प्रणीय रथवाहने सदो-हविर्धाने संमिनोति ' रथवाहने सदोहविर्धाने संमित्याग्नी-षोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपमाहृत्य यूपमुच्छ्रयति ' स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति ' तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृहीत्वाथ पशुपुरोडाशं निर्वपति ' तमनुवर्तन्ते ऽष्टौ देवसुवां हवींष्यग्नये गृहपतय इत्येतानि ' तेषामुक्तं चरणं यथाग्रे विधायामिडान्ताः पुरोडाशाः संति-ष्ठन्ते ' पत्नीसंयाजान्ताः पशुहृदयशूलान्त इत्येके ' ऽथैतान्दुन्दु-भीनदुदिग्माचक्षाण्य वसतीवरीः परिहृत्य यथाऽपि विभिद्योपवसन्त्यथातो महारात्र एव बुध्यन्ते ' प्रातरग्र्याणि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति ' परि-चिते प्रातरनुवाके ऽपो ऽच्छेत्यह्निरुदेत्युरवस्य[2] क्रतुमुपैति ' प्रसिद्धो ऽभिषवः ' प्रसिद्धं ग्रहा गृह्यन्ते ' समाने कर्माश्विना-द्ध्वाद्राश्विनं ग्रहं[3] गृहीत्वा द्वे रशने आदाय यूपमभ्येति ' स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति ' तस्यैन्द्राग्न उपा-लम्भ्यो भवति ' तयोः प्रसिद्धं वपाभ्यां चरित्वा प्रसर्पन्ति

---

१ Missing in M Bo T, but cp. the Dvaidhasūtra.

२ ॰वरेतु॰ Bo U, ॰वदेतु॰ the other MSS

३ om. M Bo

प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि होष्यन्नाग्नीध्रात्संस्थालौहं सस्रुवाङ् स्रुचं वासस्तस्यैतस्य वसनस्यान्तमायां दशायां निष्करञ्जुः प्रयपिता[1] भवत्येतत्समादायाहैहि[2] यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्यापरेण शालां तिष्ठते प्रतिप्रस्थाय एतानि शस्त्राणि प्रयच्छत्यथाहैहि यजमानेति । रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति । तमुपावहरतीन्द्रस्य[3] वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादित्यथैनं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयन्ति[4] तूष्णीमथास्य चक्राण्यभ्युक्षयति तूष्णीमथ दक्षिणं योग्यं युनक्ति[5] मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेनेत्यथास्य पृष्ठं संमृज्यते तूष्णीमेवमेवोत्तरं योग्यं युनक्ति । तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति । तयोरेवमेव पृष्ठे[6] संमृज्यत[6] । एतस्य योगमनु सर्वमाणिवद्युज्यते । ऽधिकक्ष्यानस्मिन् कुर्वन्ति । प्रवेष्टयन्ति वासोभारान्वसनानां दशासु निष्करञ्जू प्रयच्छन्ति । पूर्णमौ दक्षिणा आयातयत्यथ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति ।

---

१ ॰यितो MSS

२ भवतीत्येत॰ M

३ ॰हरतौ॰ Be BU, ॰हरति॰ MT Be 11

४ Thus M only, ॰भ्यवर्तयति T Be 11 U Be, ॰भ्यावर्तयति B

५ Here Be BU ins. तस्यैवमेवोत्तरत प्रष्टिमुपनियुनक्ति ।

६ Thus MB Be U, पृष्ठमुन्मृज्य T Be 11

नयवत्यर्चाग्नीध्रे जुहोति । स्तुवन्ते[1] दक्षिणा दक्षिणापथेन । स यत्किंचिद्ददाति[2] हिरण्यमुखमेव ददात्यथ यावाऽश्वय[3] युक्तानि[3] गोऽश्वश्च हस्तिपुरुषमन्ततो[4] । उदञ्चा एवैते रथा अतिवर्तन्ते[5] । नैते ऽन्यत्र यन्तं आग्निं धावन्ति । मनमेव स्वरयमश्वयेवे ददाति । मनसा चतुष्पात्स्वेवं[6] ब्रह्मण आदिशति । मनसा समनुदिश्य[7] दक्षिणाभिस्त्रिभिर्मन्त्रतीयैश्चरति[8] । सीदन्ति मारायशस्या आप्यायिता दक्षिणस्य हविर्धानस्यापान्वमधोऽधो[9] माहेन्द्राय । ॥ ७ ॥

अथ याचति वैतस[10] द्रोणकलशं षोडश[11] वायव्याल्यैवास्यैतत्पुरस्तादेव[12] षोडशतयं आपो दिग्भ्यः संभृता[13]

---

१ स्तुवन्ते T Bo 11

२ यत्किंचद० M

३ Thus M, यत i. e. of यथ T Bo 11, B Bo again (cp. supra, p. 73, 10) यानि i. e. यथ ।

४ Thus MUB Bo, हस्तिदासपुरुष० T Bo 11.

५ Thus M only, अतिनिर्वर्तते Bo BU, अतिपतते Bo 11 T.

६ चतुष्पात्स्वेवं all MSS. exc. M which has चतुष्पात्स्वेवं ; one copy of Bhav. has the word with ā, another with e, cp Ait. Br. viii 20, 2.

७ Thus MB, समनुदिश्य Bo U, समुद्दिश्य Bo 11 T.

८ चरति M; चरेति the other MSS

९ ०स्याप्यातंव० Bo (sec. m.)

१० च ins. MT Bo 11.

११ षोडशंच M.

१२ एतत् i. e. एव Bo BU

१३ Thus M Bo, संभृता BU; समाहृता Bo 11 T.

मयवत्यर्चाग्नीध्रे जुहोति । सृज्यन्ते[१] दक्षिणा दक्षिणापथेन । स यत्किंचिद्ददाति[२] हिरण्यमुपास्यैव ददात्यथ सामाङ्ख्य[३] युक्तानि[३] गोऽश्वं हस्तिपुरुषमन्ततो[४] । उदञ्चा एवैते रथा अतिवर्तन्ते[५] । नैते ऽन्यस्य सन्त्यार्त्विजं धावन्ति । मनसैव स्वरयमध्वर्यवे ददाति । मनसा चतुष्पात्स्वेवं[६] ब्रह्मण आदिशति । मनसा समनुदिश्य[७] दक्षिणास्तिभिर्मदन्तीर्योपस्वरति[८] । सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[९] माहेन्द्राय । ॥ ७ ॥

अथ याचति वैतसं[१०] द्रोणकलशं षोडश[११] वायव्यान्येयाश्चैतत्पुरस्तादेव[१२] षोडशानयं आपो दिग्भ्यः संभृता[१३]

---

१ दंसम्यवे T Be 11

२ यत्किंचद॰ M.

३ Thus M, सम i.e. of सम T Be 11, B Be again (cp. supra, p. 73, 10) समादि i.e. सम ।

४ Thus MUB Be; हस्तिदासपुरुष॰ T Be 11.

५ Thus M only, अभिनिवर्तन्ते Be BU; अतिपर्तन्ते Be 11 T.

६ चतुष्पात्स्वेवं all MSS. exc. M which has चतुष्पात्स्वेवं; one copy of Bhav. has the word with *a*, another with *a*, cp. Ait Br. viii. 20, 2.

७ Thus MB, समनुदिश्य Be U, सन्दिश्य Be 11 T.

८ चरति M, चरन्ति the other MSS

९ ॰स्यापालंब॰ Be (sec. m.).

१० च ins. MT Be 11.

११ षोडशांश M.

१२ एतत् ins. एव Be BU

१३ Thus M Be, संभृता BU; समाभृता Be 11 T.

# INDEX.

दक्षिणस्य[१] हविर्धानस्य प्राच्यो ऽक्षमतीत्य उपस्तम्भनाभि-चिताः शेरते। तासां वहन्त्यः पूर्वार्ध्या भवन्ति पारस्वत्यो ऽपरार्ध्याः। स वहन्तीरभिजुहोत्यर्पैत स्थापो देवीर्मधुमतीर-गृभ्णन्नूर्जस्वती राजसूयाय चितानाः। याभिर्मित्रावरुणावभ्य-षिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः॥ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति। गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्या-यणायामुष्य पुत्रायामुष्य पौत्राय दत्तेत्यपां पतिरसीत्यपांप-तीयाः पुंसाम्नो[२] वोत्सम्य[२] समुद्रिया वा। वृषास्यूर्मिरित्यौर्म्या। वृषसेनो ऽसीति पत्नन्त्या। व्रजक्षित स्थेति कूप्या। मरुतामोज स्थेति निवेष्याः[३]। सूर्यवर्चस स्थेत्यतिदृश्याः[४]। सूर्यत्वचस स्थेत्यात-पति वर्ष्या। मान्दा स्थेति ह्रादुन्यो[५]। वाशा स्थेति पृष्व्याः[६]। शक्वरी स्थेति गोहल्या। विश्वभृत स्थेति पयो। जनभृत स्थेति दध्यग्नेस्तेजस्या स्थेत्याज्यमपामोषधीनाᳯ रस स्थेति मध्वंय

---

१ Thus Bo BT Bhav, उत्तरस्य MT Bo II.

२ Thus M Bhav, पुनाम्नोवात्स्य Bo U, पुनाम्ना वात्स्य B; पुना-वेत्स्य Bo II T.

३ Thus M Bo II T and the best MSS of the Karmāntasūtra; परिवेष्याः B Bo and Bhav, निवेष्य the Vājasaneyins.

४ Thus only M and Bhav, सूर्यवर्चस स्थेतिदृश्या Bo II T; °स्थेति-दृश्याः Bo; in BU the passage is missing, the Karmānta MSS read अभिदृश्याः।

५ Thus M Bo, the other MSS. defective

६ Thus M Bo Bhav, पृष्ठाः Bo II T, but cp TS VII. 4 13

सारस्वतीरभिगृह्णात्यपो¹ देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः। याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्यायणायामुष्य पुत्रायामुष्य पौत्राय दत्तेत्यथैना वैतसे द्रोणकलशे समवनयति देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वाना इत्यथैना अन्तरेण होतुश्च धिष्ण्यं ब्राह्मणाच्छंसिनश्च सादयत्यनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्यथ ये ऽर्थ्याः² सरेका अध्वर्योस्तानावसथ्यं हरन्त्यथ ये³ ऽनर्थ्या³ अपस्तानभ्यवहरन्त्यनभिक्रान्तागांस् सारस्वतीनां वसतीवरीर्दशपेयाय परिशाययन्ति ॥ ८ ॥ तृतीयः ॥

अथात्रैव निदधाति दर्भनाडीस् शतमानं⁴ हिरण्यं चत्वारि नानावृक्ष्याणि पात्राणि⁵ तार्प्यं चोष्णीषं वैकङ्कतं च दर्भपुञ्जीलानि दध्युदुम्बरस् शष्पाणि धनुरिषूंश्चेति⁶ । स दर्भनाडीस् शतमानं हिरण्यं मधुन्यवनिधायैतमभि वातो यम्भुत्पोजा इत्यथैनद्वैतसे⁷ द्रोणकलशे ऽवदधाति सोमस्य

---

१ Thus M Be U ; the other MSS. more or less corrupte

२ तीर्थ्याः M Be 11 T.

३ येनतीर्थ्या M Be 11 T

४ च ins T Be 11.

५ यानि ins Be BU.

६ इति om. Be BU

७ Thus M only, यथैनद्वै० Be BU ; अथैनद्वै० Be11 T.

दात्रमसीति । हिरण्येनोत्पुनाति शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितामा इति । गृह्णाति पर्णमयेन सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानाः । पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तरिति । पुरस्तात्प्राचीनाय ब्रह्मणे प्रयच्छत्येतयैव गृहीत्वा दक्षिणत आसीनायौदुम्बरेण राजन्याय प्रयच्छत्येतयैव गृहीत्वा पश्चात्प्राचीनायाश्वत्थेन वैश्याय प्रयच्छत्येतयैव गृहीत्वोत्तरत आसीनाय नैयग्रोधेन जन्याय प्रयच्छत्यथैतं[1] प्रत्येकमाग्नीध्रꣳ[1] चलापिधाय[1] प्रज्ञातं निदधात्यथ यजमानं तार्प्यं परिधापयति क्षत्रस्योल्बमसीति । क्षत्रस्य योनिरसीत्याधत्ते[2] तार्प्यमभीव नाभिमुष्णीषं पर्यस्यत्यथैनमेकशतेन दर्भपुञ्जीलैः पवयति त्रिरेतेन पवनेनाथैनमुष्मकमासयति[3] दध्युदुम्बरꣳ गर्भ्याणीत्यथैनमाविद्भिः प्राहमानयत्याविन्नो अग्निर्गृहपतिरिति सप्तभिरनुच्छन्दसमथैनं यजमानायतने तिष्ठन्तं प्राहैष वो भरता राजेति येषाꣳ श्रेष्ठी[4] भवति । सोमो ऽस्माकं ब्राह्मणानाꣳ राजेतीतरे प्रत्याक्रंसत्यथास्मै धनुः

---

१ Thus M only (reading however स्थं १.८.० स्त); Be U om. आग्नीध्रं . Be 11 T are wholly corrupted

२ Thus M Be B U, आपद्यते Be 11 T, Bhav. reads धत्ते or आधत्ते।

३ Uncertain reading •मुष्मकमासयति M U Be B, T Be 11 totally corrupted: •मुदुम्बरमासयति।

४ Thus T Be 11, राजा M U Be B.

प्रयच्छतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादिति मधु-माधना स्तेनौ दृढ्हं दुन्नो[1] बाधध्वमितीतरः[2] प्रतिरष्टानि पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्यथ हिरण्यवर्णावुषसां विरोक इति त्रिष्टुभा[3] बाहू उद्गृह्णात्यथैनं सम्मार्ष्टि मनसैव दिशो ऽनुप्रक्राम मनसोर्ध्वामनूच्छ्रितोर्ध्वेत्यथैनं[4] वाचयति ॥ ९ ॥

समिधमातिष्ठोग्रामातिष्ठ विराजमातिष्ठोदीचीमातिष्ठो-र्ध्वामातिष्ठेत्यथाथैव[5] तिष्ठन्याचयति मारुतं चैकविंशतिकपालं वैश्वदेवीं चामिक्षां[6] । तस्य यो ऽरण्ये ऽनुवाक्यो गणस्तेन मध्यमानि कपालान्युपहितानि भवन्ति राजसूयगणाभ्यामित-राणि । साभ्यां चरति[7] मरुद्भ्यो ऽनुब्रूहि मरुतो यजेति विश्वेभ्यो देवेभ्यो ऽनुब्रूहि विश्वान्देवान्यजेत्यथैतमिष्टस्विष्टकृते[8] एवैते हविषी[9] अपिधाय प्रज्ञाते निदधात्यथ याचति शार्दू-

---

१ Before के T Bo II ins: स्वाहा वाचंत इति मायर्षे, cp TBr. I. 7. 6. 8.

२ Thus M Bo II T; बाधध्वमिति° Bo BU.

३ Bo BU त्रिष्टु or त्रि, but cp. T Br. I. c.

४ Emended; °र्ध्वामनूच्छ्रितो° M; °र्ध्वामनूच्छ्रितोर्ध्वो° T Bo II; °र्ध्वाजिरीर्ध्वं° Bo BU; cp TBr. I. 7.7.2 and Hir. XIII. 15 · मनसो-र्ध्वामनूच्छ्रितोर्ध्वे।

५ अथ om. Bo BU.

६ All the MSS. exc. M om. च।

७ चर्रति M T Bo II

८ Before चरिष्टस्वि° M T Bo II ins. चामिक्षया चरति।

९ Thus M Bo BU, हविषि अपिधाय T Bo II.

लचर्म सुवर्णरजतौ च[१] रुक्मौ वाराही उपानहौ सीसं च लोहितायसं च । दक्षिणतः क्लीब आस्ते । ऽथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यत्यमृतमसि मृत्योर्मा पाहीत्यधस्ताद्रजतमुपास्यति दिद्योन्मा पाहीत्युपरिष्टात्सुवर्णꣳ शतायुधमपावेष्टा दन्दशूका इति दक्षिणत आसीनं क्लीबꣳ सीसेन विध्यति । सव्येन पादेन लोहितायसं निरस्यति निरस्तं नमुचेः शिर इत्यथास्या अभिषेकान्संप्रयच्छन्ति[२] । तान्सो ऽवेक्षते ॥ १० ॥

सोमो राजा वरुणो देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्तामित्यथ ब्रह्मणः[३] पात्रमादाय तेनाभिषिञ्चत्यध्वर्युरेव[४] यजुर्जपत्यभिषिञ्चन्तीतरे सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा क्षत्राणां क्षत्रपतिरस्यति दिवस्पाहीत्यथोर्ध्वा

---

१ om. MB.

२ Thus M; संप्रतिष्ठन्ति T Be II; यच्छन्ति i.e. of संप्रयच्छन्ति Be BU; Bhav paraphrases: प्रयोजयन्ति ।

३ Thus M Be U; ब्रह्म B, ब्राह्मण Be II T.

४ तेनाभिषिञ्चत्य॰ T Be II.

धाराः समुन्मृष्टे समावत्स्यन्नधरागुदीचीरद्रिं बुध्नियमनुसंचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयाना इत्यैवैतेषामभिषेकाणां मुख्ये पात्रे संस्रावान्समवनीय[1] प्रतिहितस्य गृहानेत्यथान्वारब्धयोः प्रतिहिते च महिष्यां च जुहोति प्रजापते न त्वदेतान्यन्य इत्यथाह्वा एष प्रतिहितो वरं ददात्यथ प्रतिहिताय पात्रं प्रयच्छन्नाहेदं ते पात्रं द्वायामपघदा[2] नाभिषिञ्चामीदं ते ऽपहरित्यथैतेनैव यथेतमेत्याग्नीध्रे[3] प्रत्येकं जुहोति यद्द यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहेत्यथास्मै धनुः प्रयच्छति यदि पुरस्तादप्रत्तं भवति। समुन्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता राजसूयेनेत्यथ भूर्भुवः सुवरिति साम विसृजते। दाभ्यां मुखं विमृष्टे। गायत्राविष्णुक्रमान्क्रमते[4]। ऽथोपरिष्टादभिषेकस्य षट् पार्थानि जुहोतीन्द्राय स्वाहा घोषाय स्वाहेति। द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहाग्नये स्वाहेत्यथैतयोर्हविषोः स्विष्टकृता चरत्यथैने अपिधाय प्रज्ञाते निदधाति। ॥ ११ ॥

अथ वाराही उपानहावुपमुञ्चते पशूनां मन्युरसीति

---

१ •वावसमवनीय M.

२ Thus M, which omits only घदा, but cp. infra XII. 13 s. f.; द्वायाईघघदा Be U, the other three MSS. are wholly corrupted; my copies of Bhav read घट् i.e.o. घघट्।

३ आग्नीध्रे om. Be BU

४ Thus Be II T, •गायत्राविष्णु• MU Be B

दक्षिणे पादे तवैव मे मन्युर्भूयादिति सव्ये । अथेमामभिमृशति नमो मात्रे पृथिव्या इति । तस्यां दक्षिणं पादमुपावहरति[1] माहं मातरं पृथिवीꣳ हिꣳसिषमिति मा मां माता पृथिवी हिꣳसीदिति अथैनमन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामति[2] विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्युत्तरत एते रथा युक्तास्तिष्ठन्ति । तान्हैव प्रतिष्ठितो ऽभितिष्ठत्यथ प्रतिष्ठितस्य धनुरादायाधिज्यं कृत्वा रथमातिष्ठति मरुतां प्रसवे जेषमित्याप्तं मन इति कूबरमभिमृशते[3] । तं तदाग्नीध्र एव प्रतिष्ठितो ऽन्वातिष्ठति प्रघा अन्वस्य पुरुहूत यावृमिति । त्रिष्टुभाम्पारभत इति माध्यमंत्र[4] प्रतिष्ठिताय[4] धनुः प्रयच्छत्याह राजन्य एष षट्त्रिꣳशत्सु ग्राम्यारण्याधेषु निर्जयेन[5] सहस्रेणावसितस्तस्मा[6] इषुमस्यतादपेमꣳ[7] राष्ट्रताञ्जितेन[8] दक्षिणापथेनाप्याकुरुतादिति । राजन्य

१ Thus MT Be 11; उपवहति Be BU.

२ °क्रामति Be 11 T Be BU, °क्रामन्ति M, Bhav. reads the plural, cf. p. 75, 3.

३ Thus corrected (cp. p. 79, 2; 105, 16); °भिमृशते M Be U; °भिमृशते B, °भिमृशते Be 11 T.

४ Thus M only, माध्यमंत्रप्रतिष्ठिताय Be 11 T, माध्यमंत्रप्रतिष्ठिताय Be BU.

५ Thus MU Be B, निर्जयेन Be 11 T.

६ Thus Be BU, °वसितस्तस्मा M, °वसितस्मा Be 11 T

७ Thus corrected, °मस्यतादवैमं Be 11 T, °मस्यतादपेनं M; °मास्यतादपेनां Be BU

८ Thus corrected; °राष्ट्राजितेन Be BU, °राष्ट्राजितेन T Be 11, °राष्ट्राजितेन M.

आजिं धावत दुन्दुभीन्समाघ्नताभिषोतारो[१] ऽभिषुणताग्नीदाशिरं विनयोलूखलमुदादय प्रतिप्रस्थातर्बार्हस्पत्यमेककपालं निर्वप धौम्यस्य विद्धीति । यथासमैषं ते कुर्वन्ति । धावन्त्याजिसृत । आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाचः । संप्रोदिता[२] वाचो ऽनुमन्त्रयते । प्राघ्नन्ति घोषाः प्रस्ताव । होत एषोत्तमेति प्राङ्होतुः काष्ठात्पराङावर्तते ऽध्वर्युरथैनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । अभिषुवन्ति । प्रतिगृह्णाति । प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राहैत्योद्यच्छत एतं माहेन्द्रं पदमनूद्यच्छन्त इतरानुपोद्यच्छन्ते मारात्प्रत्सामेधाश्रावयत्यो श्रावयास्तु श्रौषडुक्थपा यज सोमस्येति । वषट्कृतानुवषट्कृते हिरण्योति । तथैव हिरिर्गाराच्छ्रत्सानत्प्रकम्पयन्ति । हिङ्कृतो माहेन्द्रः परिषेत । आयन्ति रथाः । आगतानथान्दृष्ट्वा जपति[३] समहमिन्द्रियेण वीर्येण सं मयेन्द्रियं वीर्यमित्यथान्तरेण चात्वालोत्करावुदङुपनिष्क्रामत्युपरत[४] एते रथा युक्तास्तिष्ठन्ति । तान्दृष्ट्वैव प्रतिहितो ऽवतिष्ठत्येव प्रतिहितस्य धनुरादायाधिज्य[५] कृत्वा रथमातिष्ठति महता प्रसवे श्रेष्ठमित्यासं मम इति कूबरमभिगिरा-

---

१ •षमाघ्नताभि• MB.

२ Thus only M, संप्रवदिता T Be ll; in the other MSS. this whole passage is missing.

३ Thus MU Be B, वर्जति Be ll T.

४ •ष्क्रामत्यु• Be BU; •ष्क्रामंत्यु• M Be ll T.

५ •रादायाग्ध्ये M only.

14

यते¹ । तं तदानीमेव प्रतिहितो ऽभ्यातिष्ठति प्रससाहिषे पुरुहूत शत्रूनिति । त्रिष्टुभाम्बारभत इति ब्राह्मणमथ प्रतिहिताय धनुः प्रयच्छत्याहेदं ते धनुर्दायाद्यमसपद्या² नाभिपिद्यामीदं ते ऽपदित्यथैतेनैव यथेतमेत्यान्तरेण चात्वालोत्करावुपातीत्य पूर्वया द्वारा हविर्धानं प्रपाद्य प्राञ्चꣳ रथमावर्त्य³ तिष्ठति । ॥ १३ ॥

तदेतान्मणीन्याचति राजतमौदुम्बरꣳ सौवर्णमिति । सव्ये हस्ते राजतं प्रतिमुञ्चन् इयदस्यायुरस्यायुर्मे धेहीति दक्षिण औदुम्बरमूर्गस्यूर्जं मे धेहीति दक्षिण एव सौवर्णं युङ्ङसि वर्चो ऽसि वर्चो मयि धेहीत्यथास्मा आमिक्षामुपोद्यच्छते⁴ । तस्यां दक्षिणꣳ हस्तमुपावहरति मित्रो ऽसीति वरुणो ऽसीति सव्यमथैनामभिमृशति⁵ समहं विश्वैर्देवैरित्यथैनामपिधाय प्रज्ञातां⁶ निदधाति । तदेतान्मणीनेकस्मिन्सूत्र आवयति⁷ मध्यत औदुम्बरं करोति । तान्ग्रीवासु प्रतिमुच्यैतेनैव यथेत-

---

१ Thus M and cp. supra p. 79, 2; infra 103, 9; •मभिजिप• Be BU; •मपित्र• Be 11, •मपित्र• T.

२ All the MSS. are more or less corrupted exc. M, which has however •सुमपद्या; cp. supra p. 102, 7.

३ •हत्य all.

४ Plural M Be BU; singular Be 11 T.

५ सव्यमथैनामभि• Be 11 T.

६ प्रज्ञातामिद• Be; प्रज्ञातं the other MSS., exc. M the reading of which is uncertain (प्रज्ञातं or प्रज्ञातां).

७ Thus M, आवयति Be 11 T; आनयति Be BU.

नेत्यापरेणाग्नीध्रं[1] प्राञ्चꣳ रथमावर्त्यावतिष्ठत्यथाग्नीध्रे[1] रथविमोचनीया[2] जुहोत्यग्नये[3] गृहपतये स्वाहेति चतस्रः स्रुवाहुतीर्थास्यैतत्पुरस्तादेवापरेणाग्नीध्रꣳ रथवाहनं प्राग्रीवं योग्यहतमुपस्थितं भवति । तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति । हꣳसः शुचिषदित्यादधाति[4] । ब्रह्मणैवैनमुपावहरति[4] ब्रह्मणादधात्यतिच्छन्दसादधातीति ब्राह्मणमथास्यैतत्पुरस्तादेव जघनेनाग्नीध्रं चतुरपस्थावं[5] वाष्टापस्थावं[5] वा विमितं कारितं भवति । तस्य मध्यत औदुम्बरीमासन्दीं निमिनोति यस्य नाभिदघ्नीति । तस्यामुत्तरमहतमधीवासमास्तृणाति[6] क्षत्रस्य योनिरसीत्यथैनामासीदत्यासीदन्तमनुमन्त्रयते स्योनामासीद सुषदामासीद मा त्वा हिꣳसीदिति । मा मा हिꣳसीदितीतरः प्रत्याहासन्नमभिमन्त्रयते[7] निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतु-

---

१ Here and infra Be 11 T every time आग्नीध्रीयं and °ध्रीये ।

२ रथमात्य° MSS.

३ Thus (cp. TBr. I 7. 9. 5) M Be U, °विमोचनीयाज्जु° Be 11 T, B corrupted.

४ °दधातीति ब्राह्मणमथैनमुपा° M, the Brāhmaṇa (TBr I. 7 9. 6) is quoted in abbreviated form by all the MSS exc M

५ Thus M, cp. infra XV. 2 and Āp XVIII. 18. 5; °स्थावं U Be; all the other MSS. and Bhav both times °स्थानं ।

६ Thus M; उत्तरमहतं वधिवास° Be, उत्तरमहत वधिवास° BU; उत्तरमतमधीवास° Be 11 T, Bhav. उत्तरमहतमुपरिष्टोमाधिवासं ।

७ Thus MP Be 11, अनु i. s. o. अभि° B Be U

रित्यथैनमृत्विजः पर्युपविशन्ति । पुरस्तादध्वर्युरुपविशति दक्षिणतो ब्रह्मा पश्चाद्धोतोद्गातारावुत्तरतस्ततः[1] प्राञ्चो वोदञ्चो वा रथिनः । सो ऽध्वर्युमभिवदति[2] ॥ १४ ॥

[3]ब्रह्मा३न्निति । त्वं राजन्ब्रह्मासीत्याहाध्वर्युः सवितासि सत्यसव इति । ब्रह्मा३न्निति ब्रह्माणं । त्वं राजन्ब्रह्मासीत्याह ब्रह्मेन्द्रो ऽसि सत्यौजा इति । ब्रह्मा३न्निति होतारं । त्वं राजन्ब्रह्मासीत्याह होता मित्रो ऽसि सुशेव इति । ब्रह्मा३न्नित्युद्गातारं । त्वं राजन्ब्रह्मासीत्याहोद्गाता वरुणो ऽसि सत्यधर्मेति । सुश्लोका३ँ इति क्षत्तारं । त्वं राजन्सुश्लोको ऽसीत्याह क्षत्ता । सुमङ्गला३ँ इति संग्रहीतारं । त्वं राजन्सुमङ्गलो ऽसीत्याह संग्रहीता । सत्यराजा३न्निति भागदुघं । त्वं राजन्सत्यराजासीत्याह भागधुक् । अथ पुण्यनाम्नो ऽभ्युदाधार्मे[4] स्फ्यं प्रयच्छतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्तेन मे रध्येति । तेन[5] ते[6] रध्यासमितीतरः[4] प्रतिगृह्णाति । तं संप्रयच्छति सूताय सूतग्रामणिने सजाताय सजातग्रामणिने संग्रहीत्रे ऽन्यामापणीय्यच्छाभ्यामन्ततश्चैन[1] तौ[1] मथतो ऽधिदेव-

१ ततः om. Be 11 T.

२ Thus M only ; all the other MSS. ध्वर्युरभिवदति ।

३ Here and in the following lines sometimes T Be 11, sometimes Be BU are defective; M only is in good order.

४ Thus M only, भज्य ( i.e. अयुष ) T Be 11, अभ्याय B Be U.

५ तेनमेरध्या॰ M, तेममेराध्या॰ Be 11 T, तेनतेमराध्या॰ Be BU.

६ तेनतेमतो Be BU ; तमतो M ; T Be 11 def.

मनुद्धृत्य[1] तिस्रः पञ्चाशतः सौवर्णानयाचितवतो ऽस्मै पश्चाद्यानपच्छिद्य प्रयच्छति दिशो ऽभ्यय॑ राजाभूदिति। तांस्तदानीमेवाद्येष्वपिसृजत्यथैतमोदनमुद्धरते। नानाग्निनौ ब्रह्मा च यजमानश्च समानाग्निनौ सूतग्रामण्यौ समानाग्निनौ क्षत्तसंग्रहीतारौ। स यो नु मताव इव स राज्ञ आसन्न[2] उपविश्य[2] चतुःशतमक्षानपच्छिद्याथोज्जितम् राज्ञ इति। तानेव[3] सनाकमन्तानिव[3] हत्वाह कृतं ब्राह्मणस्येत्यथैतमोदनमुद्धरते। समानाग्निनौ ब्रह्मा च यजमानश्च नानाग्निनौ सूतग्रामण्यौ नानाग्निनौ क्षत्तसंग्रहीतारौ। स यः पराजयते तस्यैनं कुले चत्ता पाचयति। यावदेव ओदनः पच्यते तावदेव होता शौनःशेपमाख्यापयते हिरण्यये कशिपावासीनस्तस्मा अध्वर्युः प्रतिगृणाति हिरण्यये कूर्च आसीनः[4] ॥ १५ ॥

ओं होतस्तथा होतः सत्यं[5] होतरदारन्म होतरिति। यशु वै होता नाध्येत्यन्य[6] उ[6] होतामंनूनी मंनूषति। तस्मा

---

१ अधीता ins. चक्ष M.

२ आसनमुपविश्य M.

३ तानेवमक्षान० M.

४ As the MSS with the exception of M are hopelessly spoiled, the text of the last 13 lines has been reconstructed as best possible. Only the various reading of M is given, as the var of the other MSS. is nearly worthless

५ MSS exc. M ins च, cp. XVI. 8

६ नाध्येत्यन्यो T Be Il; अधीत्यन्य (०न्युः) Be BU, अदारेदन्यं M.

श्च प्रतिप्रस्थाता प्रतिगृह्णाति । परःशतं भवतीति ब्राह्मणं । यदेव क्रोडः पञ्चो भवत्यथैनमेकधोद्धृत्य ब्रह्मण उपहरति । तस्मा एताःस्वैव सर्वान्ददाति[1] शतं विषयं चतुष्पात्स्वेभ्यं[2] होत्रे ददाति शतं विषयं हिरण्मयं कशिपूंश्चोद्गात्रे ददाति शतं विषयमेवाध्वर्यवे[3] ददाति शतं विषयं स्वरवं निष्कः पञ्चाशतः सौवर्णानित्याहिरण्मयं कूर्चमित्यथैभ्य एतन्निर्मेयं[4] सवस्त्रं चतुर्धा कृत्वा ददात्यथैनमेतयामन्त्र्य सह श्वावदन्त्या[5] वा[5] प्रगात्यन्तायन्त्येनमेते[5] सम्पाः । अथैतयोर्हविषोरिडामुपहयत । इडोपहूतं माहेन्द्रं होता चैवाध्वर्युश्च[6] संभक्षयतो । नराशंसपीतेन नाराशंसान् । श्रीणयममसेवेति चयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्निर्वत्य स इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथेन्द्राय त्विन्द्राय स्तोत्रेवं[7] त्रिभिरनुव्याकर्णयेयरति[8] । संतिष्ठते माध्यंदिनं सवनं । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्य-

---

१ सर्वान् before सर्वान् ins. Bo B, सर्वसर्वान् U.

२ चतुष्पाद्धिमं all (also Āp XVIII. 19. 7), but cp. supra p. 99, 5.

३ Thus M, श्च om. Bo BU; विविषमध्विध्वर्यवे T Bo 11.

४ सर्वांनिर्मेयं all.

५ श्वावदंत्यावाप्रगंत्य० Bo BUT Bo 11, श्वावदन्त्याप्रगंत्य० M, but cp. supra p. 81, 5

६ इतित्याहं ins. T Bo 11.

७ Thus MT Bo 11, स्तोत्रेव Bo; स्तोत्रेव स्वं BU

८ ०धरति M Bo BU, ०धारति T Bo 11.

ग्रहेण परिप्लवयणं गृह्णात्युक्थ्यं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभ्यां चरति । तयोर्नाना मनोते[1] नाना देवते[2] नाना प्रत्यभिमर्शनौ[3] नाना वसाहोमौ समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवाक्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्मावभृथादुदेतस्मिन्नवभृथ उपाददते चार्मपत्न्यावुपानहौ[4] । प्रस्नाय धाराहो चार्मपत्नीभ्यामुदेति[5] । सो ऽपामन्ते जुहोत्यपां नप्त्रे स्वाहेति । विषुवति दर्भस्तम्बे जुहोत्यूर्जो नप्त्रे स्वाहेति । पुनरेत्य[6] गार्हपत्ये जुहोत्यग्नये गृहपतये स्वाहेति । प्रविश्यो ऽवभृथ । उदयनीयेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै प्रचिह्नं वपया चरित्वा नैव श्मश्रूणि वपते न केशान्संतिष्ठत एष उक्थ्यो ऽभिषेचनीयस्तुखिङ्गायनमासः[7] सहस्रदक्षिण उदवसानीयान्तः । ॥ १६ ॥ पञ्चमः ॥

अथास्यैषा पुरस्तादेव जुष्टे देवयजने सप्रष्ठ प्रस्नाप्रस्याधेषु शाला कारिता भवति । सो ऽग्नैवाग्नेयमष्टाकपालं निर्वपति ।

---

१ मनोते M Bo 11 T; मनोता Be BU.

२ Thus M; देवता Be BU, T Bo 11 om. this passage.

३ °मर्शनौ M; °मर्शने T Bo 11, °मर्शौ B, °मर्शना Be.

४ Thus M, चर्मपत्न्या उपानहौ T Bo 11, चार्पेत्या उपानहौ BU; चार्पेत्या उ° Be, cp. infra XVIII 19 init.

५ Thus T Bo 11, चार्मपत्निभ्या° M, चर्मपत्नीभ्या° B, चर्मपत्निभ्या° Be U.

६ Thus M, प्रावरेत्य Be BU, Bo 11 T defective.

७ °तुर्विंशत्यय° U Bhav

हिरण्यं ददाति । ग्राम्यान्याम उदवसाय वसति । सारस्वतं चरुं । वत्सतरीं ददाति । द्वितीये ग्राम्यान्याम उदवसाय वसति । सावित्रं द्वादशकपालमुपध्वस्तं ददाति । तृतीये ग्राम्यान्याम उदवसाय वसति । पौष्णं चरुꣳ । श्यामं ददाति । चतुर्थे ग्राम्यान्याम उदवसाय वसति । बार्हस्पत्यं चरुꣳ । शितिपृष्ठं ददाति । पञ्चमे ग्राम्यान्याम उदवसाय वसत्यैन्द्रमेकादशकपालमृषभं ददाति । षष्ठे ग्राम्यान्याम उदवसाय वसति । वारुणं दशकपालं । महानिरष्टं ददात्यथ सप्तमे ऽहन्यशालामध्यवस्यत्येतद्वा अहर्दीक्षते[1] । अथ वै भवति मघो दीक्षयन्ति मद्यः सोमं क्रीणन्ति पुण्डरिस्रजां प्रयच्छन्तीत्यथैनं सौर्याद्दानीय पवयित्वा पुण्डरिस्रजमुद्दानीय दीक्षणीयामिष्टिं निर्वपति । तस्मात्सङ्ग्रिभितायां मुष्टी चैव न करोति वाचं च न यच्छति । निदधत्यथैता एतद्धविरुच्छिष्टं व्रतभाजनमथ प्रायणीयामिष्टिं निर्वपति । हविष्कृता वाचं विसृजते । ऽथास्मा एतद्धविरुच्छिष्टं प्रयच्छन्ति[2] व्रतभाजनमथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा दशभिः वार्ष्णेयैस्तरै राजानं क्रीत्वोद्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्य पुरस्तादुपसदाꣳ सौम्यं चरुं । बभ्रुं ददात्यथ मध्यमे उपसदामन्तरेण त्वाष्ट्रमष्टाकपालꣳ । शुण्ठं ददात्यथोपरिष्टादुपसदां वैष्णवं त्रिकपालं । वामनं ददात्य-

१ दीक्षते Bo BU, दीक्षते M, दीक्ष्यते T Bo II.
२ ॰यच्छन्ति M Bo II T, ॰यच्छति Bo BU

आहवनीयं प्रणयत्याहवनीयं प्रणीय सदोहविर्धाने संमिनोति। सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्यावृता यूपमुच्छ्रयति। स्वरुन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति। तस्य प्रसिद्धं वपया चरित्वा सारस्वतीर्वस-तीवरीर्गृह्णात्यथ पशुपुरोडाशं निर्वपतीडान्तः पशुपुरोडाशः संतिष्ठते। पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येके। ऽथ वसतीवरीः परिहृत्य यथाऽग्नि विभिद्योपवसथ्यंयातो महाराज एव बुध्यन्ते। प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रात-रनुवाकमुपाकरोति। परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यग्नि-हदैति[1]। ॥ १७ ॥

अग्निष्टोमं क्रतुमुपैति। प्रसिद्धो ऽभिषवः। प्रसिद्धं ग्रहा गृह्यन्ते। समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं[2] गृहीत्वा द्वे रशने आदाय यूपमभ्यैति[3]। स्वरुक्तं यूपमुत्सृज्याग्नेयं पशुमुपा-करोति। तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति। तयोः प्रसिद्धं वपाभ्यां चरित्वा प्रसर्पन्ति प्रातःसवनाय। पूर्वस्यां द्वारि[4] सूतग्रामण्यावुपतिष्ठतो[5] ऽपरस्यां क्षत्तसंग्रहीतारौ। प्रसर्पतः पृच्छतः का ते माता का ते[6] मातामहीति। स य

१ ॰दैति MT Be 11, ॰हैति Be BU.
२ om. MT Be 11
३ ॰भ्यैति M Be BU, ॰भ्येति T Be 11.
४ दिषि M
५ ॰मुपतिष्ठतो B Be U, ॰मुपविशतो M, ॰मुपविश T Be 11.
६ om. Be BU

आ दशम्यै[1] संपादयत्यति तꣳ सृजन्त्यथ यो संपादयति दीर्घवꣳशेन तमुपानुदन्ति[2] । स य आह वैश्या मे माता सावित्रीति[3] यान्ति तꣳ सृजन्ति विप्रो विवाहान् गोप्तार इति वदन्तो । दशदशाथ सप्तसप्तमभिसंशामन । अनुधा प्रातःसवनꣳ संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रविद्धो ऽभिषवः । प्रविद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि हुत्वा प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मꣳ होत्रे ऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरि यवाचितमच्छावाकायानड्वाहमग्नीधे । भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसाममनुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रविद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा द्वे धामपशुभ्यां चरति । तयोर्नाना मनोते[4] नाना देवते[5] नाना प्रत्यभिमर्शनौ[6] नाना वपाहोमौ समानो वनस्पतिः समानः स्विष्टकृत्समानीडा समान्यो दिशो । नाना

१ Thus Be BU, दशमध्ये M, T Be 11 om. this passage altogether.

२ Thus M Be U, तमुपानदन्ति B; तवमुदन्ति T Be 11.

३ Thus MT, सावित्रीनि Be 11; सावित्रीमि Be BU.

४ मनोते MT Be 11; मनोता Be BU

५ देवते M, देवता Be BU, om. T Be 11.

६ Thus T Be 11, °भिमर्शौ M, °भिमर्शना Be BU.

दिश इत्येके । समानं कर्मावभृथात्समिष्टो ऽवभृथ । उदयनीययेष्ट्वेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते श्मश्रूण्येव वपते न केशान्संतिष्ठत एषो ऽग्निष्टोमः सप्तदशो दशपेयः षट्शतदक्षिण उदवसानीयान्तः । ॥ १८ ॥ षष्ठः ॥

अथ पञ्चहविषा दिशामवेष्ट्या यजते[1] । आग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालं वैश्वदेवं चरुं मैत्रावरुणीमामिक्षां बार्हस्पत्यं चरुमित्यथ वै भवति । हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति । स हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयत्यन्वाहार्यमासादयिता[2] आदिष्टदक्षिणा ददात्यथ द्विपशुना पशुबन्धेन यजत । आदित्यां मल्हां गर्भिणीमालभते मारुतीं पृश्निं पष्ठौहीं । गर्भिण्यादित्या भवत्यगर्भा[3] मारुत्यादित्यया पूर्वया प्रचरति मारुत्योत्तरया वैरादित्याया आश्रावयत्युपांशु मारुत्यै । संतिष्ठते यथा द्विपशुः पशुबन्धस्तयाथ सात्यदूतानाꣳ[4] हविर्भिर्यजते । ऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमन्वाहार्यमासाद्य तिसृधन्वꣳ शुष्कदृतिं ददाति । तं प्रतिराजभ्यः प्रहिणोति । स

१ पञ्चान Be BU.

२ Thus M only; °मासादयता Be BU, °मासादेता T Be 11.

३ Thus M only; भवतिगर्भा Be BU, T Be 11 om. these words.

४ Thus M, the other MSS are partly corrupted, partly incomplete

यः प्रतिगृह्णाति मित्रो स इति तं वेदाय यो न प्रतिगृह्णात्यमित्रो स इति तं वेदाय पूर्वैः प्रयुजां हविर्भिर्यजत । आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालमन्वाहार्यमाहृत्य दक्षिणां रथवाहनवाहं[1] ददात्यथ पौर्णमास्यामुत्तरैः प्रयुजां हविर्भिर्यजते । सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुमन्वाहार्यमाहृत्योत्तरां रथवाहनवाहं[2] ददाति । ॥ १९ ॥

अथैतद्द्वादशाहं व्रतं चरत्याह्ने[3] । न दतो धावते । ऽभ्यङ्क्ते । न प्रमन्दयते । युध्यते युद्ध आगते । ऽग्निहोत्रोच्छेषणव्रतो वा[4] यजमानो भवति । अथास्मु[5] पत्न्या आहरन्त्यथा-थैतत्पुरस्तादेव गुप्ते देवयजने तिस्रः शालाः कारिता भवन्ति । स दक्षिणार्ध्यां[6] शालामध्यवसाय मथित्वाग्नीन्-

---

1 Thus Be BU; रथवाहनं MT Be 11, but cp. Āp. XVIII 22. 6, 8.

2 Thus again, Be BU; रथवाहं M; T Be 11 om.

3 These and the following words thus in M, चरत्याह्ने नद्वेधा-वनेऽभ्यङ्क्ते नप्रमन्दयते Be BU; चरमित्यत्र नैनद्लीधावतेऽभ्यङ्क्ते नप्रमन्दयते Be 11 T; Bhav reads प्रमन्दयते explaining this word, as it seems, by न चक्षुर्षा स्नेते न केनाप्लिप्यते ।

4 वा Be 11 T, च Be BU; M om.

5 M om. स, but cp. vol. I 67. 4.

6 दक्षिणा T Be 11.

हृत्य प्रतीचीनस्तोमाय केशवपनीयायातिरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यां मे यजनीये[1] ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथ[2] वसतीवरीः परिहृत्य यथासुप्ति विरात्र्योपवसथ्यं-यातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यग्निष्टुदित्यतिरात्रं[3] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मावभृथात्प्रसिद्धो ऽवभृथ । उदयनीयायेष्ट्वा मैत्रावरुण्यौ वशामुपाकरोति । तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते यानि कानि च लोमानि[4] वापयते । संतिष्ठत एष प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रः सहस्रदक्षिण उदवसानीयान्तो । ऽथ मध्यमाद् ग्रामामध्यवसाय मथित्वाग्नीन्विहृत्य व्युष्टये द्विरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते द्विरात्रस्य मे[5] मतो[5] ऽमावास्याया[5] उपवसथीये[5]

[1] Thus U Be (sec. m.), यजनीये Be (pr m.) B; यजिये M; Bo 11 T om the passage.

[2] •थोपवस• M Be.

[3] Thus M Be 11 T; •ग्निष्टुदेत्यतिरात्रं Be BU.

[4] मानि ins M.

[5] Thus T Be 11 (only •वास्याये), मे before मतो om. M, but this MS : मावास्याये म उप•, Be BU give मे before मतो and मा before उप•, reading •वास्याये।

ऽहःपूर्वमहः संपश्यत उत्तरमुत्तरमिति । संतिष्ठते युष्टिदिरायो[1] । ऽथोत्तरार्थाद्[2] ग्राम्नामध्यवसाय मथित्वाग्नीम्निष्ट्योदयनीयायाग्निष्टोमाय दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः । संतिष्ठत एष उदयनीयो ऽग्निष्टोमस्तुष्टोमः सहस्रदक्षिण उदवसानीयान्तो[3] । ऽथ दैविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते राजसूयो ऽर्धमासद्रोमासैः । संतिष्ठते राजसूयः संतिष्ठते राजसूयः । ॥ २० ॥ सप्तमः ॥

॥ इति द्वादशः प्रश्नः ॥

---

१ Thus all, are we to correct युधिष्ठिरायो ?, cp. 117, 14.

२ Thus BeBUM (sec. m.); थोत्तराद्‌ M (pr. m.) T Bo 11 Karmāntasūtra.

३ उदयनीयान्तो Bo 11 T

तानि जानीयाद्यादेशादेव दक्षिणाव्यपेतम्[1] समानबर्हिर्भवति यथा दिशामवेष्टिर्न होतृपाशुयाजो[2] ऽनुसमेति । यद्देवत्यꣳ हविस्तद्देवत्ये याज्यापुरोऽनुवाक्ये । पुरस्तात्स्विष्टकृत उपहोमा याथासुख्या उपहोमा । यथोद्दक्षिणाः काम्या इष्टयो या अनादिष्टदक्षिणा । गोदक्षिणः पशुबन्धो । नित्यो ऽन्वाहार्य । इति[3] म्ना[3] इमा[3] इष्टयो[3] व्याख्याताः । ॥ १ ॥ प्रथमः ॥

अथ वै भवत्यैन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इति । तस्या एते भवत उभा वामिन्द्राग्नी आहुवध्या इत्यैन्द्राग्नमेकादशकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वेति । तस्या एते भवत इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नमेकादशकपालं निर्वपेत्संग्राममुपप्रयास्यन्निति । तस्या एते भवत इन्द्राग्नी नवतिं पुरः शुचिं नु स्तोममित्यैन्द्राग्नमेकादशकपालं निर्वपेत्संग्रामं जित्वेति । तस्या एते भवत उभा वामिन्द्राग्नी आहुवध्या इत्यैन्द्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन्निति । तस्या एते भवत इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमिति । पौष्णं चरुमनुनिर्वपेदिति । तस्या एते भवतो वयमु त्वा पथस्पते पथश्च इति । क्षेत्रपत्यं चरुं निर्वपेज्जनतामागत्येति । तस्या एते भवतः क्षेत्रस्य पतिना वयं क्षेत्रस्य पत इत्यैन्द्राग्न-

---

१ •व्यपेतेन M

२ दिशामवेष्टिर्नै• M.

३ इतीन्विमा इष्टीर्व्याख्याता M, all the other MSS. have also इतिर् इष्टीर्।

मेकादशकपालमुपरिष्टान्निर्वपेदिति । तस्या एते भवतो ये संग्रामं जिग्युषः ॥ २ ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदित्येतयेष्ट्वा यक्ष्यमाण उपकल्पयते पथो ऽन्तिकाद्बर्हिरनड्वाहं । तस्या एते भवतो ऽग्ने नय देवानामित्यन्वाहार्यमासाद्यानड्वाहं ददात्यग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्व्रात्यमिव चरेदिति । तस्या एते भवतस्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीत्यग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्नित्ययं वै भवति निम्रितायां निर्वपेत्परिश्रिते याजयेदिति । स निम्रायां महारात्र उत्थायाग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपति । परिश्रिते याजयति । कृणुष्व पाजः प्रसितिं न पृथ्वीमित्येतस्यानुवाकस्य पञ्चदश सामिधेनीः पराचीरन्वाह । तस्या एते भवतो रक्षोहणं वि ज्योतिषेत्यय पुरस्तात्स्विष्टकृतः स्रुवाहुतिमुपजुहोत्युत स्वानासो दिवि षन्त्वग्नेरिति ॥ ३ ॥

अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति । तस्या एते भवतस्त्वमग्ने रुद्र आ वो राजानमित्यग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति । तस्या एते भवतो ऽग्निर्होता साध्वीमकरित्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्सङ्ग्रामे संयत्त इति । तस्या एते भवतो ऽक्रन्ददग्निस्त्वे वसूनीत्ययं वै

भवत्यभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते । पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदिति । तस्या एते भवतो । ऽथ वै भवत्यभि वा एष एतस्य गृहानुच्यति यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदिति । तस्या एते भवतः । ॥ ४ ॥

द्वितीयः ॥

अथ वै भवत्यग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति । तस्या एते भवतस्तुभ्यं ता अङ्गिरस्तमाश्याम तं काममग्न इत्यग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वेति । तस्या एते भवतः श्रेष्ठं यविष्ठ भारत स क्षितान इत्यग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाण इति । तस्या एते भवतो । ऽग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियामिति । तस्या एते भवत आयुष्ट आयुर्दा अग्न इत्यग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकाम इति । तस्या एते भवतस्तस्मै ते दिवस्परीत्यग्नये रुक्मते पुरोडाशमष्टाकपालं निर्वपेद्रुक्काम इति । तस्या एते भवतः शुचिः पावक दृशानो रुच्य इत्यग्नये तेजस्वते पुरोडाशमष्टाकपालं निर्वपेत्तेजस्काम इति । तस्या एते भवत आ यदिषे नृपतिं स तेजीयसेत्यग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत्सीक्षमाण इति । तस्या एते भवतो ऽग्ने सहन्तमाभर तमग्ने शतनाषहं रयिमिति । ॥ ५ ॥

अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नवान्स्यामिति । तस्या एते भवत उचान्नाय वशान्नाय वद्मा हि सूनो इत्यग्नयेऽन्नादाय पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामिति । तस्या एते भवतो । अग्नयेऽन्नपतये पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नपतिः स्यामिति । तस्या एते भवतो । अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावीत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं । तस्या एता भवन्त्यग्न आयूंषि पवस अग्ने पवस्वाग्ने पावक स नः पावकाग्निः शुचिव्रततम उदग्ने शुचयस्तवेत्यन्वाहार्यमासाद्य हिरण्यं ददात्येतामेव निर्वपेत्त्वुष्काम इति । तस्या एता भवन्ति । ॥ ६ ॥

अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकाम इति । तस्या एता भवन्ति यस्त्वा हृदा कीरिणा मन्यमानो यस्मै त्वं सुकृते जातवेदस्त्वे सुपुत्र प्रथम उक्थउक्थे सोम इन्द्रं ममादेत्यग्नये रसवत अजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्स्यामिति । तस्या एते भवतो अग्ने रसेनापो अन्वचारिषमित्यग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान्स्यामिति । तस्या एते भवतो वसुर्वसुपतिस्त्वामग्ने वसुपतिं वसूनामित्यग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत्संग्रामे संयत्त इति । तस्या एते भवतस्त्वामग्ने वाजसातममयं नो अग्निरित्यग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुरिति । तस्या

एते भवतो ऽग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निनेत्युभये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो ऽहुते ऽग्निहोत्र उद्वायेदपर आदीप्यानूद्धृत्य इत्याहुस्तत्तथा न कार्यं यद्भागधेयमभि पूर्व उद्ध्रियते किमपरो ऽभ्युद्ध्रियेतेति तान्येवावक्षाणानि संनिधाय मन्थेदिति स तान्येवावक्षाणानि संनिधाय मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति छन्दोभिरेवैनं स्वाद्योनेः प्रजनयतीति ब्राह्मणसंप्रैषे ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेदिति तस्या एते भवत उदग्ने शुचयस्तव वि ज्योतिषेति ॥ ७ ॥

तृतीयः ॥

अथ वै भवति वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे चरुमभिशस्यमान इत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं तस्या एता भवन्ति वैश्वानरो न ऊत्या त्वमग्ने शोचिषा शोशुचानो ऽव ते हेड उदुत्तमं दधिक्राव्णो अकारिषमा दधिक्रा इत्यन्वाहार्यमासाद्य हिरण्यं दद्यादेनामेव निर्वपेत्प्रजाकाम इति तस्या एते भवन्ति वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति तस्या एते भवतो वैश्वानरस्य दंसनाभ्यो बृहज्जातो यदग्न इति वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वातिपाद्येति तस्या एते भवतो वैश्वानरो न ऊत्या पृष्टो दिवीत्याग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्निति

तस्या एता भवन्त्यग्निर्मूर्धा भुवो वैश्वानरो न ऊत्या त्वमग्ने शोचिषा शोशुचान इति । वैश्वानरं द्वादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकाम इत्यथ वै भवत्याहवनीये वैश्वानरमधिश्रयति गार्हपत्ये मारुतमनूच्यमान आसादयतीति । काले प्रत्यक्षं वैश्वानरमासादयत्यनूच्यमानासु सामिधेनीषु मारुतं । तस्य एता भवन्ति वैश्वानरो न ऊत्या पृष्टो दिवि मरुतो यद्ध वो दिवो या वः शर्मेति । ॥ ८ ॥

आदित्यं चरुं निर्वपेत्संग्राममुपप्रयास्यन्निति । तस्या एते भवतो ऽदितिर्न उरुष्यतु महीमू षु मातरमिति । वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति । तस्या एते भवतो वैश्वानरो न ऊत्यास्माकमग्ने मघवत्सु धारयेति । वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वेति । तस्या एते भवतो वैश्वानरो न ऊत्यर्तावानमिति । वैश्वानरं द्वादशकपालं निर्वपेत्सममानयोः पूर्वो ऽभिद्रुह्येति । तस्या एते एव भवतो । वैश्वानरं द्वादशकपालं निर्वपेद्विषं प्रतिग्रह्येति । तस्या एते भवतो वैश्वानरो न ऊत्या त्वमग्ने शोचिषा शोशुचान इति । वैश्वानरं द्वादशकपालं निर्वपेदुभयादत्प्रतिगृह्याश्वं वा पुरुषं वेति । तस्या एते एव भवतो । वैश्वानरं द्वादशकपालं निर्वपेदग्निमेष्यन्निति । तस्या एते भवतो वैश्वानरो न ऊत्या वैश्वानरस्य सुमतौ स्यामेति । ॥ ९ ॥

अथ वै भवति यो वै संवत्सरं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेदिति ।

स एतमेव वैश्वानरं पुनरागत्य निर्वपति। यमेव प्रयुङ्क्ते तं भागधेन विमुञ्चति प्रतिष्ठित्या इति ब्राह्मणमेव वै भवति यथा रज्ज्वोत्तमां गामाजेत्तां भ्रातृव्याय प्रहिणुयादिति। स यथा रज्ज्वोत्तमां गामाजति तां भ्रातृव्याय प्रहित्य भ्रातृव्यस्य गोष्ठे न्यस्यति। निर्ऋतिमेवास्मै प्रहिणोतीति ब्राह्मणं। तस्या एते भवतः। ॥ १० ॥ चतुर्थः ॥

अथ वै भवत्यैन्द्रं चरुं निर्वपेत्पशुकाम इति। तस्या एते भवत इन्द्रं वो विश्वतस्परीन्द्रं नर इतीन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत्पशुकाम इति। तस्या एते भवत इन्द्रियाणि शतक्रतो ऽनु ते दायीतीन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकाम इति। तस्या एते भवत आ यस्मिन्त्सप्त वासवा आमासु पक्वमैरय इती-न्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकाम इति। तस्या एते भवत इन्द्रमिद्गाथिनो बृहद्गायन्ति त्वा गायत्रिण इतीन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रि-यावत इन्द्रायार्कवते भूतिकाम इति। तस्य एता भवन्त्या यस्मिन्त्सप्त वासवा आमासु पक्वमैरय इन्द्रियाणि शतक्रतो ऽनु ते दायीन्द्रमिद्गाथिनो बृहद्गायन्ति त्वा गायत्रिण इति। ॥ ११ ॥

इन्द्रायांहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यादिति। तस्या एते भवतो ऽंहोमुचे विवेष यन्मेतीन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्व-

पेदं मृधो ऽभि प्रवेपेरन्नाष्ट्राणि वाभि समियुरिति । तस्या एते भवतो वि न इन्द्र मृधो जहि मृगो न भीम इतीन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेति । तस्या एते भवतस्त्रातारमिन्द्रं मा ते अस्याꣳ सहसावन्नितीन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेदिति । तस्या एते भवतो ऽवस्ते रथं शुष्णो यस्त इति । ॥ १२ ॥

इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकाम इति । तस्या एते भवतो ऽन्वह मासा अनु ते दायीतीन्द्राण्यै चरुं निर्वपेद्यस्य सेनासꣳशितेव स्यादित्येष वै भवति बध्वजानपीभे संनह्येत्तान्स्वेभेमाध्यादध्यादिति । तान्स्वेवेभेनाध्यादधाति । तस्या एते भवत इन्द्राणीमासु नारिषु नाहमिन्द्राणि रारणेतीन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत्संग्रामे संयत्त इति । तस्या एते भवतो यो जात एवा ते मह इन्द्रो ऽयुध इत्येतामेव निर्वपेद्यो हतमना इव स्यादिति । तस्या एते भवत । एतामेव निर्वपेद्यः स्वयंपाप इव स्यादिति । तस्या एते एव भवतः । ॥ १३ ॥

इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरिति । तस्या एते भवतो मा नो मर्धीरा तू भरेतीन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेतेति । तस्या एते भवतः प्रदातारꣳ हवामहे प्रदाता वज्रीतीन्द्राय सुत्राम्णे पुरोडाश-

सैकादशकपालं निर्वपेदपरुद्धो वापरुध्यमानो वेति । तस्या एते भवत इन्द्रः सुत्रामा तस्य वयं सुमतौ यज्ञियस्येति । यो ऽस्मत् श्रिये स्पर्द्धेत समानैः स्यात्तस्मा एतमैन्द्रमेकादशकपालं निर्वपेदित्यथ वै भवति रेवती पुरोऽनुवाक्या भवति ग्राम्या अपदाहाय शक्वरी याज्येति । तस्या एते भवतो रेवतीर्नः प्रो ष्वस्मै पुरोरथमिति । ॥ १४ ॥ पञ्चमः ॥

अथ वै भवत्याग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरित्यथ वै भवति प्रति वै परस्तादभिचरन्तमभिचरन्ति । द्वे द्वे पुरोऽनुवाक्ये कुर्यादतिप्रयुक्त्या इति । स द्विर्द्विः पुरोऽनुवाक्यामन्वाह । त्रिस्त्रिर्हविषामवद्यति । तस्या एता भवन्त्यग्नाविष्णू अग्नाविष्णू प्र णो देव्या नो दिवो बृहस्पत एवा पित्र इत्येतयैव यजेताभिचर्यमाण इति । तस्या एता एव भवन्त्याग्नावैष्णवमेकादशकपालं निर्वपेद्यं यज्ञो नोपनमेदिति । तस्या एते भवतोऽग्नाविष्णू अग्नाविष्णू इत्याग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्काम इति । तस्या एते एव भवतः । ॥ १५ ॥

अथ वै भवतीन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानो ऽयजमानस्याध्वरकल्पां प्रतिनिर्वपेद्भ्रातृव्ये यजमाने । नास्येन्द्रियं वीर्यं वृङ्क्ते । पुरा वाचः प्रवदितोर्निर्वपेदिति । स पुरा वाचः प्रवदितोर्महारात्र उत्थायाग्नावैष्णवमष्टाकपालं निर्वपेत्प्रातःसवनस्याकाले । सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति । तस्या एता भवन्त्यग्नाविष्णू अग्नाविष्णू प्र णो देव्या नो दिवो बृह-

एत एवा पिब इत्याग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यंदिनस्य सवनस्याकाले । सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति । तस्या एता एव भवन्त्याग्नावैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्याकाले । सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति । तस्या एता एव भवन्ति । मैत्रावरुणमेककपालं निर्वपेद्वशायै काल इति । तस्या एते भवत आ नो मित्रावरुणा प्र बाहवेति । ॥ १६ ॥

यो ब्रह्मवर्चसकामः स्यात्तस्मा एतꣳ सोमारौद्रं चरुं तिष्यापूर्णमासे निर्वपेदिति । स यो[1] ब्रह्मवर्चसकामः स्यात्स तैष्यां पौर्णमास्याꣳ सोमारौद्रं चरुं निर्वपति । परिश्रिते याजयत्यथ[2] वै भवति श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणमाज्येन मार्जयन्ते । यावदेव ब्रह्मवर्चसं तत्सर्वं करोत्यति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति । मानवी ऋचौ धाय्ये कुर्यादिति । मनु देववतो रथ इत्येताषां द्वे धाय्यालोके[3] दधाति । तस्या एते भवतः सोमारुद्रा विवृहतं विषूचीꣳ सोमारुद्रा युवमेतानीति । ॥ १७ ॥

यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति । तस्या एते भवतः सोमपूषणेमौ देवाविति । सोमारौद्रं चरुं निर्वपेत्प्रजाकाम इति । तस्या एते भवतः सोमारुद्रा विवृहतं विषूचीꣳ सोमारुद्रा युवमेतानीति ।

---

1 Thus M Be 8, यदि UD Be, B defect

2 Thus M Be 8 UD, यजत्यथ Be B.

3 Thus MU Be, धाय्ये Be 8 B धाय्ये लोके D

सोमारौद्रं चरुं निर्वपेदभिचरन्निति । तस्या एते एव भवतः । सोमारौद्रं चरुं निर्वपेज्ज्योगामयावीत्यैतयेष्ट्या यक्ष्यमाण उपकल्पयते श्वेतानड्वाहं[१] । तस्या एते एव भवतो ऽन्वाहार्यमासाद्य श्वेतमनड्वाहं ददाति । सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वे ऽस्मा आयतने भ्रातृव्यं जनयेयमिति । सो ऽपरस्येव मर्यादायामध्यवसाय मथित्वाग्नीन्विहृत्य सोमारौद्रं चरुं निर्वपत्येष वै भवति वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिषः स्तृणीयादर्धं नार्धमिध्मस्याभ्यादध्यादर्धं न । स एवास्मा आयतने भ्रातृव्यं जनयतीति ब्राह्मणं । तस्या एते भवतः ॥ १८ ॥ षष्ठः ॥

अथ वै भवत्यैन्द्रमेकादशकपालं निर्वपेन्मारुतं सप्तकपालं ग्रामकाम इत्येष वै भवत्याहवनीय ऐन्द्रमधिश्रयति गार्हपत्ये मारुतमनूच्यमान आसादयतीति । काले प्रत्यक्षमैन्द्रमासादयत्यनूच्यमानासु सामिधेनीषु मारुतं । तस्या एता भवन्तीन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्ध वो दिवो या वः शर्मन्नेतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावदानमूयादिन्द्रायानुब्रूहीतीन्द्रं वो विश्वतस्परीत्यन्वाहाश्राव्याश्राव्याह मरुतो यजेति । या वः शर्मेति यजति । मारुतस्यावदानमूयान्मरुद्भ्यो ऽनुब्रूहीति । मरुतो यद्ध वो दिव इत्यन्वाहाश्राव्याश्राव्याहैन्द्रं यजेतीन्द्रं नर इति यजति । स एवैभ्यो भागधेये समदं दधाति वितृह्याणास्तिष्ठन्तीति ब्राह्मण-

---

१ Thus MDD, श्वेतारमनड्वाहं Be U, Be 8 om., perhaps rightly, श्वेतं।

मैतामेव निर्वपेद्यः कामयेत कल्पेरन्निति । यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान्यथायथं कल्पयति । कल्पन्त एवेति ब्राह्मणं । तस्या एता भवन्ति याः पूर्वस्याः । ॥ १९ ॥

ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इत्येतयेष्ट्या यक्ष्यमाण उपकल्पयत उपाध्याय्यपूर्वयं वासो ऽथ वै भवत्यैन्द्रस्यावदाय वैश्वदेवस्यावद्येदैन्द्रस्योपरिष्टादिति । स ऐन्द्रस्यावदाय द्विर्वैश्वदेवस्यावद्यत्यैन्द्रस्योपरिष्टाद्द्विरेवैनमाप्त्वा उभयतः सजातान्परिगृह्णातीति ब्राह्मणं । तस्या एते भवतो भरेष्विन्द्रं ममत्तु न इत्यन्वाहार्यमासाद्योपाध्याय्यपूर्वयं वासो ददाति । पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकाम इत्यथ वै भवति प्रियवती याज्यानुवाक्ये भवत इति । तस्या एते भवतः प्रिया वो नाम हुवे तुराणाꣳ श्रियसे कं भानुभिरिति । यः समानैर्मिथो विप्रियः स्यात्तमेतया संज्ञान्या याजयेदिति । स[१] यैः[१] संजिज्ञासीत[१] तेषूपसमेतेष्वग्नये[१] वसुमते पुरोडाशमष्टाकपालं निर्वपति सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायादित्यवते चरुमिति । तस्या एते भवतो ऽग्निः प्रथमो वसुभिर्नो अव्यात्सं नो देवो वसुभिरिति । ॥ २० ॥

आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति । तस्या एते

---

१ Thus M only; all the other MSS. are badly corrupted तस्यैवसजिज्ञासीनतेषुसमतेभ्य॰ U, तस्यैवसजिज्ञासीतेषुसमयैभ्य॰ B, तस्यैवसंज्ञाभिन तेषूपसमेतेभ्य॰ Be 8, तस्यैव संजज्ञासीनतेषुपसतेभ्य॰ Be, तस्यैव संज्ञातेषुप्रसतेभ्य॰ D

निरुप्योपरमत्यथावगच्छते मरुद्भ्याद्यति । तस्या एते भवतो यज्ञो देवानामादित्यानामवसा नूतनेनेत्यादित्या एवैनं भागधेयं प्रेप्सन्तो विशमवगमयन्तीति ब्राह्मणमथ वै भवति यदि नावगच्छेदाश्वत्थान्मयूखान्सप्त मध्यमेषायामुपहन्यादिति । प्राग्रीषमन्तो[1] ऽवस्थापयित्वाश्वत्थान्मयूखान्सप्त[1] मध्यमेषायामुपहन्ति[1] । मध्यममुपहत्य[2] वीरम्मतीयस्तीर्णमाथ आयातयतीदमहमादित्याभ्यश्चाभ्यासुमादसुप्यै विशो ऽवगन्तोरित्यादित्या एवैनं बहुवीरा विशमवगमयन्तीति ब्राह्मणमथ वै भवति यदि नावगच्छेदेतमेवादित्यं चरुं निर्वपेदिध्मे ऽपि मयूखान्संनह्येत्तान्सहैवैनाभ्याद्ध्यादिति । तान्सहैवैनाभ्यादधात्येनमध्यमेवावगच्छतीति ब्राह्मणमथ वै भवत्याश्वत्था भवन्ति । मरुतां वा एतदोजो यदश्वत्थ । ओजसैव विशमवगच्छति । सप्त भवन्ति । सप्तगणा वै मरुतो । गणश एव विशमवगच्छतीति ब्राह्मणं । तस्या एते एव भवतः । ॥ २२ ॥ सप्तमः ॥

अथ वै भवति यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्यां शतकृष्णलां निर्वपेदित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते शतं सुवर्णानि कृष्णलानि नवं पात्रं प्रभूतमाज्यमित्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा प्रजापतये जुष्टं निर्वपामीति चतुरो मुष्टीन्कृष्णलानां[3] निर्वपति । हविष्कृता वाच विसृज्य

---

१ This passage is found in M only

२ Thus Be 8, मध्यत उपहत्य Be BD, मध्यम उप॰ M, मध्य उप॰ U, मध्यमुपहत्य Bbav

३ Thus M, कृष्णलान् or कृष्णलां the other MSS

गार्हपत्ये नवं पात्रमधिश्रित्य तिरःपवित्रमाज्यमानीय तिरःपवित्रं कृष्णलान्यावपत्यथाज्यं निर्वपत्यथाज्यमधिश्रित्योभयं[1] पर्यग्नि कृत्वान्तर्वेद्यासादयत्यथ वै भवति चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै द्व्यंशौ देवताया अवद्यति चत्वारि स्विष्टकृते उपाविडायै[2] चत्वार्येवान्तरेडाया एकं प्राशित्रायैकं यजमानायाज्यस्येव जुह्वतो जुहोत्याज्यं प्राश्नन्तः[3] प्राश्नन्त्येवैनान्येकधोद्धृत्य[3] ब्रह्मण उपहरति । तस्या एते भवन्ती हिरण्यगर्भः प्रजापत इति । ॥ २३ ॥

यो ब्रह्मवर्चसकामः स्यात्तस्मा एतꣳ सौर्यं चरुं निर्वपेदित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते पञ्च सुवर्णानि कृष्णलानि सुवर्णरजतौ च रुक्मावथैतं चरुꣳ श्रपयित्वाभिघार्योद्वास्य सुवर्णरजताभ्याꣳ रुक्माभ्यां परिगृह्यान्तर्वेद्यासादयति । समानं कर्मा प्रयाजेभ्यो । ऽथ वै भवति प्रयाजेप्रयाजे कृष्णलं जुहोतीति । स प्रयाजेप्रयाज एव कृष्णलमन्ववधाय जुहोति । तस्या एते भवन्त्युदु त्यं चित्रमित्यन्वाहार्यमासाद्य सुवर्णरजतौ रुक्मौ ददात्याग्नेयमष्टाकपालं निर्वपेत्सावित्रं द्वादशकपालं भूम्यै चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोपनमेदित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं । तस्या एता

---

१ ॰मधिश्रित्युभयं M

२ चत्वारि is found in M only.

३ Thus M, प्राश्नन्त्येव प्राशन॰ D; the other MSS (i. e. प्राश्नन्ति) प्राश्नाते Be, प्राश्नीते U, प्राश्नते B, प्राश्नन्ति Be 8.— उद्धृत्य M Be 8, उपहृत्य the other MSS, but cp. supra XII 16 (p 68, 18).

भवन्ति य मनवचि काम्या हिरण्यपाणिभूतये वाममद्य सवितर्वेत्तित्या पर्वतानाᳫ्ँ सोमासस्त्वा विधारिणीत्यन्वाहार्यमासाद्य हिरण्यं दद्यादेतामेव निर्वपेद्धिरण्यं विन्देति तस्या एता एव भवन्त्येतामेव निर्वपेद्यस्य हिरण्यं नश्येदिति तस्या एता एव भवन्ति ॥ २४ ॥

यः सोमवामी स्यात्तस्मा एतᳫ्ँ सोमेन्द्रᳫ्ँ श्यामाकं चरुं निर्वपेदिति [1]तस्या एते भवत उदूदरेणापान्तमनुरिति सोमवामी वा अन्यो भवत्यन्यः सोमातिपवितो भवति यः सोमातिपवितः स्यात्तस्मा एतᳫ्ँ सोमेन्द्रᳫ्ँ श्यामाकं चरुं निर्वपेदिति[1] तस्या एते भवतः प्र स्वानः सधाधस्त इत्यग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकाम इत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते दधि मधु घृतमापो यवानित्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वाग्नये दात्रे जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपत्येतामेव प्रतिपदं कृत्वेन्द्राय प्रदात्रे जुष्टं निर्वपामीति चतुर एव व्रीहीणामेतामेव प्रतिपदं कृत्वा प्रजापतये जुष्टं निर्वपामीति चतुरो यवानां तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोप्यन्ते यवान्हविष्कृता वाचं विसृजते समानं

---

१ The passage marked between १ ... १ is not found in M Bo BU. In the words as handed down by Bo 8, I inserted अन्यो (l. 8, first time) and स्यात् (l. 9) and changed अन्यं (l. 8, second time) into अन्यः । D सोमवामी सोमो भवत्यन्यं विदुः सोमातिपवितः (sic)

कर्माधिवपनादुद्धृत्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपदधात्येकादशोत्तरतो । ऽथैतान्यवानुलूखले परिहृत्य गार्हपत्य एककपालमधिश्रित्य धाना भर्जन्ति[1] । यदैते[2] हविषी अधिश्रयन्ति तदैता धानास्तुष्टयेनोपसृजति[3] दध्ना मधुना[4] घृतेनाद्भिरिति । तस्या एता भवन्त्यग्ने दा दाशुषे रयिं दा नो अग्ने मतिभिः सदातारꣳ हवामहे सदाता वज्री हस्तं न पूतक्रतुभे सुचन्द्र सर्पिष इति । ॥ २५ ॥

यो यज्ञविभ्रष्टः स्यात्तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुमित्यथ वै भवत्याग्नेयस्य च सौम्यस्य चैन्द्रे समाश्रेषयेदिति । स आग्नेयस्य च सौम्यस्य चैन्द्रे समाश्रेषयति । तेजश्चैवास्मिन्ब्रह्मवर्चसं[5] च[5] समीची[5] दधातीति ब्राह्मणं । तस्या एता भवन्ति स प्रत्नवन्नि काव्येन्द्रं वो विश्वतस्परीन्द्रं नरस्तं नः सोम या ते धामानीत्यग्नीषोमीयमेकादशकपालं निर्वपेद्यः कामो नोपनमेदिति । तस्या एते भवतोऽग्नीषोमा सवेदसा युवमेतानीत्यग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकाम इति । यो ब्रह्मवर्चसकामः स्यात्सोऽग्नीषोमीयमष्टाकपालꣳ श्यामाकानां निर्वपति । तस्या एते

---

१ Thus M (the same reading xvii. 31), भर्जयन्ति the other MSS.

२ Only found in M Be 8, BDU om, Bo has a lacuna of three aksaras

३ Thus M and Bhav., the other MSS have the plural.

४ मधुना M.

५ Thus corrected acc. to TS II 3 3 2, तेजश्चैवास्मा इन्द्रियं च समीची MUDB Be, तेजश्चैवास्मा इन्द्रियं च ब्रह्मवर्चसं च समीची Bo 8

भवतो ऽग्नीषोमाविमꣳ सु मे ऽग्नीषोमा हविषः प्रस्थितस्येति । सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्बिभीयादिति । तस्या एते भवत आप्यायस्व सं त इति । ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकाम इत्यथ वै भवति गणवती याज्यानुवाक्ये भवत इति । तस्या एते भवतो गणानां त्वा गणपतिꣳ हवामहे स इज्जनेनेत्येतामेव निर्वपेद्यः कामयेत ब्रह्मन्विशं नाशयेयमिति । मारुती याज्यानुवाक्ये कुर्यादिति । तस्या एते भवतो मरुतो यद्ध वो दिवो या वः शर्मेति । ॥ २६ ॥

अर्यम्णे चरुं निर्वपेत्सुवर्गकाम इति । तस्या एते भवतो ऽर्यमायाति ये ते ऽर्यमन्नित्यर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरिति । तस्या एते भवतो । ऽर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामिति । तस्या एते एव भवतो । यो राजन्य आनुजावरः स्यात्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदित्यथ वै भवति वृध्रवती अग्रवती याज्यानुवाक्ये भवत इति । तस्या एते भवतो वृधादपञ्चिरोभिर्गृणानो वृधादग्रेण विमिमाय मानैरिति । यो ब्राह्मण आनुजावरः स्यात्तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेदित्यथ वै भवति वृध्रवती अग्रवती याज्यानुवाक्ये भवत इति । तस्या एते भवतो महाम्मही अस्तभायद्बुध्नो अपसम्ध्वयोजयेति । ॥ २७ ॥ अष्टमः ॥

अथ वै भवति यः पाप्मनाऽभिगृहीतः स्यात्तस्मा एतमादित्यं चरुममावास्यायां निर्वपेदिति । तस्या एते भवतो नवोनवो

भवति जायमानो यमादित्या अंशुमाप्याययन्तीति । यं कामयेतान्नादः स्यादिति तस्मा एतं विधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञ इत्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वेन्द्राय राज्ञे जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपत्येतामेव प्रतिपदं कृत्वेन्द्रायाधिराजायेन्द्राय स्वराज्ञ इति चतुरश्चतुरो मुष्टीनेकैकस्यै देवतायै । हविष्कृता वाचं विसृजते । समानं कर्माधिवपनादुद्धृत्य गार्हपत्य एकादशोत्तानानि कपालान्युपदधात्यथ वै भवत्युत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय । त्रयः पुरोडाशा भवन्ति । त्रय इमे लोका । एषां लोकानामाप्त्या । उत्तरउत्तरो ज्यायान्भवतीति । स उत्तरमुत्तरमेव ज्यायांसं करोति । सर्वेषामभिगमयन्नवद्यतीति । सो ऽवद्य-त्यैन्द्राय राज्ञे ऽनुब्रूहीति । प्राच्यां दिशि त्वमिन्द्रासि राजेत्यनूच्येन्द्रो जयाति न पराजयाता इति यजति । सो ऽवद्यत्यैन्द्रायाधिराजायानुब्रूहीतीन्द्रो जयाति न पराजयाता इत्यनूच्यास्येदेव प्ररिरिचे महित्वमिति यजति । सो ऽवद्यत्यै-न्द्राय स्वराज्ञे ऽनुब्रूहीत्यस्येदेव प्ररिरिचे महित्वमित्यनूच्य प्राच्यां दिशि त्वमिन्द्रासि राजेति यजति । व्यत्यासमन्वाहा-निर्दाहायेति ब्राह्मणम् । ॥ २८ ॥

स इन्द्रियकामो वीर्यकामः स्यात्तमेतया सर्वपृष्ठया याजये-दित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते ऽश्वमृषभं दक्षिणां वस्त्रमित्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वेन्द्राय राथंतराय

जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपत्येतामेव प्रतिपदं कृत्वेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्वरायेन्द्राय रैवतायेति चतुरश्चतुरो मुष्टीनेकैकस्यै देवतायै ' हविष्कृता वाचं विसृजते ' समानं कर्माधिवपनादुद्धृत्य गार्हपत्ये द्वादशोत्तानानि कपालान्युपदधात्यय वै भवत्युत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय ' द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय ' समन्तं पर्यवद्यतीति ' ओ ऽश्रावयेन्द्राय राथंतरायानुब्रूहीत्यभि त्वा शूर नोनुम इत्यनूच्य त्वामिद्धि हवामह इति यजति ' ओ ऽश्रावयेन्द्राय बार्हतायानुब्रूहीति ' त्वामिद्धि हवामह इत्यनूच्य यद्याव इन्द्र त इति यजति ' ओ ऽश्रावयेन्द्राय वैरूपायानुब्रूहीति ' यद्याव इन्द्र त इत्यनूच्य पिबा सोममिन्द्र मन्दतु त्वेति यजति ' ओ ऽश्रावयेन्द्राय वैराजायानुब्रूहीति ' पिबा सोममिन्द्र मन्दतु त्वेत्यनूच्य कदा चन स्तरीरसीति यजति ' ओ ऽश्रावयेन्द्राय शाक्वरायानुब्रूहीति ' कदा चन स्तरीरसीत्यनूच्य रेवतीर्नः सधमाद इति यजति ' ओ ऽश्रावयेन्द्राय रैवतायानुब्रूहीति ' रेवतीर्नः सधमाद इत्यनूच्याभि त्वा शूर नोनुम इति यजति ' यथा-समन्वारब्धामिर्दोहयेति ब्राह्मणम् ' ॥ २९ ॥

अन्वाहार्यमासाद्याश्वमृषभं वृष्णिं बस्तमिति ददात्येतयैव यजेताभिशस्यमान इति ' सैव[1] पूर्वा[1] सेयं[1] ' यद्युष्कामः

---

१ Thus M, सैव पूर्वा सेति Be, सैव पूर्वेषे Be 8, सैव पूर्वास्वेति U, मस्या एते भवन्ति या पूर्वस्या BD.

स्यात्तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टा-
कपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमिति '
तस्या एते भवन्त्युदग्ने शुचयस्तव वि ज्योतिषोदु त्यं चित्रमुदग्ने
शुचयस्तव वि ज्योतिषेत्युपहूतायामिडायामनाहितमग्नीधे
भवत्येव यजमानाय चौष्पिण्डान्प्रयच्छत्युदु त्यं जातवेदसꣳ सप्त १
त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान्प्रय-
च्छति ' चक्षुरेवास्मै प्रयच्छति ' यदेव तस्य तदिति ब्राह्मणं '
वैश्वदेवीꣳ सांग्रहणीं निर्वपेद्ग्रामकाम इति ' वैश्वदेवं चरुꣳ
संछन्न इव अपपर्णय ध्रुवो ऽसि ध्रुवो ऽहꣳ सजातेषु भूया-
समिति परिधीन्परिदधाति ' तस्या एते भवन्तो विश्वे देवा १
विश्वे देवा इत्येव पुरस्तात्स्विष्टकृतः ध्रुवाञ्जतीरुपजुषोयामन-
मह्यामनस्मा[1] देवा इति तिस्रः ' ॥ ३० ॥ नवमः ॥

अथ वै भवत्यग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो '
वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा
यस्य ज्योगामयति ' यो ज्योगामयावी स्याद्यो वा कामयेत १
सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदित्येतयेष्ट्या यक्ष्य-
माण उपकल्पयते खादिरं नवं पात्रं नवनीतमाज्यं यावतीः
समा एष्यन्मन्येत तावन्मानं च प्रवर्तमथ देवस्य त्वा सवितुः
प्रसव इति प्रतिपदं कृत्वाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं
वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपाल- १

१ ध्रुवाञ्जतीरुपजुषोत्य०, MBD, ध्रुवाञ्जतोर्गुषोत्य० U Be; ध्रुवाञ्जुषोत्य० Be 6

मिति[1] । समानं कर्माज्यावेक्षणात् आज्यावेक्षणे[2] ऽनुवर्तयति यच्चवमैत्तन्नवनीतमभवदिति । समानं कर्मा स्रुचां सादनात्सादयित्वा स्रुचो ऽथैतं प्रवर्तं खादिरे सबे पात्र उपस्तीर्णाभिघारितम् अथ हविर्भिरन्तर्वेद्यासादयति । समानं[3] कर्मा[3] प्रयाजेभ्यः[3] । प्रयाजैश्चरित्वा[3] हविर्भिश्चरति[3] । तस्मा एतं भवन्त्यायुष्ट आयुर्दा अग्न आप्यायस्व सं ते ऽव ते हेड उदुत्तमं प्र णो देव्या नो दिवो ऽग्नाविष्णू अग्नाविष्णू इत्यथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति ॥ २१ ॥

अश्विनोः प्राणो ऽसि तस्य ते दत्तां ययोः प्राणो ऽसि स्वाहेन्द्रस्य प्राणो ऽसि तस्य ते ददातु यस्य प्राणो ऽसि स्वाहा मित्रावरुणयोः प्राणो ऽसि तस्य ते दत्तां ययोः प्राणो ऽसि स्वाहा विश्वेषां देवानां प्राणो ऽसि तस्य ते ददतु येषां प्राणो ऽसि स्वाहेति । हुत्वाहुत्वैव स्रुक्स्रावैः[4] प्रवर्तमभिघारयति राडसि विराडसि सम्राडसि स्वराडसीत्यथैतं प्रवर्तमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधात्यथ यजमानमाज्यमवेक्षयति हुतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मरुद्भिः । तत्ता विष्णुः पर्यपश्यत्तमिडा गव्यैरयदित्यथ ब्रह्माणो हस्तमन्वारभ्यर्त्विजः[5] पर्याहुः पावमानेन त्वा स्तोमेन गायत्रस्य

---

१ Here BD ins हविष्कृता वाचं विसृजते ।

२ Thus M Bhav , ० आज्यमवेक्षमाणो the other MSS.

३ om M Be

४ स्रुवावेव Be 8.

५ ऋत्विजः only in M Be 8 D

वर्तन्योपांशुवीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै बृहद्रथंतरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्याया अग्नेस्त्वा मात्रया जगत्यै वर्तन्याग्रयणस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्याया इत्यथ हिरण्याहृतं निष्पिबति । निष्पिबन्तमनुमन्त्रयत इममग्न आयुषे वर्चसे कृधि प्रियं रेतो वरुण सोम राजन् । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासदित्यथैनं[1] सवर्तमद्भिः सहाब्ध दक्षिणे कर्णे आबध्नीत[2] आयुष्टे[2] विश्वतो दधदित्यथैनमनुपरिवर्तयत[3] आयुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसीत्यथास्य[4] सह्या वर्णं ब्रह्मणायभिरायुष्मानित्याभाददनुवाकस्य ॥ ३२ ॥

यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदेकातिरिक्तमिति । तस्या एते भवन्त इमं मे वरुण तत्त्वा यामीति । यद्यपरं प्रतिगृह्णीयात्सौर्यमेककपालमनुनिर्वपेदिति । तस्या एते भवन्त उदु त्यं चित्रमित्यथापो[5] ऽवभृथमवेत्य[5] वै[5] भवत्यपोनप्त्रीयं[5] चरुं पुनरेत्य निर्वपेदिति ।

---

१ Thus M, °थैनं all the other MSS.

२ Thus corrected, cp infra XVII. 41 and XVIII 9; आबध्नी-यात्° M; आबध्नात्यायु° the other MSS

३ All exc M ins सवर्तम् after एनं।

४ After सर्वमायुरसि M has some words more सर्वं त आयुर्भूयात्सर्व-मायुर्गेषम्, cp Āp. XIX 24 10

५ Thus MUD Be, the last three omitting the words अथ वै भवति। चित्रमित्यथावभृथमवेत्यापो° Be S, चित्रमित्यपो° D.

तस्या एते भवतो ऽपां नपात्मन्या यन्तीति । यः पाप्मना[1] गृहीतः स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदित्यैतयेष्ट्या यक्ष्यमाण उपकल्पयते दधि पय आमिक्षाया इत्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वेन्द्रावरुणाभ्यां जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपति । हविष्कृता वाचं विसृजते । समानं कर्माधिवपनादुद्धत्य दक्षिणार्धे गार्हपत्यस्यैकादश कपालान्युपदधाति । यदैनं पुरोडाशमधिश्रयति तदैतामामिक्षां गार्हपत्ये श्रपयत्यथैतं पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्यामिक्षया संप्रक्षाल्यान्तर्वेद्यासादयति[2] । ॥ ३३ ॥

अथ वै भवति पयस्यायां पुरोडाशमवदधात्यात्मन्नेवैनं करोत्ययो आयतनवन्तमेव । चतुर्धा व्यूहति । दिक्ष्वेव प्रतितिष्ठति । पुनः समूहतीति । स आमिक्षां पुरोडाशांश्चतुर्धा[3] कृत्वा व्यूहति या वामिन्द्रावरुणा यतव्या तनूस्तयेममंहसो मुञ्चतं या वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या तनूस्तयेममंहसो मुञ्चतमिति । पुनः समूहति समूह्यावद्यतीति । तस्या एते भवत इन्द्रावरुणयोरहमिन्द्रावरुणा युवमध्वराय न इत्यथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनावयज इत्यष्टौ । ॥ ३४ ॥ दशमः ॥

अथ वै भवति यो भ्रातृव्यवान्स्यात्स स्पर्धमान एतयेष्ट्या

---

१ Thus M, पाप्मगृ० the other MSS

२ Thus M, संप्रक्षा० all the other MSS

३ Thus M and Bhav, पुरोडाशं चतुर्धा all the other MSS

यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवत इति । तस्या एता भवन्ति प्रप्रायमग्निः प्र ते यक्षि प्र त इयर्मि मन्म भुवो वि वाजया वि ज्योतिषा स त्वमग्ने प्रतीकेन तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्चमिति । यो भ्रातृव्यवान्स्यात्स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावत इत्येव वै भवति त्रयस्त्रिꣳशत्कपालं पुरोडाशं निर्वपतीति । स एवैते त्रय एकादशकपालास्ता[1] एवैत[1] यज्ञा[1] भवन्ति । तस्या एता भवन्त्यꣳहोमुचे विबाध यस्मा वि न इन्द्र यज्ञमिन्द्रियाणि शतक्रतोऽनु ते दायीति । यो भ्रातृव्यवान्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टाकपालं निर्वपेत्तꣳ शृतमासन्नमेतेन यजुषाभिमृशेदिति । तꣳ शृतमासन्नमेतेन यजुषाभिमृशत्योजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरहमनेन हविषामुं भ्रातृव्यमभिभूयासमिति । युक्ष्वा हि देवहूतमानित्येतस्यानुवाकस्य सप्तदश सामिधेनीः पराचीरन्वाह । तस्या एते भवतः सखायः सं वः सम्यञ्चꣳ सꣳसमिद्युवसे वृषन्निति । ॥ ३५ ॥

यः प्रजाकामः स्यात्तस्या एतं प्राजापत्यं गार्मुतं चरुं निर्वपेदिति । तस्या एते भवतः प्रजापते स वेदेति । यः पशुकामः

1 Thus Bo 8, ता एवैत यज्ञा M, त एवोक्ता Bo BU, तथोक्ता D.

स्यात्तस्मा एतꣳ सौमापौष्णं गार्मुतं चरुं निर्वपेदिति । तस्या एते भवतः सोमापूषणेमौ देवाविति । चित्रया यजेत पशुकाम इति । अथ चित्रयेत्युपक्रम्याथ[1] प्रातराग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं त्वाष्ट्रमष्टाकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुꣳ सिनीवाल्यै चरुमैन्द्रमेकादशकपालमिति । तस्या एते भवन्त्यग्निना रयिमश्नवत्सोमाꣳ स्य आप्यायस्व सं ते इह त्वष्टारमग्रियं तन्नस्तुरीपं प्र णो देवी आ नो दिवः पीपिवाꣳसꣳ सरस्वतो ये ते सरस्व ऊर्मयः सिनीवालि या सुपाणिरिन्द्रं वो विश्वतस्परीन्द्रं नर इत्यथ पुरस्तात्स्विष्टकृतः स्रुवाज्याहुतीरुपजुहोत्यग्ने गोभिर्न आगहीति पञ्चर्चो द्वे यजुषी । ॥ ३६ ॥ एकादशः ॥

कारीर्या यक्ष्यमाणो भवति । स उपकल्पयते कृष्णं वासः कृष्णतूषं कृष्णमश्वं कृष्णꣳ संदानं कृष्णाजिनं कृष्णमधु[2] करीरसक्तून्कृष्णां कुम्भीमामपक्वां[3] कृष्णमनस्थिगधं कृष्णमविं कृष्णां वर्षाहूस्तम्बं[4] वैतसमिध्मावर्हिरित्यथ यजमानायतने कृष्णं वासः कृष्णतूषं निदधात्यथापरेणाहवनीयं कृष्णमश्वं कृष्णेन संदानेन

---

१ अथिचियेत्यु॰ Be 8 Be, अथियेत्यु॰ BDU, अथियचेत्यु॰ M.

२ कृष्णमधु DU

३ Thus corrected acc to a Prayoga, कुम्भीमामपक्वां D, instead of आमपक्वां Be 8 (pr m) आमवाकार्थं, (sec. m) आमपाकंकरीया, आमपाककरीया U; आमपाककरी B; आमपाकंकरीयत् Be, आमपाकं-करीर्यां M

४ वर्षाहू॰ M here and later on consequently, thus also some of the other MSS

मंदित्यान्तर्वेदि[1] कृष्णाजिने कृष्णमधु करीरसक्तूनिवपत्युत्करे
कुम्भीं निमिनोत्यथायेणोत्करं प्राग्ग्रीवमश्वं स्थापयित्वा तस्यापे-
णोपस्तम्भनं कृष्णमविं निपद्यात्युत्तरेणाहवनीयं कृष्णं वर्षाह्व-
स्तम्बं वैतसमिधावर्हिरिति निदधात्यथ यजमानः कृष्णं वासः
कृष्णतूषं परिधत्ते ॥ ३७ ॥ ५

मारुतमसि मरुतामोजोऽपां धारां भिन्द्धीति । रमयत
मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति । पुरोवातमेव
जनयति वर्षस्यावरुद्ध्या इति ब्राह्मणमथैतमश्वꣳ संदानान्मु-
ञ्चोत्तरवर्ग्येणाभिविक्षिपत्यभिक्रन्द[2] स्तनय गर्भमाधा इति ।
स यदि विधूनुते[3] यदि मेहति यदि शकृत्करोति वर्षिष्य- १०
तीत्येव वेदाथ वातनामानि जुहोति पुरोवातो वर्षञ्जिन्वरा-
वृत्स्वाहेत्यष्टावथान्तर्वेदि कृष्णाजिने मधुना करीरसक्तून्संयौति
मान्दा वाशाः शुन्ध्यूरजिराः । ज्योतिष्मतीस्तमस्वरीरुन्दतीः
सुफेनाः । मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह मावतेति । तिस्रः
पिण्डीः कृत्वा समुच्चित्य कृष्णाजिनस्यान्तान्संदानेनोपनह्यति ११
नष्ठो अश्वस्य संदानमसि वृष्ट्यै त्वोपनह्यामीत्यथैना यजमानः
मायां गधायामावध्नाति ॥ ३८ ॥

देवा वसव्या अग्ने सोम सूर्येत्यहोरात्रे उपरमति । द्विती-

---

१ Thus M only; ॰मन्त्यान्तर्वेदि all the other MSS.

२ ॰वर्ग्येण॰ M, ॰वर्गेण the other MSS.; cp. supra p 104, 2.—॰क्षिपत्य॰ M

३ विधूनुते BD

यस्यामावध्नाति देवाः शर्मण्या मित्रावरुणार्यमन्नित्यहोरात्रे एवोपरमति । तृतीयस्यामावध्नाति देवाः सपीतयो ऽपां नपादाशुहेमन्नित्यहोरात्रे एवोपरमत्यथ वै भवति यदि वर्षेत्तावत्येव होतव्यमिति । यदि चैव वर्षति यदि नोभयेनैव पिण्डीर्जुहोति स्रुचोपस्तीर्णाभिघारिता दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन... सृजा वृष्टिं दिव आद्भिः समुद्रं पृणेति

यस्यामावध्नाति देवाः शर्मण्या मित्रावरुणार्यमन्नित्यहोरात्रे एवोपरमति । तृतीयस्यामावध्नाति देवाः सपीतयो ऽपां नपादाशुहेमन्नित्यहोरात्रे एवोपरमत्यथ वै भवति यदि वर्षेत्तावत्येव होतव्यमिति । यदि चैव वर्षति यदि नोभयेनैव पिण्डीर्जुहोति स्रुचोपस्तीर्णाभिघारिता दिवा चित्तमः कृण्वन्त्या यं नर उदीरयथा मरुतः समुद्रत इत्यथास्यां धूममवीचते ऽसितवर्णा हरयः सुपर्णा इति । यदि न वर्षेच्छ्वो भूते हविर्निर्वपेदग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतं सप्तकपालं सौर्यमेककपालमिति । तस्या एता भवन्ति त्वं त्या चिदच्युताग्ने भूरीणि तव जातवेदो दिवो नो वृष्टिं मरुतो ररीध्वं पिन्वन्त्यपो मरुतः सुदानव उदु त्यं चित्रमित्यथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यौर्वभृगुवच्छुचिमप्नवानवदाहुव इति तिस्रो । ऽथैतां कुम्भीमद्भिः पूरयति सृजा वृष्टिं दिव आद्भिः समुद्रं पृणेति । स यदि दीर्यते यदि भिद्यते वर्षिष्यतीत्येव वेदाथाश्वमभिजुहोत्यब्जा[1] असि प्रथमजा बलमसि समुद्रियमिति । स यदि विधूनुते यदि मेहति यदि शकृत्करोति वर्षिष्यतीत्येव वेदाथ वर्षाह्वास्तम्नमभिजुहोति ॥ ३९ ॥

---

१ Thus M Be B Be, वेदाथ मेषा उपरि जुहोत्य॰ BUD; then follows in B the beginning of kh 40, the passage अथाश्वमभि-जुहोत्य॰...वर्षिष्यतीत्येव was given in this MS already after the horse oracle.

उन्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिमित्यथैनमाहवनीये ऽनुप्रहरति हिरण्यकेशो रजसो विसार इत्यथास्य धूममन्वीक्षत आ ते सुपर्णा अमिनन्त एवैरित्यथान्तर्वेदि तिष्ठन्कृष्णाजिनमवधूनोति ये देवा दिविभागा इत्यान्तादनुवाकस्य। संतिष्ठते कारीर्यथातो ऽह्नःसवकारीर्याग्नेयमष्टाकपालं निर्वपति स्नपयित्वासादयति। तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषो ऽग्निर्मूर्धा भुव इति। त्रिष्टुभौ संयाज्ये। याभिश्चैव पिण्डीराबध्नाति याभिश्च जुहोति याभ्यां च धूममन्वीक्षते ताः सम्प्रसिच्यन्ति[1]। संतिष्ठते ऽह्नःसवकारीरी।

॥ ४० ॥ द्वादशः ॥

अथ वै भवति मैधातवीयेन यजेताभिचर्यमाणो वा सहस्रेण वा यक्ष्यमाणः[2] सहस्रेण वेजानो यो वा पशू इत्युक्त्वा न यजत इत्येतयेष्ट्वा यक्ष्यमाण उपकल्पयते सहस्रं हिरण्यं तार्प्यं धेनुमित्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वेन्द्राविष्णुभ्यां जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपत्येतासामेव प्रतिपदं कृत्वेन्द्राविष्णुभ्यां जुष्टं निर्वपामीति चतुरो यवानामेतासामेव प्रतिपदं कृत्वेन्द्राविष्णुभ्यां जुष्टं निर्वपामीति चतुर एव व्रीहीणां। तेषां व्रीहिष्वेव हवि-

---

१ Thus M; च om all the other MSS.

२ The following thus only in M, the other MSS. are partly corrupted partly incomplete

घृतमुद्वादयन्त्युपोद्यच्छन्ते यवान्हविष्कृता वाचं विसृजते । समानं कर्माधिवपनादुद्धुत्य गार्हपत्ये द्वादश कपालान्युपदधात्यथ वै भवति द्वादशकपालः पुरोडाशो भवति । ते त्रयश्चतुष्कपाला-स्त्रिषमृद्धत्वाय । त्रयः पुरोडाशा भवन्ति । त्रय इमे लोका । एषां लोकानामाप्त्या । उत्तरउत्तरो ज्यायान्भवतीति । स उत्तरमुत्तरमेव ज्यायाꣳसं करोति यवमयं[1] मध्ये । ऽथ वै भवति ॥ ४१ ॥

सर्वाणि छन्दाꣳस्येतस्यामिष्टामनूच्यानीत्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत्ककुदुष्णिहा जगत्यै । यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यवरुन्द्ध इति । प्र सो अग्ने तवोति-भिरित्येतासां द्वे धाय्यालोके दधात्यथाग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परिदधाति सक्लृप्त्यायेति ब्राह्मणꣳ । सर्वेषामभिगमयन्नवद्यतीति । तस्या एते भवतः सं वां कर्म-णोभा जिग्युरित्यन्वाहार्यमासाद्य सहस्रꣳ हिरण्यं तार्ष्यं धेनुमिति ददाति । यं कामयेत राजन्यमनपोध्यो जायेत वृत्राणि घ्नꣳश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेदित्यै-तयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्मयं दाम । तस्या एते भवतो ऽस्मे इन्द्राबृहस्पती बृहस्पतिर्नः परिपातु पश्चादित्य-न्वाहार्यमासाद्य हिरण्मयं दाम ददाति । ॥ ४२ ॥

---

१ Thus M only, यवमयमध्ये Be 8 Be, यवमयोमध्ये BU, यवमयं-रमध्ये D.

वैश्वानरं द्वादशकपालं निर्वपेदग्निहोत्रायणेन नवाग्रं जग्ध्वा यो वान्यस्याग्निषु यजेत यस्य वान्यो ऽग्निषु यजेत । यो ऽरण्योरग्नीन्समारोह्योद्वसाय मथित्वाग्नीन्विहृत्य वैश्वानरं द्वादशकपालं निर्वपति । तस्या एते भवतो वैश्वानरो न ऊत्या पृष्टो दिवीत्यग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपेद्विच्छिन्नाग्निहोत्रो यो वा कामयेत प्रजायै मे तन्तुर्न विच्छिद्येतेति । यो ऽरण्योरग्नीन्समारोह्योद्वसाय[1] मथित्वाग्नीन्विहृत्याग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपेदिति । तस्या एते भवतस्त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाग्ने पृष्ठं वयमारुहेम अथा देवैः सधमादं मदेम ॥ स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्नꣳ सधस्थमनुपश्यमान आ तन्तुमग्निर्दिव्यं ततानेति । स्विष्टवत्यौ संयाज्ये हव्यवाहमभिमातिषाहꣳ रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निꣳ स्विष्टकृतमाहुवेम ॥ स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरं न आयुरित्यग्नये व्रतभृते पुरोडाशमष्टाकपालं निर्वपेदाहिताग्निरश्रु कुर्यादिति । तस्या एते भवतस्त्वमग्ने व्रतभृच्छुचिर्देवाꣳ आसादया इह । अग्ने हव्याय वोढवे ॥ व्रता नु बिभ्रद्व्रतपा अदाभ्यो यजानो देवाꣳ अजरः सुवीरः । दधद्रत्नानि सुवि-

---

1 Thus MDU, •रोपोद्व• Be 8 Be, in B the last kh. is wanting

दंनो अग्ने गोपाय नो जीवसे जातवेद इत्यथ यद्याग्नयो ह्याग्निभिः संसृज्येरन्मिथो वान्यस्य वाग्निभिः सो ऽरण्योरग्नीन्समारोह्योद्वसाय[1] मथित्वाग्नीन्विहृत्याग्नये विविचये पुरोडाशमष्टाकपालं निर्वपत्यग्नये[2] व्रतपतय इति । तस्या एता भवन्ति वि ते विश्वग्वातजूतासो अग्ने तामग्ने मानुषीरीळते विशस्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीति । संतिष्ठन्त इष्टयः संतिष्ठन्त इष्टयः । ॥ ४३ ॥ त्रयोदशः ॥

॥ इति त्रयोदशः प्रश्नः ॥

---

१ °रोह्योद्व° Be ‖ Be
२ च ins. M

अथ वै भवति प्रजापतिरकामयत प्रजाः सृजेयेति । स तपो ऽतप्यत । स सर्पानसृजत । सो ऽकामयत प्रजाः सृजेयेति । स द्वितीयमतप्यत । स वयांस्यसृजत । सो ऽकामयत प्रजाः सृजेयेति । स तृतीयमतप्यत । स एतं दीक्षितवादमपश्यत्तमवदत्ततो वै स प्रजा असृजतेति । तत्पृच्छन्ति[1] कतमत्तत्तपो यत्तपस्तप्त्वा दीक्षितवादं वदतीत्यथ वै भवत्यङ्गिरसः सुवर्गं लोकं यन्तो ऽप्सु दीक्षातपसी प्रावेशयन्नप्सु वाति । वाचादेव दीक्षातपसी अवरुन्द्ध इत्येतदिति ब्रूयादित्यथ वै भवति यद्वै दीक्षितो ऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति । नीलमस्य हरो व्येतीति । सो ऽमेध्यं दृष्ट्वा जपत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरित्याह । नास्माद्दीक्षापक्रामति । नास्य नीलं न हरो व्येतीति ब्राह्मणमथ वै भवति यद्वै दीक्षितमभिवर्षति दिव्या आपो ऽशान्ता ओजो बलं दीक्षां तपो ऽस्य निर्घ्नन्तीति । सो ऽभिवृष्यमाणो जपत्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याह । तदेव सर्वमात्मन्धत्ते । नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्तीति ब्राह्मणमथ वै भवत्यग्निर्वै दीक्षितस्य देवता । सो ऽस्मादेतर्हि तिर इव यर्हि यातीति । सो ऽस्मात्समारूढस्तिर इव[2]

---

[1] पृच्छन्ति MG (pr. m.) U, पृच्छति Re BG (sec. m.); the plural is correct, the subject being, according to Bhav., ब्रह्मवादिनः ।

[2] यर्हि ms. M.

भवति । यो ऽक्षोरग्नीध्रमारोह्य बृहस्पतिवत्यर्चा प्रयाति । भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह । ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते । स एनꣳ संपारयतीति ब्राह्मणं । प्रज्ञातमपाꣳ संधानश्लोकमध्यवसानस्याय[1] वै भवति यो वै सोमꣳ राजानꣳ सायुज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ सायुज्यं । छन्दाꣳसि खलु वै सोमस्य राज्ञः सायुज्यो लोकः । पुरस्तात्सोमस्य क्रयादेवमभिमन्त्रयेतेति । स पुरस्तात्सोमस्य क्रयादेवमभिमन्त्रयते ॥ १ ॥

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ सायुज्यं गच्छेति मे सोमाय ब्रूतादिति । सायुज्यमेवैनं लोकं गमयित्वा क्रीणाति । गच्छति स्वानाꣳ सायुज्यमिति ब्राह्मणमंय वै भवति यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति । ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रतितिष्ठतीति । प्रजापतौ मनसीति ब्रूयाच्चिरवजिघ्रेदिति । स चिरवजिघ्रति प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा । य एवं वेद प्रत्येव तिष्ठतीति ब्राह्मणमंय वै भवति यो वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति । यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठ-

---

१ Thus M Be G, ॰ध्यवसाय॰ B

श्राश्रावयेदिति । स यतो मन्यतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयत्येषा वा अध्वर्योः प्रतिष्ठा । य एवं वेद प्रत्येव तिष्ठतीति ब्राह्मणमथ वै भवति यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयात्तस्मात्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्या इति । तदेतदन्यत्र हविर्यज्ञेभ्यो । ऽभिक्रामं जुहोतीति हविर्यज्ञेषु भवत्यथ वै भवति यो वा अध्वर्योः स्वं वेद स्ववानेव भवति । स्रुग्वा अस्य स्वं वायव्यमस्य स्वं चमसोऽस्य स्वं । यद्वायव्यं वा चमसं वानन्वारभ्याश्रावयेत्स्वादियादिति । स वायव्यं चैव चमसं चान्वारभ्याश्रावयति । स्वादेव नैतीति ब्राह्मणमथ वै भवति यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमो ऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानो ऽप्रतिष्ठितो ऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसो ऽस्य प्रतिष्ठा सोम स्तोमस्य स्तोम उक्थानां । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादित्युभयतनूं होव[1] चमसस्य ग्रहस्य । स ग्रहं चैव गृहीत्वा चमसं चोन्नीय स्तोत्रमुपाकरोति । प्रत्येव सोमं स्थापयति प्रति स्तोमं प्रत्युक्थानि । प्रति यजमानस्तिष्ठति प्रत्यध्वर्युरिति ब्राह्मणम् । ॥ २ ॥

अथ वै भवति यज्ञं वा एतत्संभरन्ति यत्सोमक्रयण्यै पदं । यज्ञमुखं हविर्धाने । यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति । स यर्हि हविर्धाने प्राची

---

1 MGB ins न; Bhav. cites the passage without the negative particle

प्रवर्तयति[1] तर्हि[1] तेन यदृत्तीयेन पश्चद्धुरमुपानक्ति । यज्ञमुख एव यज्ञमनुसंतनोतीति ब्राह्मणमथ वै भवति प्राञ्चमग्निं प्रहरन्त्युत्पश्चीमानयन्त्यध्वनाऽपि प्रवर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सो ऽनुध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून्यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणं हरेदिति । स यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणं हरति । तेनैवैनं भागिनं करोतीति ब्राह्मणमथ वै भवति यजमानो वा आहवनीयो । यजमानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणं हरन्ति । स वैव स्यान्निर्मन्थ्यं वा कुर्यादिति । स यद्येनं[2] कारिष्यन्भवति नैनमन्वानयते । ऽजस्र एवायेष दीप्यमानः शेते । यद्यु वा एनमन्वानयते तस्य पशुवेलायामुल्मुकमादायारणी उपसंहृत्य पूर्वः पशोः प्रतिपद्यते । निर्मन्थ्येनाथ[3] पशूं श्रपयन्ति । वपया[4] तस्यहोल्मुकमाहरन्ति यजमानस्य पाप्मनाधीति ब्राह्मणमथ वै भवति यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति । स यावन्ति पशोरवदानानि नश्यन्ति तावत्कृत्व आज्यस्य प्रत्याख्यायमवद्यति । नैव ततः प्रायश्चित्तिरिति ब्राह्मणमथ वै भवति ये पशुं विमथ्नीरन्यस्तान्कामयेता-

१ Thus M, प्रवर्तयेदुर्हि the other MSS

२ यद्युवेनं B Bo, cp infra p 163, 5

३ Thus M only, निर्मन्थेनाथ the other MSS.

४ Thus MBG (sec. m), वपा De G (pr m)

तिमार्च्छेयुरिति कुविदङ्गेति नमोवृक्णेभ्यश्चाग्नीध्रे जुहुयादिति ' स कुविदङ्गेति नमोवृक्णेभ्यश्चाग्नीध्रे जुहोति ' नमोवृक्णेभ्यो ह्येषां वृक्णे ' नाजगामार्च्छन्तीति ब्राह्मणं ' यद्यु वा एकचरं विमथ्नीत गामिव एतां जुहोति[1] ' प्रजासमुपाकरणसौक्रमपाय्यानां[2] चरणं ' ब्राह्मणमुत्तरम् ' ॥ ३ ॥ प्रथमः ॥

अथ वै भवति यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान्भवति ' यो यथादेवतं न देवताभ्य आवृश्च्यते वसीयान्भवत्याग्नेय्याग्नीध्रमभिमृशेदैन्द्र्या हविर्धानमाग्नेय्या स्रुचौ वायव्यया वायव्यान्यैन्द्रिया सद इति ' स आग्नेय्याग्नीध्रमभिमृशति वैष्णव्या हविर्धानमाग्नेय्या स्रुचौ वायव्यया वायव्यान्यैन्द्रिया सदो ' यथादेवतमेव यज्ञमुपचरति ' न देवताभ्य आवृश्च्यते वसीयान्भवतीति ब्राह्मणमुक्तमौदुम्बराणां मध्यपरिधीनां [3]परिधानमुक्तं स्रुचां सादनमुक्तं पात्राणामभिमर्शनमथ वै भवतीष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वो ऽर्ष्टुः क्षीयत ' आसन्न्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयादिति ' पुरा प्रातरनुवाकात्प्रचाराय उत्थायाग्नीध्र आज्यं जुहोत्यासन्न्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्याः[4] स्वाहेत्यात्मन एव

---

१ BG ms. प्रजान एतां जुहोति।

२ Thus M; उपाकरणीयस्य the other MSS.

३ From here unto निरंनो॰ (p 158, 12) is left out in B.

४ ॰भिशस्त्या M Be U and Padapāṭha at TS. III. 1. 7. 1; अभिशस्त्याः G

तदध्वर्युः पुरस्तात्कर्मणो नद्यते ऽनार्त्या इति । ब्राह्मणमेव वै भवति यो वै छन्दोभिरभिभवति स समृत्स्यतोरभिभवतीति । स समृत्स्यतोर्महारात्र उत्थायाभीमे तिस्रो ऽभिभूतीर्जुहोति संवेशाय त्वोपवेशाय त्वा गायत्रिया अभिभूत्यै स्वाहा संवेशाय त्वोपवेशाय त्वा त्रिष्टुभो ऽभिभूत्यै स्वाहा संवेशाय त्वोपवेशाय त्वा जगत्या अभिभूत्यै स्वाहेत्यथ द्वे प्राणाहुती जुहोति प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टमित्यथ वै भवति देवतास्तु वा एते प्राणापानयोर्व्यायच्छन्ते येषां सोमः समृच्छते । संवेशाय त्वोपवेशाय त्वेत्याह । छन्दांसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दांसि वृङ्क्त इति ब्राह्मणमेव वै भवति यस्य भूयांसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति । यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीतेत्युक्थ्यं क्रतुमुपैति । यद्युक्थ्यः स्यादतिरात्रं कुर्वीतेत्यतिरात्रं क्रतुमुपैति । यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान्भवतीति ब्राह्मणमिति[1] स्वा[1] अध्वर्युतो[1] । ऽथ छन्दोगतः । प्रेतिवन्ति[2] चेतिवन्ति[2] साम्यानि[2] भवन्त्यभिजित्यै । मरुत्वतीः प्रतिपदो विजित्या । उभे बृहद्रथंतरे भवत ।

---

१ इतीमा स्वध्व॰ BGU, इतीमाध्व॰ M.

२ Thus only Bhavasvāmin, प्रेतिवंत च इतिवंति साम॰ M; प्रेतिवंति इतिवेति साम्य॰ G; प्रेतिवंति यदिवेति साम्य॰ U; प्रेतियदितिवेसाम्य॰ Be, cp also TS. III 1 7 2 with the comm. Vol. III, p 41 and T Br I. 4. 6 1

यो वै देवान्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु' यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपांशु गृह्णीयाद्यानूर्ध्वांस्तानुपब्दिमत इति' स यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णाति तानुपांशु गृह्णाति' यानूर्ध्वांस्तानुपब्दिमतो' देवानेव तद्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन' देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्विति ब्राह्मणं' ते यत्र बहिष्पवमानं सर्पन्तो भवन्ति तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोत्यग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशंभूः। स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम स्वाहेति' माध्यंदिने पवमाने तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानां सुमतौ स्याम स्वाहेत्यार्भवे पवमाने तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोतीदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः स्वरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहेत्यथ वै भवत्यायतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या' या आघारवतीस्ता आयतनवतीर्याः सौम्यास्ता अनायतना' ऐन्द्रवायवमादायाघारमाघारयेदिति' स ऐन्द्रवायवमादायाघारमाघारयत्यध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय। विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोम स्वाहेति' सौम्या एव तदाहुतीरायतनवतीः

करोत्यायतनवान्भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनक्ति । ते व्युत्ते उपजीवनीये भवत । उपजीवनीयो भवति य एवं वेदेति ब्राह्मणमथ प्रतिप्रस्थातोत्तरार्ध आहवनीयस्याग्निनः सहस्राव जुहोत्येष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वाहेत्यथ वै भवति मनुः पुत्रेभ्यो दायं व्यभजत्स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत्स आगच्छत्सोऽब्रवीत्कथा मा निरभागिति । न त्वा निरभाक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते । ते सुवर्गं लोकं न प्रजानन्ति । तेभ्य इदं ब्राह्मणं ब्रूहि । ते सुवर्गं लोकं यन्तो य एषां पशवस्तांस्ते दास्यन्तीति । तदेभ्योऽब्रवीदिति । तत्पृच्छन्ति[1] किमेभ्यस्तदुवाचेत्यपाख्यानि सन्तनीर्द्विसामन्त्रणीया अच्छावाकीया[2] होत्रीयाः[2] प्रस्तीयाः सत्यं वदत श्रद्धा मो मा विगादित्येतदेभ्यस्तदुवाचेति[3] । तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छदित्युक्तस्यैव कर्मणोऽनुवादो । ऽथ द्वे महताहुती जुहोति । शुक्रो वायो भूयाममृषा सोमꣳ समधेयेत्युपरिष्टान्नुनीया[1] तासु[4] तथैव वक्ष्यामो । ऽथ द्रप्सानुमन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इत्यथ वै भवत्यध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन

¹ Thus MU ; all the other MSS. read the singular.

² Thus M only, all the other MSS. ॰वाकीयाश्वानीयाः ।

³ Thus M, विगाद् i. e. of विगाद्, all the other MSS.

⁴ Thus M, वसीयासु the other MSS

स्तोमो योऽनव्य इति । ते यत्र बहिष्पवमानꣳ सर्पन्ति तदग्र एवाध्वर्युः प्रथमो बर्हिषो ध्रुवामः[1] सर्पति । वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि च यजमाने चेत्याह । वाचमेव तद्यज्ञमुखे युनक्तीति ब्राह्मणम् । अथ वै भवति वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान्गृहीत्वा बहिष्पवमानꣳ सर्पन्ति । पराञ्चो हि यन्ति । पराचीभिः स्तुवते । वैष्णव्यर्चा पुनरेत्योपतिष्ठत इति । स वैष्णव्यर्चा पुनरेत्योपतिष्ठते । यज्ञो वै विष्णुर्यज्ञमेवाकर्विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितमित्याह । यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाप्याययतीति ब्राह्मणम् । ॥ ५ ॥ द्वितीयः ॥

अथ वै भवति यो वै पवमानानामन्वारोहान्विद्वान्यजते ऽनु पवमानानारोहति । न पवमानेभ्यो ऽवच्छिद्यत इति । बहिष्पवमाने पञ्चम्यां प्रस्तुतायां वाचयति श्येनो ऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेति । माध्यंदिने पवमाने ऽष्टम्यां प्रस्तुतायां वाचयति सुपर्णो ऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यार्भवे पवमाने नवम्यां प्रस्तुतायां वाचयति सघासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्याहैते वै पवमानानामन्वारोहास्तान्य एवं विद्वान्यजते ऽनु पवमानानारोहति । न पवमानेभ्यो ऽवच्छिद्यत

---

१ ध्रुवाम (cp infra XV 29) BG ध्रुवाक U, ध्रुवाकः M, but with a म written above the क, ध्रूवाम Be

इति ब्राह्मणमेव वै भवति यो वै पवमानस्य संततिं वेद सर्वमायुरेति । न पुरायुषः प्रमीयते । पशुमान्भवति । विन्दते प्रजां । पवमानस्य ग्रहा गृह्यन्ते ऽथ वा अस्यैते ऽगृहीता । द्रोणकलश आधवनीयः पूतभृत्तान्यदगृहीत्वोपाकुर्यात्पवमानं विच्छिन्द्यात्तं विच्छिद्यमानमध्वर्योः प्राणो ऽनु विच्छिद्येतोपयामगृहीतो ऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशेदिति । स प्रजापतये त्वेति द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीयं । विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं । पवमानमेव तत्संतनोति । सर्वमायुरेति । न पुरायुषः प्रमीयते । पशुमान्भवति । विन्दते प्रजामिति ब्राह्मणमेव वै भवति त्रीणि वाव सवनान्यथ तृतीयं सवनमवलुम्पन्त्यनंशु कुर्वन्त । उपांशुं हुत्वोपांशुपात्रे ऽंशुमवास्य तं तृतीयसवने ऽपिसृज्याभिषुणुयादिति । स[1] य[1] एवैष[1] उपांशुपात्रे[1] ऽंशुः[1] प्रास्तो भवति तं माध्यंदिनीय ऋजीषे ऽपिसृज्याभिषुणोति । यदाप्याययति तेनांशुमद्यदभिषुणोति तेनर्जीषि । सर्वाण्येव तत्सवनान्यंशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोतीति ब्राह्मणम् । ॥ ६ ॥

अथातो दीर्घग्रहाणामेव मीमांसा । द्रोणकलशे दीर्घे वा प्रवृत्ते वा पात्र्यां चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो

१ Thus M, स एवैष etc. G, स वैष उपांशुपात्रेंऽशुः BU, स एवैष उपांशुपात्रेंऽशव De

जगार । देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान स्वाहेत्यथ दोहयमथे वसतीवरीभ्यो ऽध्यपो निःषिच्य तस्य स्वधाः संभरति भूतिः सोमेन वर्धतां तस्य मेदस्य वीतस्य द्रविणमागम्यादिति ' स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति ' स यद्यह[1] दीर्णो भवति प्रतिसिम्पत्येनं[2] ' यद्यु वै प्रतप्त उच्छ्रयत्येनं बर्हिषी अन्तर्धाय स्वधामानयत्यपोद्धृत्य बर्हिषी आग्रयणादंशुं प्रस्कन्दयत्याधवनीये दीर्णे वा प्रतप्ते वा तथैव पात्र्यां चतुर्गृहीतं गृहीत्वाधवनीये जुहोत्यन्वारब्धे यजमाने द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः । तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यं स्वाहेत्यथ दोहयमथे वसतीवरीभ्यो ऽध्यपो निःषिच्य तस्य तथैव स्वधाः संभरति भूतिः सोमेन वर्धतां तस्य मेदस्य वीतस्य द्रविणमागम्यादिति ' स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति ' स यद्यह[1] दीर्णो भवति प्रतिसिम्पत्येनं ' यद्यु वै प्रतप्त उच्छ्रयत्येनं बर्हिषी अन्तर्धाय स्वधामानयत्यपोद्धृत्य बर्हिषी आग्रयणादेवांशुं प्रस्कन्दयति ' पूतभृति दीर्णे वा प्रतप्ते वा तथैव पात्र्यां चतुर्गृहीतं गृहीत्वाधवनीये जुहोत्यन्वारब्धे यजमाने द्रप्सो

१ Thus here and infra (163 15, 164. 6) M, also Be at these last mentioned passages, यदि the other MSS and Be, here, but infra यद्युव ।

२ Thus here and infra M, the other MSS. every time the plural.

महतो यक्ष एकः केशी विश्वा भुवनानि विद्वान्। तिरोधायेत्यसितं वसानः शुक्रमादत्ते अनुहाय जार्यै स्वाहेत्यथ होतृचमसे वसतीवरीभ्यो ऽध्यपो निःषिच्य तस्य तथैव स्वधाꣳ संभरति भूतिः सोमेन वर्धतां तस्य मेदस्य वीतस्य द्रविणमागम्यादिति' स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति' स यद्यह दीर्णो भवति प्रतिसिम्पत्येनं' यद्यु वै महत्स्यादुच्छ्रित्यैनं बर्हिषी अन्तर्धाय स्वधामामयत्यपोद्धृत्य बर्हिषी आग्रयणादेवासु' [1]प्रस्कन्दयत्याग्रयणे दीर्णे वा प्रहृत्ते वा तस्य पुरोरुचा उलोच्छ्रित्यैनं बर्हिषी अन्तर्धाय स्वधामामयत्यपोद्धृत्य बर्हिषी द्रोणकलशादेवासु[1] प्रस्कन्दयत्यथान्यस्मिन्पात्रे दीर्णे वा प्रहृत्ते वा तस्यैव पुरोरुचा उलोच्छ्रित्यैनं बर्हिषी अन्तर्धाय स्वधामामयत्यपोद्धृत्य बर्हिषी आग्रयणादेवासु प्रस्कन्दयति ॥ ७ ॥

अथ वै भवति देवा वै यज्ञमकुर्वत तदसुरा अकुर्वत' ते देवा एतं महायज्ञमपश्यन्तमतन्वताग्निहोत्रं व्रतमकुर्वत' तस्मादाहितः स्याद्दिधाग्निहोत्रं जुहुति' पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत' दार्शं यज्ञमाग्नेयं पशुमकुर्वत' वैश्वदेवं प्रातःसवनमकुर्वत' वरुणप्रघासान्माध्यंदिनꣳ सवनꣳ साकमेधान्पितृयज्ञं त्र्यम्बकाꣳस्तृतीयसवनमकुर्वतेति' तत्पृच्छन्ति[2] कतमः स महायज्ञ इत्ययमेव चातुर्मास्यः सोम उक्तो भवत्ययो

[1] This passage is left out by all the MSS exc. M.

[2] °च्छति all the MSS. exc M

खलु य एव कश्च सौम्यो ऽध्वरः स महायज्ञस्तमेषामसुरा यज्ञमन्ववाजिगाꣳसन्तं नान्ववायन्ते ऽनुवसध्वर्तव्या वा इमे देवा अभूवन्निति । तदध्वरस्याध्वरत्वं । ततो देवा अभवन्परासुरा । स एवं विद्वान्सोमेन यजते भवत्यात्मना पराऽस्य भ्रातृव्यो भवतीति ब्राह्मणमथ समस्तꣳ राजानमुपतिष्ठते परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान्देवान्परिभूर्माꣳ सह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं जनाय शमर्वते शꣳ राजन्नोषधीभ्यो ऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृज इति । चत्वारो ब्राह्मणसंपन्नाः कामास्तेषां यं[1] कामं[1] कामयते[1] तमादिश्योन्मृष्टे । ऽथावकाशैश्चरति । प्राणाय मे वर्चोदा वर्चसे पवस्वेत्युपाꣳशुपात्रमवेक्षते । ऽपानायेत्यन्तर्यामपात्रं[2] । व्यानायेत्युपाꣳशुसवनं । वाच इत्यैन्द्रवायवं । दक्षक्रतुभ्यामिति मैत्रावरुणꣳ । श्रोत्रायेत्याश्विनं । चक्षुर्भ्यामिति शुक्रामन्थिनावात्मन इत्याग्रयणमङ्गेभ्य इत्युक्थ्यमायुष इति ध्रुवं । प्रतिष्ठाया इत्यृतुपात्रे माध्यंदिने सवने । न प्रातःसवने । वीर्यायेत्यतिग्राह्यं वा षोडशिनं वावेक्षते । विष्णोर्जठरमसीति द्रोणकलशमवेक्षत । इन्द्रस्य जठरमसीत्याधवनीयं । विश्वेषां देवानां जठरमसीति पूतभृतमथ समस्तमेव राजानमुपतिष्ठते को ऽसि को नाम कस्मै त्वा काय त्वा यं

१ Thus M; यं काम कामयते Be, य काम कामयेत UG, यं कामयेत B

२ अन्तर्यामं १.१० अन्तर्यामपात्रं M

त्वा सोमेनातीतृपं यं त्वा सोमेनामीमदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषैः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदा वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृज इति । चत्वारो ब्राह्मणसंपन्नाः कामास्तेषां यं[1] कामं[1] कामयते[1] तमादिश्योन्मृष्ट आयुरुन्मृजे भूतिमुन्मृजे ब्रह्मवर्चसमुन्मृजे ऽमुष्य प्राणमुन्मृज इदमुन्मृज[2] इति । यदेतेन तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनो ऽङ्गेभ्य आयुषो ऽन्तरेति । ताजक् प्रध्वंसतीति ब्राह्मणमुक्तꣳ स्याद्विद्यमानानामुपस्तारणमुक्तꣳ संस्रवभक्ष-ख्यातो भक्षानुवाकः । ॥ ८ ॥ तृतीयः ॥

उक्तं पृषदाज्यस्याविक्लृप्तं ब्राह्मणमुक्तो हविर्धर्मो । अथ वै भवति यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वावमृशेच्चतुष्पादो ऽस्य पशवः प्रमायुकाः स्युर्यत्स्कन्देद्यज-मानः प्रमायुकः स्यादित्यथ वै भवति पशवो वै पृषदाज्यं । पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳ स्कन्दति । यत्पृष-दाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णातीति ब्राह्मणमथ वै भवति प्राणो वै पृषदाज्यं । प्राणो वा एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति । यत्पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति[3] ।

---

१ Thus M again, शं कामं कामयेत UBG, यं कां० कामयेत Be.
२ om. U Be.
३ इति ins BG

हिरण्यमवधाय[1] गृह्णातीति । स्रुचे पृषदाज्ये कंसं वा चमसं वा याचति । तमन्तर्वेदि निधाय तस्य सुधाꣳ संभरति भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यादिति । स्रुचमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेत्यथैनस्याꣳ[2] स्रुच्यवदधाति शतमानꣳ हिरण्यं । नित्ये यहणे वैष्णवीमृचमनुवर्तयति विष्णो त्वं नो अन्तम इत्यपोद्धृत्य हिरण्यमाज्यमवघ्राप्य सादयत्यथातो ऽमेध्यभूतस्यैव श्वावघ्रातस्य ध्वाङ्क्षावमृष्टस्य कीटावपन्नस्येति यद्[3] चान्यदमेध्यं मन्यते । सर्वत्र एवैताꣳ स्रुचमप्सु प्रवेश्याथान्यस्याꣳ स्रुच्यवदधाति शतमानꣳ हिरण्यं । नित्ये यहणे वैष्णवीमृचमनुवर्तयति विष्णो त्वं नो अन्तम इत्यपोद्धृत्य हिरण्यमाज्यमवघ्राप्यैव सादयत्यथ वै भवति वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति । वैष्णव्यर्चा पुनर्गृह्णातीति । स वैष्णव्यर्चा पुनर्गृह्णाति । यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ संतनोतीति ब्राह्मणं । ते यथान्तःप्राणं प्रचरिष्यन्तो भवन्ति तदाह ब्रह्मन्प्रचरिष्यामो होतर्घर्ममभिष्टुहीति । ब्रह्मा प्रसौति देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रचरतेति

१ गृह्णाति हिरण्यमवधाय om C
२ ०थैनं M
३ यच चान्यद० M

प्रतितिष्ठतीह[1] हविर्यज्ञेषु भवति । यदाह ब्रह्मन्प्रस्तोष्यामः प्रशास्तरिति तद्ब्रह्मा प्रसौति देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मायुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे भूरिन्द्रवन्तः स्तुतेति प्रातःसवने । भुव इन्द्रवन्तः स्तुतेति माध्यंदिने । सुवरिन्द्रवन्तः स्तुतेति तृतीयसवने । स्तुते स्तुतस्य दोहं वाचयति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्यादिति । शस्ते शस्त्रस्य दोहं वाचयति शस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादिति । तयोरुभयोरभ्यासं[2] वाचयतीन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषꣳ सा मे सत्याशीर्देवेषु भूयाद्ब्रह्मवर्चसं मागम्यादित्यथ यजमानः पुनराहतं जपति यज्ञो बभूव स आ बभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु वयꣳ स्याम पतयो रयीणामित्यथ ये भवति यज्ञो वा वै यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे । स य स्तुतशस्त्रयोर्दोहमविद्वान्यजते तं यज्ञो दुहे । स इष्ट्वा पापीयान्भवति । य एनयोर्दोहं विद्वान्यजते स यज्ञं दुहे । स इष्ट्वा वसीयान्भवति । स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादित्यात्मन्येव वै स्तुतशस्त्र-

---

१ B om. इह, Bhav comments upon it

२ Thus M, °भ्यासं BG, °भ्याभ्यासं Be U

योऽदोहस्तं य एवं विद्वान्यजते दुह एव यज्ञमिडा वसीयान्भवतीति ब्राह्मणमुक्तः होतृकाणाः संतर्पणमुक्तानि[1] वैश्वकर्मण्युक्तमाङ्गिरसो ऽवनयनमुक्तं भुवस्य पर्याय वै भवति ॥ ९ ॥

यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्रवर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्येति । स उक्थमुक्थं वैव प्रतिगीर्योक्थशा इत्याह सवनः सवनं[2] वोक्थं[2] वाचीत्याह माध्यंदिनः सवनं प्रतिगीर्योक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य । षळेतान्यक्षराणि । सप्तपदा शक्वरी । शाक्वरो वज्रो । वज्रेणैव तृतीयसवने यज्ञमन्तर्धत्त इति ब्राह्मणमेव वै भवति ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे छन्दांसि संपादयेत्तेजः प्रातःसवन आत्मन्दधीतेन्द्रियं माध्यंदिने सवने पशूंस्तृतीयसवन इत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्योक्थं वाचीत्याह माध्यंदिनः सवनं प्रतिगीर्योक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य । षळेतान्यक्षराणि । सप्तपदा शक्वरी । शाक्वराः पशवो । जागतं तृतीयसवनं । तृतीयसवन एव प्रतिगरे छन्दांसि संपादयत्यथो पशवो वै जगती । पशवस्तृतीयसवनं । पशूनेव तृतीयसवन आत्मन्धत्त इति

---

1 Thus M Be G (pr. m ), सर्पण॰ the other MSS.

2 Thus, without any various reading all the Dvaidha MSS , प्रातःसवनं सवन वोक्थं M pr m, but प्रातः is expunged and the second सवनं is changed into प्रतिगीर्य, प्रतिसवनं वोक्थ B Bo, प्रातःसवन वो॰ UG

ब्राह्मणमेव वै भवति यद्वै होताध्वर्युमभ्याह्वयत आत्मन्नधिन्दधाति। तद्धास्मापहनीत पुरास्य संवत्सराद्गृह आवेवीरञ्छोंऽसा मोद इवेति प्रत्याह्वयत इति। सो ऽभ्याहूतः शोंऽसा मोद इवेति प्रत्याह्वयते। तेनैव तदपहत इति ब्राह्मणमेव वै भवति यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते। यदभिप्रतिगृणीयाद्यथायतया समृच्छते तादृगेव तद्यदर्धर्चाल्लुप्येत यथा धावद्भ्यो हीयते तादृगेव तत्तदाहुर्नाप्रतिगरी स्यादाप्रतिगरी ह वा अभि[1] वा प्रतिगृणात्यर्धर्चाद्वा लुप्यते। प्रणौतीत्येव[2] प्रणौयादपानितीत्येवापान्यादि[3] एवं विद्वान्प्रतिगृणात्यन्नाद एव भवत्यास्य प्रजायां वाजी जायत इति ब्राह्मणमेव वै भवतीयं वै होतासावध्वर्युर्यदासीनः शंसत्यस्या एव तद्धोता नैत्यास्त इव हीयमथो इमामेव तेन यजमानो दुहे। यत्तिष्ठन्प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति। तिष्ठतीव ह्यसावथो[4] अमुमेव[4] तेन यजमानो दुहे। यदासीनः शंसति तस्मादितःप्रदानं देवा उपजीवन्ति। यत्तिष्ठन्प्रतिगृणाति तस्मादमुतःप्रदानं मनुष्या उपजीवन्ति। यत्प्राङासीनः शंसति

---

१ अपि all, but cp. TS III. 2. 9. 5

२ Thus M only, प्रणौतामेव the other MSS

३ एव after अपानितीति only found in M. The sense of these words is "only if he perceives that the hotar makes the praṇava, he should make the praṇava; only if he perceives that the hotar draws breath, he should draw breath," cp. Sat. Br. IV. 3. 2. 6.

४ ॰थोमुमेव M.

प्रत्यङ् तिष्ठन्प्रतिमृशति तस्मात्प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्त इति ब्राह्मणमथ वै भवति यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्रवर्तयति । पराङावर्तत इति । यो ऽभ्याहृतः पराङावर्तते । वज्रमेव तन्निकरोतीति ब्राह्मणमुक्तं प्रतिनिर्ग्राह्याणां ग्रहणमुक्तꣳ[1] सꣳस्रावस्यापिधानमुक्तमुपाꣳश्वन्तर्यामयोरनुमन्त्रणमुक्तं द्विदेवत्यानां चर्या[2] । ॥ १० ॥

चतुर्थः ॥

अथातो ऽतिग्राह्याणामेव ग्रहणꣳ । स यद्येको यदि वा बहव आग्रयणमेवैमाग्गृहीत्वा गृह्णाति । माहेन्द्रस्यैव होममनु हूयन्ते[3] । स आग्नेयं गृह्णात्यग्न आयूꣳषि पवस इत्यनुद्रुत्योपयामगृहीतो ऽस्यग्नये त्वा तेजस्वते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरग्नये त्वा तेजस्वत इत्यथैनꣳ होष्यन्नवेक्षते ऽग्ने तेजस्विंस्तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति । जुहोति दीक्षायै च त्वा तपसश्च तेजसे जुहोमीति । हुत्वा भक्षयति तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषं मा मां तेजो हासीदिति । भक्षयति मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधात्वित्यथैन्द्रं गृह्णात्युत्तिष्ठन्नोजसा सहेत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वौजस्वते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय

---

१ These two words are left out in all the MSS exc M

२ चर्याः Be

३ Thus (and cp Āp. XIII. [illegible] 7) MU, हूयते Be, हूयते BG.

ओजस्वत इत्यथैनꣳ होष्यन्नवेक्षत इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति । जुहोति महीनां पयो मा घघस चौजसे जुहोमीति । हुत्वा वाचयत्योजोविदस्योजो मा मा हासीरोजोमोजो हासिषं मा मामोजो हासीदिति । भक्षयति मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधात्वित्यथ वीर्यवा[1] वीर्यं गृह्णाति तरणिर्विश्वदर्शत इत्यनुद्रुत्योपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः सूर्याय त्वा भ्राजस्वत इत्यथैनꣳ होष्यन्नवेक्षते सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति । जुहोति वायोश्च मार्यां च भ्राजसे जुहोमीति । हुत्वा वाचयति सुवर्विदसि सुवर्मा मा हासीर्माहꣳ सुवर्हासिषं मा माꣳ सुवर्हासीदिति । भक्षयति मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधात्विति । ते वा एते पृष्ठ्यस्य षडहस्योत्तरेष्वहःसु गृह्यन्त एकविꣳशे त्रिणवे त्रयस्त्रिꣳशे । विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वायाग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वायेति ब्राह्मणमथोपाकरणं[2] जपति वायुर्हिंकर्तेत्यालिख्यं वा[3] करिष्यन्कर्ता वा प्रतिगरिष्यन्नेतद-

---

[1] Found in M only.

[2] The brāhmaṇa cited here is found T.S. VI. 6. 8. 2.

[3] om M Bc

जुर्भपतीडा देवहूरिति । प्रियो हैवार्त्विज्यस्य भवति । प्रश्नꣳ संव्याख्यास्यन्नेतद्यजुर्जपन्सभां प्रपद्यते । ऽभि हैव[1] तं[1] प्रश्नं जयति । ॥ ११ ॥

अथातो ऽꣳश्वदाभ्ययोरेव ग्रहणमꣳश्वदाभ्यौ ग्रहीष्यन्नुपकल्पयते द्वे औदुम्बरे नवे पात्रे तयोश्चतुःस्रक्त्यꣳशुपात्रं भवति क्षत्त्रियमदाभ्यपात्रं ते सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्यस्ते भवतः शतमानं च हिरण्मयोपनह्य राजस्तीनꣳशून्गृह्णाति वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसाग्नेः प्रियं पाथ उपेहि रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्यादित्यास्त्वा प्रवृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहीत्यथ होतृचमसे वसतीवरीभ्यो ऽध्यपो निःषिच्य ग्रावभिरधिषवणैराधूनोति मान्दासु ते शुक्र शुक्रमाधूनोमीति प्रतिपद्य शुक्रासु ते शुक्र शुक्रमाधूनोमीत्यातो । ऽथैतस्मिन्नदाभ्यपात्रे ऽꣳशूनुपसंगृह्य गृह्णाति शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चतेत्यथैनमादायोपोत्तिष्ठति ककुभꣳ रूपं वृषभस्य रोचते बृहदित्यथेति सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगा इत्यथाहवनीये जुहोत्यन्वारब्धे यजमाने यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्यथ प्रदक्षिणमावृत्य राजन्येवाꣳशूनपिसृजत्युशिक् त्वं

१ Thus MUG, हैवत Bo, हैवैनं B

देव सोम गायत्रेण छन्दसाग्नेः प्रियं पाथो अपीहि वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहीत्यथाह प्रतिप्रस्थातरुदकुम्भेन वा[1] मोदचमसेन[1] वा जघनेनाहवनीयं प्रत्युपतिष्ठस्वेति । स तथा करोत्यथैतद्धिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ बध्नीते नाधिकायां वा प्रपद्यात्यथ सकृदभिषुतस्य राज्ञो ऽंशुं गृह्णाति वामदेव्यमिति साम मनसा गायमानो ऽनवानं प्रजापतये[2] त्वेति[2] गृह्णाति[2] प्रजापतये त्वेति जुहोत्यथ हिरण्यमभिव्यनित्या[3] नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वेत्यथाप्स्वद्भिर्मार्जयत इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥ दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् । परि विश्वानि काव्या नेमिश्चक्रमिवाभवदित्यथैतद्धिरण्यं भवति[4] । ब्राह्मणमुत्तरम् । ॥ १२ ॥ पञ्चमः ॥

अथातः पृश्नीनामेव ग्रहणम् । संवत्सरं राजानं दशधा धूम्राभिन्दधाति वायुरसि प्राणो नामेति दशभिर्दश । ते वा

---

१ Thus M, सोदच॰ all the other MSS, omitting वा ।
२ om. Be
३ Thus MUG, ॰व्यनिता B Be, cp. T S III. 3. 4. 3.
४ All the MSS exc. M ins. इति ।

एते संवत्सरस्याचीयेष्वहःसु[1] गृह्यन्ते । यत्र क्व[2] चैवैनान्गृह्णीयादित्येतदपरमं यातः। परःसामानेव ग्रहणं । ते वा एते परःसामानः पुरस्ताद्वैषुवतात्सप्तदशमन्वहमितः पराञ्चो गृह्यन्ते । ऽथ वैषुवते[3] ऽह्नि पराञ्चस्त्वार्वाञ्चश्च गृह्यन्ते । ऽथोर्ध्वं वैषुवतात्सप्तदशमन्वहमावृत्तानेव गृह्णाति । प्रजापतिर्देवासुरानसृजतेति ब्राह्मणमेवाय[4] वै भवत्यार्त्स्यते वा एतद्यजमानो ऽग्निभ्यां यदेनयोः शृतंकृत्यायान्यद्यावत्स्वयमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवस्वयमवैष्यञ्जुहुयादिति । यो ऽवस्वयमवैष्यन्नायुर्दा इत्यग्नौ जुहोत्यायुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमं स्वाहेत्याहुत्यैवैनौ शमयति नार्तिमार्च्छति यजमान इति ब्राह्मणमुक्तं यदि पयः पर्युपोषणमुक्तं[5] सकृद्धोमस्त्वाथ वै भवति यदि मिश्रमिव चरेदञ्जलिना सकृत्प्रदाय्य जुहुयादिति । स्नातकः पुपूषमाणो ऽरण्ये प्रदाय्यं[6] दहनमुपाधिगम्याञ्जलिनोपस्तीर्णाभिघारितान्सक्तून्प्रदाय्य जुहोति विश्वलोप

---

१ Thus M, •स्याचीयेषु• all the other MSS, probably we have here a heteroclitic loc. from आचीयम् (आप्यम् of the other ritual texts), cp infra XVI 16 init

२ एव before एनान् om M

३ वैषुवतीये M and Bhav

४ ब्राह्मणमेवोच M.

५ पर्युपोषण• M, उपोषण• all the other MSS

६ Thus M, दहनमुपा• UBG, दवनमुपा• Be

विषदावस्य त्वामश्नुवीमि स्वाहेति । इध्मौ प्रध्वंसयते प्रधादेको ऽकुतादेकः समधनादेकः । ते नः कृणवन्तु भेषजꣳ सदः सहो वरेण्यमित्येतेन त्रिभिर्दर्भपुञ्जीलैः पवयति पवमानः सुवर्जन इत्येतेनानुवाकेन । शुद्धो हैव शुचिः पूतो मेध्यो भवत्यथ वै भवत्यक्तां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेदिति । यमो विजिज्ञासमानो महाराज चत्वायाक्तां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरुदित आदित्ये विप्रुषित आदहत एतमपूपमुपस्तीर्णाभिघारितं पर्णमेवाभ्यां परिगृह्य । तस्मात् पुलिखण्डानि भवन्त्यन्तमागाराद्देकोल्मुकमुद्दधाचमित्यैतत्समादाय तां दिशं यन्ति यथास्य कक्ष स्पष्टो भवति । तदेतदेकोल्मुकमुपसमाधायापूपमादीपयति पर्णमेवाभ्यां परिगृह्य । तस्मात् पुलिखण्डानि भवन्ति । तेन कक्षमुपोपत्यैनमनुद्रुत्यायंच विज्ञानमुपैति । यदि दहति पुण्यसमं भवति यदि न दहति पापसममेतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुपयन्तीति ब्राह्मणमेतेनमपूपं ब्राह्मणाय उपसृज्य स्थानेत्यृषभो गोषु क्षीयंति

---

१ ॰मुपोषेदिति MU.

२ Thus only M, ॰क्तां all the other MSS

३ Thus M, विप्रुषित BG, विप्रूषित Be U, Bhav comments, उदिते प्रकाशे।

४—४ This passage is left out in all etc. M

५ ॰मुपोपत्य॰ M.

६ ब्राह्मण M, perhaps rightly

तेन यक्ष्यमाणो भवति । तस्य तदुपक्लृप्तं भवति यत्पशुना यक्ष्यमाणस्याय[1] यद्युत्सृज्यन्भवति[2] तस्य निहत्य[2] दक्षिणं कर्ण-माजपति शिवस्त्वष्टः पिशङ्गरूप इति द्वाभ्यामथैनं गोष्वपि-सृजते ॥ १३ ॥

एतं युवानं परि वो ददामीत्यपियन्तमनुमन्त्रयते तां गावो ऽस्पृणत राज्याय त्वाहृ हवन्त मरुतः स्वर्काः । वर्षन्त्वस्य ककुभि शिश्रियाणस्ततो न उग्रो विभज वसूनीत्यथेतरं त्वाष्ट्रं वैन्द्रं वा प्राजापत्यं वा पशुमालभते[3] । एता हि वाशस्य देवतास्तस्योपाकरणीययोरनुवर्तयति नमो महिम्न उत चक्षुषे त इत्यथास्य वपां जुहोति देवानामेष उपनाह आसीदित्य-थास्य हविर्जुहोति पिता वत्सानां पतिरघ्नियानामिति । समानमुत्तरं पशुकर्म । वशया यक्ष्यमाण आह गर्भमीक्षध्व-मिति । ते चेद्गर्भं पश्यन्ति संमृज्याथ वशां वपयाऽऽवृणन्त्यथास्यै वपां जुहोति सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः । बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु स्वाहेति । गर्भमनुमन्त्रयते यस्यास्ते हरितो गर्भो ऽथो योनिर्हिरण्ययी । अङ्गान्यह्रुता यस्यै तां देवैः समजीगममि-त्यथ याचत्यष्टाप्रुड्ढिरण्यं क्षौमं चान्तरक्षौमं च वाससोष्णीषं

---

1 ॰माणस्याथैनमुत्सृज्य॰ M

2 Thus MGB, निहत्य U, निहत्ये Be

3 पशुम॰ M, पशून॰ all the other MSS

धायैतद्धिरण्मयमद्भिः[1] प्रक्षाल्य वाससोपनह्योष्णीषेण विग्रथ्य दक्षे कोशे ऽवधाय सव्ये कोशे ऽवदधाति । स आह प्रत्यञ्चं गर्भमन्तरेण सक्थ्यौ प्रतिनिवर्तयतेति । तं निवर्त्यमानमनुमन्त्रयत आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद । भूम्याश्चतस्रः प्रदिशस्ताभिरावर्तया पुनरित्युद्वाद्गर्भं विस्रस्यमानमनुमन्त्रयते वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ । वि मातरं च पुत्रं च वि गर्भं च जरायु च । बहिस्ते अस्तु बालितीत्यथैतं[2] गर्भं संदंशेन परिगृह्याद्भिरभ्युक्ष्य शामित्रे प्रतितपति । तस्याभ्यर्धादवदाहोमं[3] प्रद्योतयत्यथैतं गर्भमन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं चोपातिहृत्य[4] तं दक्षिणतः प्राञ्चमायातयन्पञ्चहोत्रा सादयत्यथ[5] वशायै हविषा चरत्यथ पुरस्तात्स्विष्टकृतो गर्भस्यावद्यन्नाह विष्णवे शिपिविष्टायानुब्रूहीत्यथ वै भवति पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यदिति । स पुरस्तान्नाभ्या अन्यदवद्यत्युपरिष्टादन्यद्द्विरभिघार्यत्याश्राव्याह विष्णुं शिपिविष्टं यजेति । वषट्कृते जुहोत्युरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम् । एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी

---

१ Thus M, धायैन° all the other MSS

२ Thus M, °थैनं the other MSS

३ Thus M, तस्याभ्यर्धं BG; तस्याभ्यर्धेवदा° Be U

४ Thus M, चोपानीत्य the other MSS

५ प्रांचमासादयत्यथ (see m. °मायातयत्यथ), omitting the partic. and [illegible] M

सप्तपञ्चाष्टापदी भुवनानु प्रथताꣳ स्वाहेत्यथ स्विष्टकृता चरत्यथैतं गर्भं यथाहृतं प्रतिपर्याहृत्योत्तरार्ध[1] आहवनीयस्य प्रत्यञ्चमासाद्य भस्मनाभिसमूहति मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां पिपृतां नो भरीमभिरित्यध्वर्यारेतस्कोशमिश्रं भवति । ब्राह्मणमुत्तरम् । ॥ १४ ॥ षष्ठः ॥

अजवशया यक्ष्यमाणो भवति । स यान्यत्रान्यमेधसंपन्नानि मन्यते तेष्वाग्नेयमष्टाकपालं निर्वपति । या[2] एता[2] ब्राह्मणाभिविहिता देवतास्तासामेनामेकस्यै देवताया आलभते । [3]नस्या [3]उपाकरणीययोरनुवर्तयत्या वायो भूप शुचिपा इति । नियोजने ऽनुवर्तयत्याकूत्यै त्वा कामाय त्वा[4] समृधे[4] त्वेति । पर्यग्नौ क्रियमाणे पशु' किक्किटाकारं जुहोति किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते प्राणं वायवे स्वाहा किक्किटा ते चक्षुः सूर्याय स्वाहा किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याꣳ स्वाहा किक्किटा ते वाचꣳ सरस्वत्यै स्वाहेत्यथैनामन्तरेण चात्वालोत्करावुदीचीं नीयमानामनुमन्त्रयते त्वं तुरीया वशिनी वशासि सकृद्यत्त्वा मनसा गर्भ आशयत् । वशा त्वं वशिनी गच्छ देवान्सत्याः सन्तु यजमानस्य कामा इत्युपासने ऽनुवर्तयत्यजासि रयिष्ठा पृथिव्याꣳ सीदोर्ध्वान्-

---

१ प्रतिपरिहृत्य॰ M

२ Thus M, वायो स्त्य GU, वाया स्त्य Bo, वायोश्च H

३ नस्योपा॰ M.

४ om. M

रिक्षमुपतिष्ठस्व दिवि ते बृहद्भा इत्यथास्यै वपां जुहोति तन्तुं तन्वन्रजसो भानुमन्विहीत्यथास्यै हविर्जुहोति मनसो हविरसि प्रजापतेर्वर्ण इत्यथास्या अवदानानां[1] प्राश्नाति गात्राणां ते गात्रभाजो भूयास्मेत्यर्धं वै भवति तस्यै वा एतस्या एकमेवा-देवयजनं यदालब्धायामभ्रो भवति यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयेत्सर्वां वा प्राश्नीयादित्युत्सर्गमेतस्या अप्सु प्रवेशनमेते-नैवास्यै मन्त्रेणावदानानां प्राश्याथेतरदप्स्वभ्यवहरेदिति बौधायनो[2] ऽनुनिधायमेनामथादित्याश्रीगविरित्ययं[3] वै भवति सा वा एषा ऋषीणामेवावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमेधिनस्त एवैतया यजेरन्तेषामेवैषाप्तेति तेषामु हैवै-नयैको[4] यजते ॥ १५ ॥

अथातो जयानामेव होमो जयान्होष्यन्नुपकल्पयते बाधकं स्रुवं च स्रुचं च बाधकान्परिधीञ्शरमयं बर्हिर्वैभीदकमिध्म-मित्यथ[5] इध्माग्निमुपसमाधाय शरमयं बर्हिः स्तीर्त्वा बाधका-न्परिधीन्परिधाय वैभीदकमिध्ममभ्यध्य[5] स्वाहाकारेणाभ्याधाय बाधकेन स्रुवेणोपघातं जुहोति चित्तं च स्वाहा चित्तिश्च स्वाहेति त्रयोदश स्रुवाहुतीरपि वा बाधकेन स्रुवेण बाधक्याः

---

१ अवदानानि M but cp. infra l. 7.

२ Thus MU, बौधायनो Be BG.

३ अथयेद् Be अथाद् M.

४ Thus MBG, तेषामुहैवनयैको Be U.

५ Thus M; ०वैभीतक० the other MSS

स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान्मन्त्रान्समनुद्रुत्य जुहोति चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञानं च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च रथंतरं च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव स्वाहेत्यथ वै भवति देवासुराः संयत्ता आसंस्त इन्द्रः प्रजापतिमुपाधावत्तस्मा एताञ्जयान्प्रायच्छत्तानजुहोत्ततो वै देवा असुरानजयन्यदजयंस्तज्जयानां जयत्वꣳ स्पर्धमानेनैते होतव्या जयत्येव तां पृतनामिति ब्राह्मणमथ वै भवति येन कर्मणेर्त्सेत्तत्र होतव्या इति स यत्कर्मर्त्संदिदं[1] मे समृध्येतेति तस्मिन्नभ्यातानाञ्जुहुयादित्यभ्यातानान्होष्यन्नुपकल्पयते पर्णमयꣳ स्रुवं च स्रुचं च पर्णमयान्परिधीन्कुशमयं बर्हिः पर्णमयमिध्ममित्यथ यथाग्निमुपसमाधाय कुशमयं बर्हि स्तीर्त्वा पर्णमयान्परिधीन्परिधाय पर्णमयमिध्ममभ्यज्य स्वाहाकारेणाभ्याधाय पर्णमयेन स्रुवेणोपघातं जुहोत्यग्निर्भूतानामधिपतिः स मावत्विति सप्तदश स्रुवाहुतीर्हुत्वा वाचयति पितरः पितामहा इत्यपि वा पर्णमयेन स्रुवेण पर्णमय्याꣳ स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान्मन्त्रान्समनुद्रुत्य हुत्वाथैतो वाचयति पितरः पितामहा इत्यथ समस्तानामेव होमो उभ्यातानानेवाग्रे जुहुयादथ जयानथ राष्ट्रभृतो ब्राह्मणमुत्तरम् ॥ १६ ॥ सप्तमः ॥

---

१ Thus M, यत्कर्मणेर्त्सं° the other MSS

अथ वै भवति राष्ट्रकामाय होतव्या इति ' राष्ट्रकामाय होष्यन्नुपकल्पयते शम्यापरिधीन्नित्यं[1] तृणाग्निमुपसमाधाय शम्यापरिधीन्परिधाय निशायाꣳ शम्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो जुहोत्युत्तानायाहूतधामेति ' राष्ट्रं वै राष्ट्रभृतो ' राष्ट्रेणैवास्मै राष्ट्रमवरुन्द्धे ' राष्ट्रमेव भवतीति ब्राह्मणमथ वै भवत्यात्मने होतव्या इत्यात्मने होष्यन्तृणाग्निमुपसमाधाय निशायाꣳ शम्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो जुहोति ' राष्ट्रं वै राष्ट्रभृतो ' राष्ट्रं प्रजा ' राष्ट्रं पशवो ' राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमवरुन्द्धे ' वसिष्ठः समानानां भवतीति ब्राह्मणमथ वै भवति ग्रामकामाय होतव्या इति ' ग्रामकामाय[2] होष्यन्नधिदेवने तृणाग्निमुपसमाधाय निशायाꣳ शम्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो जुहोति ' राष्ट्रं वै राष्ट्रभृतो ' राष्ट्रꣳ सजाता ' राष्ट्रेणैवास्मै राष्ट्रꣳ सजातानवरुन्द्धे ' ग्राम्येव भवतीति ब्राह्मणमथ वै भवत्यधिदेवने जुहोत्यधिदेवन एवास्मै सजातानवरुन्द्धे ' ■ एनमवरुद्धा उपतिष्ठन्त इति ब्राह्मणमथ वै भवति रथमुख ओजस्कामस्य होतव्या इत्योजस्कामस्य[3] होष्यन्नुपर्यग्नौ रथमुखं प्रवृह्य[3] निशायाꣳ शम्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो जुहोत्योजो वै राष्ट्रभृत ' ओजो रथ ' ओजसैवास्मा ओजो ऽवरुन्द्ध ' ओजस्व्येव भवतीति ब्राह्मणमथ

१ Thus MGB, शम्यापरि॰ U Be.
२ ॰कामाय MSS exc M.
३ परिवृह्य MSS exc. M.

वै भवति यो राष्ट्रादपभूतः स्यात्तस्मै होतव्या' यावन्तो ऽस्य रथाः स्युस्तान्ब्रूयाद्युङ्ग्ध्वमिति' राष्ट्रमेवास्मै युनक्तीति ब्राह्मणमथ वै भवत्याकूतयो वा एतस्याकॢप्ता यस्य राष्ट्रं न कल्पते' खरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभिजुहुयादिति 'ध'[1] खरथस्यैव दक्षिणं चक्रं प्रवृह्योपर्यग्नौ रथनाडीं प्रस्तभ्य[2] निग्रायाऽग्न्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो जुहोत्याकूतीरेवास्य कल्पयति' ता अस्य कल्पमाना राष्ट्रमनुकल्पन्त इति ब्राह्मणम्' ॥ १७ ॥

अथ वै भवति संग्रामे संयत्ते होतव्या इति' संग्रामे संयत्ते होष्यन्नुपकल्पयते मान्थुकमिध्ममित्यथ प्रत्यमित्रमग्निमुपसमाधाय मान्थुकमिध्ममभ्यस्य स्वाहाकारेणाभ्याधाय निग्रायाऽग्न्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो जुहोत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रतिवेष्टयन्तीति ब्राह्मणमथ वै भवति य उन्मादयेत्तस्मै होतव्या इत्युन्मत्ताय होष्यन्नुपकल्पयते नैयग्रोधमौदुम्बरमाश्वत्थं प्लाक्षमिध्ममित्यथ हृपाग्निमुपसमाधायैतमिध्ममभ्यस्य स्वाहाकारेणाभ्याधाय निग्रायाऽग्न्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो [3]जुहोत्येते वै गन्धर्वाप्सरसो ग्रहाः' स एवैनानायतने शमयतीति ब्राह्मणमथ वै भवत्यभिचरता प्रतिलोमꣳ होतव्या इत्यभिचरन्होष्यन्नुपकल्पयते[4]

१ only given by M.

२ प्रस्तभ्य M Be, प्रवृह्य the other MSS

३ . . ३ (p. 184, 2) left out in M

४ probably read इति यो ऽभिचरन्हो॰ ।

दक्षिणे प्रदरे वाशुतो ऽवाञ्चो दध्याग्निमुपसमाधाय निशायाꣳ शम्यापरिधौ द्विः स्वाहाकारꣳ[१] राष्ट्रभृतो[२] जुहोति । यदाधः क्रूरं तेन वषट्करोति । वाच एवैनं क्रूरेण प्रहरति । ताजगार्तिमार्च्छतीति ब्राह्मणमेव वै भवति यस्य कामयेताभ्याशमाददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि संगृह्णीयादिति । स यस्य कामयेताभ्याशमाददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि संगृह्यथैतान्यादाय हरतीदमहममुष्यामुष्यायणस्याद्यꣳ हरामीत्यद्यमेवास्य हरति । षड्भिर्हरतीति ब्राह्मणमेवैतानि स्वस्यां वा सभायाꣳ स्वेषु वासायेष्वपिदधाति । प्रजापतिमेवाभ्याद्यमादायतेनो ऽभ्या अनुमयच्छन्तीति ब्राह्मणमेव वै भवति यो ज्येष्ठबन्धुरपभूतः स्यात्तꣳ स्थले ऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा तस्मै होतव्या इति । स यो ज्येष्ठबन्धुरपभूतः स्यात्तꣳ स्थले ऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा निशायाꣳ शम्यापरिधौ द्विः स्वाहाकारꣳ राष्ट्रभृतो जुहोति । वर्म वै राष्ट्रभृतो । वर्म स्थलं । वर्मणैवैनं वर्म समानानां गमयतीति ब्राह्मणमेव वै भवति चतुःशरावो भवति । दिक्ष्वेव प्रतितिष्ठति । क्षीरे भवति । रूपमेवास्मिन्दधात्युद्धरति शृतत्वाय । सर्पिष्वान्भवति मेध्यत्वाय । चत्वार आर्षेयाः प्राश्नन्ति । दिशामेव ज्योतिषि जुहोतीति ब्राह्मणम् । ॥ १८ ॥

---

१ ०कारेव the MSS

२ (p 183,17) १...२ left out in M.

अथ वै भवति देविका निर्वपेत्प्रजाकाम इति ' प्रथमं धातारं प्रजाकामस्य करोति ' प्रथमं पशुकामस्य ' मध्यतो ग्रामकामस्य ' मध्यतो ज्योगामयाविनः ' प्रथमं यक्ष्यमाणस्यो-त्तममीजानस्य ' प्रथमं मेधाकामस्य ' मध्यतो ब्रह्मकामस्य ' ता वा एताः चीरे श्रृता भवन्ति ' ता यत्सह सर्वा निर्वपेदीश्वरा एनं प्रदहो ' द्वे प्रथमे निरुप्य धातुस्तृतीयं निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनं न प्रदहन्त्यथो यस्मै कामाय निरुप्यते तमेवाभिस-पाप्नोतीति ब्राह्मणमथ वै भवति यत्सायंप्रातरग्निहोत्रं जुहो-त्याहुतीष्टका एव ता उपधत्ते यजमानो ' ऽहोरात्राणि वा एतस्येष्टका आहिताग्नेर्यत्सायंप्रातर्जुहोत्यहोरात्राण्येवाप्तेष्टकाः कृत्वोपधत्ते ' दश समानत्र जुहोति ' दशाक्षरा विराड्विराज-मेवाप्तेष्टकां कृत्वोपधत्ते ' ऽथो विराज्येव यज्ञमाप्नोति ' चित्य-श्चित्यो ऽस्य भवति ' तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञ-वास्त्ववास्त्वेव तद्यत्ततो ऽर्वाचीनमिति ' स यत्र दशोषित्वा प्रयास्यन्भवति तदग्निहि ऽनसि समवप्रमयन्तौ[१] यदस्य[१] समवप्र-मथितव्यं[१] भवत्यवास्त्वेव तद्यत्ततो ऽर्वाचीनम्' रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद्रुद्र एनं भूत्वाग्नि-रनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति ' भागधेयेनैवैनं शमयति ' नार्तिमार्च्छति यजमान इति ब्राह्मणमथ वै भवति यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं जुहोति तादृगेव तद्यदयुक्ते

१ Thus M only, all the other MSS. are here wholly corrupted

दीदिहि नो दुरोण इति । यजमानो वा अग्नेर्योनिः । स्वायामेवैनं योन्याᳲ समारोहयत इति ब्राह्मणम् । ॥ १९ ॥ अष्टमः ॥

उक्तो ऽन्वारम्भो । ऽथ वै भवत्यृषयो वा इन्द्रं प्रत्यक्षं नापश्यन्तं वसिष्ठः प्रत्यक्षमपश्यत्सो ऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्ते ऽथ मेतरेभ्य ऋषिभ्यो मा प्रवोच इति । तस्मा एतान्स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्तेति । तस्मादाऊर्वासिष्ठं ब्रह्मत्वमिति । स यदाह ब्रह्मन्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा[1] प्रसौति देव सवितरेतां प्रतिपदं कृत्वा रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्येतस्यानुवाकस्यैकैकमुपादाय प्रसौति । स एवमेव प्रसवनाद्दशभिरग्निष्टोमं प्रसौति त्रयोदशभिरत्यग्निष्टोमं पञ्चदशभिरुक्थ्यᳲ षोडशभिः षोडशिनᳲ सप्तदशभिर्वाजपेयमेकान्नत्रिᳲशतातिरात्रᳲ सर्वैरप्तोर्यामᳲ । स यत्र राथंतराय सन्धये प्रसर्पन्ति तदाह वसुको ऽसि वेषश्रिरसि वस्यष्टिरसीति । स एवमेव प्रसौत्याप्तोर्यामाद्यावतो[2] ऽतिक्रमाणानेवाभिचरन्भ्रातृव्यवान्स्पर्धमानो ऽभिचरणीयमित्यथान्याचाय संवत्सरमेतैः क्रमैः क्रमेताग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्ना वषट्कारेण वज्रेण पूर्वजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदे ऽस्मिन्क्षये ऽस्मिन्भूमिलोके यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान्क्रामामीन्द्रेण देवेन पृतना जयामि

---

१ तद् is left out in all MSS exc. M.

२ प्रसौत्याप्तोर्या॰ M

जुहुयाद्यया चेम आहुतिं जुहोति तादृगेव तदं॑हृतमध्य वास्तोष्पतीयꣳ स्याद्दक्षिणो युक्तो भवति सव्यो ऽयुक्तो' ऽथ वास्तोष्पतीयं जुहोतीति' स यत्र दक्षिणो युक्तो भवति सव्यो ऽयुक्तस्तमत्याच्छेद्यां[१] पर्णमय्याꣳ स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये वास्तोष्पतीयं जुहोति' वास्तोष्पते प्रतिजानीह्यस्मानित्यनुद्रुत्य वास्तोष्पते शग्मया सꣳसदा त इति जुहोत्य॑थैताꣳ स्रुचमुपनिधाय सव्यं युक्त्वा प्रयात्यु॑भयमेवाक॑र्परिवर्गमेवैनꣳ शमयतीति ब्राह्मणम॑थ वै भवति यदेकया जुहुयाद्द॑र्विहोमं कुर्यात्पु॑रोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वायेति ब्राह्मणम॑थ वै भवति यद्युत प्रादध्याद्गृहं गच्छामस्यारोहयेद्य॑न्यत्राप्यग्निं मथायाद्यया यज्ञवेशसं वाद्दृशं वा तादृगेव तद॑यं ते योनिर्ऋत्वियेत्यरण्योः समारोहयत्ये॑ष वा अग्नेर्योनिः' स्व एवैनं योनौ समारोपयत्य॑थो खल्वाहु॑र्यदरण्योः समा॑रूढो नश्येदुदस्याग्निः सीदेत्पुनराधेयः स्यादिति' या ते अग्ने यज्ञिया तनूस्तयेह्यारोहेत्यात्मन्समारोहयत इति' स आत्मन्समारोहयते या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि। यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः सक्षय एहीत्य॑थैनमुपावरोहयत उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्। आयुः प्रजाꣳ रयिमस्मासु धेह्यजस्रो

१ Thus MGUB Bhav ; प्रयादेयां Be. This word occurs also in the Baudh pitṛmedhasūtra (p 13, 1)

दीदिहि नो दुरोण इति । यजमानो वा अग्नेर्योनिः । स्वायामेवैनं योन्याꣳ समारोहयत इति ब्राह्मणम् । ॥ १९ ॥ अष्टमः ॥

उक्तो ऽन्वारम्भो । ऽथ वै भवत्यृषयो वा इन्द्रं प्रत्यक्षं नापश्यन्तं वसिष्ठः प्रत्यक्षमपश्यत्सो ऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्ते ऽथ मेतरेभ्य ऋषिभ्यो मा प्रवोच इति । तस्मा एतान्स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्तेति । तस्माद्वाऽऽसिष्ठं ब्रह्मत्वमिति । स यथाह ब्रह्मन्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा[1] प्रसौति देव सवितरित्येतां प्रतिपदं कृत्वा रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्येतस्यानुवाकस्यैकैकमुपादाय प्रसौति । स एवमेव प्रवृद्वाद्दशभिरग्निष्टोमं प्रसौति चतुर्दशभिरत्यग्निष्टोमं पञ्चदशभिरुक्थ्यꣳ षोडशभिः षोडशिनꣳ सप्तदशभिर्वाजपेयमेकान्नत्रिꣳशतातिरात्रꣳ सर्वैरप्तोर्यामꣳ । स यत्र राथंतराय सन्धये प्रसर्पन्ति तदाह वसवो ऽसि वेष्यश्रिरसि वस्यष्टिरसीति । स एवमेव प्रसौत्याप्तोर्यामाद्यातो[2] ऽतिक्रामाणामेवाभिचरञ्भ्रातृव्यवान्स्पर्धमानो ऽभिचरणीयमिष्ट्वान्यायात्स संवत्सरमेतैः क्रमैः क्रमेताग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्ना वषट्कारेण वज्रेण पूर्वजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदे ऽस्मिन्क्षये ऽस्मिन्भूमिलोके यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान्क्रामामीन्द्रेण देवेन पृतना जयामि

---

१ तद् is left out in all MSS exc M

२ प्रसौत्याप्तोर्या॰ M

त्रैष्टुभेन छन्दसा [1]पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदे ऽस्मिन्क्षये ऽस्मिन्भूमिलोके यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान्क्रामामि[1] विश्वेभिर्देवेभिः पृतना जयामि जागतेन [1]छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेण-परजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदे ऽस्मिन्क्षये ऽस्मिन्भूमिलोके यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येना[1]न्क्रामामीत्यपि वाभिचरणीयास्विष्टिष्वनुवर्तेतापि वापोद्धृत्येतरान्क्रमान्संवत्सरमेतैः क्रमैः क्रमेतामृद्धिकामस्त्विनो-रधिद्रवणमेयातो ऽनौमोचाणामेव[2] वैश्वकर्मणानि कृत्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा गार्हपत्ये जुहोत्यन्वारब्धे यजमाने ॥ २० ॥

ये देवा यज्ञहनो पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति ये देवा यज्ञमुषः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्यथाग्नीध्रमभिप्रेत्यागन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति । नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिव इत्यथाग्नीध्रं हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे जुहोत्यन्वारब्धे

---

१,१ The two passages marked at the beginning and the close by १ and १ are left out by all the MSS exc M.

२ ॰नौमो॰ MBG (sec m.), ॰निमो॰ Be UG (pr. m)

यजमाने ये देवा यज्ञहनो ऽन्तरिक्षे ऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाग्नीध्र एव जुहोति ये देवा यज्ञमुषो ऽन्तरिक्षे ऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्याहवनीयमभिप्रैति यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति। गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसीत्याहवनीयं हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने ये देवा यज्ञहनो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति ये देवा यज्ञमुषो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्याहवनीयमुपतिष्ठते येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आधेह्येनमिति' यज्ञहनो वै देवा यज्ञमुषः सन्ति' त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य' ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेतीति ब्राह्मणमपि वा तिस्र एव गार्हपत्ये जुहोति तिस्र आग्नीध्रे तिस्र आहवनीये' ऽपि वा गार्हपत्याज्ज्वलन्तमनुद्रवेदाहवनीयादुल्मुकोद्यमानो येष्टिरैता[1] तृतीयां प्रहृताऽग्निं जुहोति सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानो ऽग्निर्मा पातु चक्षुषः

१ ०ज्वलन्तमनुद्रवेद० M B. ०ज्वलन्नुद्रवेद० BUG

हुत्वोपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्यथातः प्राणभृतामेव ग्रहणꣳ । सर्वमꣳ राजानं पुञ्जीकृत्वा¹ नवाꣳशूꣳश्च आयातयत्ययं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथंतरꣳ रथंतराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्य इत्ययं दक्षिणा विश्वकर्मेति नव दक्षिणायातयत्ययं² पश्चाद्विश्वव्यचा इति नव प्रतीच आयातयतीदमुत्तरात्स्वरिति नवोदीच आयातयत्यियमुपरि मतिरिति नवोपरिष्टात्संदक्षिणं पर्यायातयति । तानपानभृद्भिः प्रत्यूहति प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषिरिति । वाचयति पितरः पितामहाः परे ऽवर इति ये पुरस्ताद्भवन्ति । दक्षिणा दिशामिति ये दक्षिणतो भवन्ति । प्रतीची दिशामिति ये पश्चाद्भवन्त्युदीची दिशामिति य उत्तरतो भवन्त्यूर्ध्वा दिशामिति य उपरिष्टात्संदक्षिणं पर्यायानिता³ भवन्ति । ते वा एते प्रायणीयोदयनीययोरेव

---

१ Thus ( पुञ्जी॰ ) M, पुंजी BG, पुञ्जी Be C

२ Thus M, दक्षिणायातयत्य॰ Be GC, B defect

३ Conjecturally, पर्यायानिता BG पर्यायानिता M पर्यायनित्यानिता C पर्यावानिता Be

नियुक्ता दशमे ऽहरहर्न्दु[1] रात्रिसत्रेष्वप्यग्निष्टोम[1] आमयाविन उपहतो वा गृह्णीयादगदो हैव भवति ॥ २२ ॥ दशमः ॥

अथ वै भवत्युभये वा एते प्रजापतेरध्यसृज्यन्तेति ब्राह्मणमेव युवꣳ सुराममश्विनेति सौत्रामण्यामेव[2] भवत्यथ वै भवतीयं वा अग्निहोत्रीयं वा एतस्य निषीदति यस्याग्निहोत्री निषीदति तामुत्थापयेदिति स यस्याग्निहोत्री निषीदति तामुत्थापयत्युदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्यथ वै भवत्यवर्ति वा एवैतस्य पाप्मानं प्रतिख्याय निषीदति यस्याग्निहोत्र्युपसृष्टा निषीदति तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति स यस्याग्निहोत्र्युपसृष्टा निषीदति तामेतदेव दुग्ध्वा ब्राह्मणाय ददाति न चाश्नात ऊर्ध्वमन्नमस्याथ वै भवति पृथिवीं वा एतस्य पयः प्रविशति यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति तदभिमन्त्रयेतेति स यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति तदभिमन्त्रयते यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु पयो वत्सेषु पयो अस्तु तन्मयीत्याह पय एवात्मन्गृहेषु पशुषु धत्ते ऽप उपसृजत्यद्भिरेवैनदाप्नोतीति ब्राह्मणमथ वै भवति यो वै यज्ञस्यार्तेनार्तꣳ संसृजत्युभे वै ते तर्ह्यार्च्छत आर्च्छति खलु वा

१ Thus M, B and G (sec. m) om. अपि; नदुरात्रिसत्रेष्वग्निष्टोम U, नदतिरात्रे सत्रे ष्टोम Bo, नदुरात्रिसत्रेष्वग्निष्टोम G (pr m).

२ एव । 80 एव M

एतदग्निहोत्रं यद्दुह्यमानꣳ स्कन्दति यदभिदुह्यादिति[1] स यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति नैनदभिदोग्धि तदेव यादृक्कीदृक् च होतव्यमथान्यां दुग्ध्वा पुनर्होतव्यमनार्तेनैवार्तिं यज्ञस्य निष्करोतीति ब्राह्मणमथ वै भवति यदुद्धृतस्य स्कन्देद्यत्ततो हुत्वा पुनरेयाद्यज्ञं विच्छिन्द्यादथ स्कन्देत्तमभिपद्य पुनर्गृह्णीयादिति स[2] यत्रैव स्कन्दति तदेव स्थालीं निधायाभिप्रष्टमानीय पुनरभ्युन्नीय तदेव यादृक्कीदृक् च होतव्यमथान्यां दुग्ध्वा पुनर्होतव्यमनार्तेनैवार्तिं यज्ञस्य निष्करोतीति ब्राह्मणमथ वै भवति नि वा एतस्य यज्ञश्छिद्यते यस्याग्निहोत्रे ऽधिश्रिते श्वाऽन्तरा धावति रुद्रः खलु वा एष यदग्निर्यद्गामन्वत्यावर्तयेद्रुद्राय पशूनपिदध्यादपशुर्यजमानः स्याद्यदपो ऽत्यतिषिञ्चेदनाद्यमग्नेरापो ऽनाद्यमाभ्यामपिदध्याद्गार्हपत्याद्भस्मादायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयाद्ध्वꣳसयन्नुद्द्रवेदिति स वैष्णव्यर्चाहवनीयाद्ध्वꣳसयन्नुद्द्रवति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ संतनोतीति ब्राह्मणमथ भस्मना शुनः पदमपिवपति मायया इति ब्राह्मणम् ॥ २३ ॥

अथ वै भवति नि वा एतस्याहवनीयो गार्हपत्यं कामयते नि गार्हपत्य आहवनीयं यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेदथाग्निमथाग्निहोत्रमिति स यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति दर्भेण

१ Thus M, नदभिदु॰ B Be G, न यदभिदु॰ U.

२ om Be U.

हिरण्यं प्रबध्य परिकर्मी पूर्वः प्रतिपद्यते ऽन्वग्ब्राह्मण आर्षेय दृषीनान्वगात्मनाग्निहोत्रेणैतद्धिरण्यमाहवनीयस्यायतने सादयित्वापोद्धृत्य हिरण्यं प्रदक्षिणमाहृत्येषं प्रतिष्ठापयत्यथ वै भवत्यग्निहोत्रमुपसाद्या तमितोराधीत । अतमेव व्रतमनुम्रियते । ऽन्तं वा एष आत्मनो गच्छति यस्याग्न्यर्त्यन्तमेव यज्ञस्य गच्छति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति । पुनः समन्य जुह्वोत्यन्तेनैवान्तं यज्ञस्य निष्करोतीति ब्राह्मणमथ वै भवति वरुणो वा एतस्य यज्ञं गृह्णाति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति । वारुणं चरुं निर्वपेत्तेनैव यज्ञं निष्क्रीणीत इति ब्राह्मणमथ वै भवति नि वा एतस्याहवनीयो गार्हपत्यं कामयते नि गार्हपत्य आहवनीयं यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति । चतुर्गृहीतमाज्यं पुरस्ताद्धरेद्यथाग्निमथाग्निहोत्रमिति । स यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति चतुर्गृहीतेनाज्येन परिकर्मी पूर्वः प्रतिपद्यते ऽन्वग्ब्राह्मण आर्षेय दृषीनान्वगात्मनाग्निहोत्रेणैतदाज्यमाहवनीयस्यायतने सादयित्वापोद्धृत्याज्यमथेषं प्रतिष्ठापयत्यथ वै भवति पराङ् वा एतस्मै व्युच्छन्ती व्युच्छति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेत्युषाः केतुना जुषतां यज्ञं देवेभिरन्वितम् । देवेभ्यो मधुमत्तमꣳ स्वाहेति प्रत्यञ्चिपद्याज्येन जुहुयात्प्रतीच्येवास्मै विवासयतीति ब्राह्मणमथ वै भवत्यग्निहोत्रमुपसाद्या तमितोराधीत । अतमेव व्रतमनुम्रियते । ऽन्तं वा एष आत्मनो गच्छति यस्याग्न्यर्त्यन्तमेव यज्ञस्य गच्छति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति । पुनः समन्य जुहोत्यन्तेनैवान्तं यज्ञस्य निष्करोतीति

ब्राह्मणमथ वै भवति मित्रो वा एतस्य यज्ञं गृह्णाति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति मैत्रं चरुं निर्वपेत्तेनैव यज्ञं निष्क्रीणीत इति ब्राह्मणमथ वै भवति यस्याहवनीये ऽनुद्वाते गार्हपत्य उद्वायेद्यदाहवनीयमनुद्वाय गार्हपत्यं मन्थेद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेद्यद्वै यज्ञस्य वास्तव्यं क्रियते तद्रुद्रो ऽवचरति यत्पूर्वमन्ववस्येद्वास्तव्यमग्निमुपासीत रुद्रो ऽस्य पशून्घातुकः स्यादाहवनीयमुद्वाय गार्हपत्यं मन्थेदिति स आहवनीयमुद्वाय गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयतीति ब्राह्मणमथ वै भवति गार्हपत्यं मन्थति गार्हपत्यं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते स यदुद्वायति तद्रु पशवो ऽपक्रामन्तीत्यथैनमुपतिष्ठत इषे रय्यै रमस्व सहसे द्युम्नायोर्जे ऽपत्यायेत्यथैनमुपसमिन्द्धे सारस्वतौ त्वोत्सौ समिन्धाताꣳ सम्राडसि विराडसीति ॥ २४ ॥

अथ वै भवति वज्रो वै चक्रं वज्रो वा एतस्य यज्ञं विच्छिनत्ति यस्यानो वा रथो वान्तराग्नी यात्याहवनीयमुद्वाय, गार्हपत्यादुद्धरेदिति स आहवनीयमुद्वाय गार्हपत्यादधिमुद्धरति यदग्ने पूर्वं प्रभृतं पदꣳ हि ते सूर्यस्य रश्मीनन्वाततान। तत्र रयिष्ठामनुसंभरैतꣳ सं नः सृज सुमत्या वाजवत्येति पूर्वेणैवास्य पदेन यज्ञमनुसंतनोतीति ब्राह्मणमथैनमुपतिष्ठते त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वत इत्यग्निः सर्वा देवता देवताभिरेव यज्ञꣳ संतनोतीति ब्राह्मणमथाग्नये

पश्चिह्नते पुरोडाशमष्टाकपालं निर्वपत्यन्वाहार्यमासाद्यानड्वाहं ददाति। सा प्रसिद्धेष्टिः संतिष्ठते। अथ वै भवति यस्य प्रातः-सवने सोमो ऽतिरिच्यते माध्यंदिनꣳ सवनं कामयमानो ऽभ्यतिरिच्यत इति। स प्रातःसवने सोमे ऽतिरिक्ते प्राज्ञायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वेभ्य एव राजानमुन्नय मातिरीरिच इति। होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वेभ्य एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते। तदेतद्गायत्रꣳ साम पञ्चदशं गौधयति..सूरतामिति धयद्वतीषु कुर्वन्ति। होष एवोत्तमेनि कामयते नि गार्ह-न ऊर्ध्वमेव वै भवति यस्य माध्यंदिने से ऽभ्युदेति। चतुर्गृही-आदित्यं तृतीयसवनं कामयमानो ऽभ्यति.. यस्याग्निमनु-माध्यंदिने सवने सोमे ऽतिरिक्ते प्राज्ञायन्नाह .. पूर्वः प्रति-न्नयध्वमुन्नेतः सर्वेभ्य एव राजानमुन्नय मातिरी.. ऽभ्य-होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरा.. राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप .. बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते। तदेतद्गौरिवीतꣳ साम ..

सर्वं वै भवति यस्य तृतीयसवने सोमो ऽतिरिच्येतोक्थ्यं कुर्वीत । यद्युक्थ्ये ऽतिरिच्येतातिरात्रं कुर्वीत । यद्यतिरात्रे ऽतिरिच्यते तं वै दुष्प्रज्ञानमित्यतिरात्रे ऽतिरिक्ते प्राङाथसाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वम एव राजानमुन्नय मातिरीरिच इति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वम एव राजानं समुन्नीयोत्तरवेद्यां सङ्छादयदन्तर्धाय उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । तदेतद्बृहत्सामैकविंशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति । होत्र एषोत्तमेति प्राहुः । समानमत ऊर्ध्वम् । ॥ २५ ॥

[1]इति नु छन्दोगब्रुवेषु कामयमानेषु । ते येष कामयेरन्प्रातःसवने ऽतिरिक्ते या स्थालीमयूं राज्ञो ऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणस्थालीयाधस्तादुपस्तृणाति । निरभिविष्यन्दयति । सो ऽभिविष्यन्दमानः सर्वं आग्रयणः संपद्यते । तं निरभिहिंसाय परिमृज्य सादयति । माध्यंदिने सवने ऽतिरिक्ते तथैव या स्थालीमयूं राज्ञो ऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणस्थालीयाधस्तादुपस्तृणाति । निरभिविष्यन्दयति । सो ऽभिविष्यन्दमानः सर्वं एवाग्रयणः संपद्यते । तं तथैव निरभिहिंसाय परिमृज्य सादयति । तृतीयसवने ऽतिरिक्ते हारियोजनमेवाप्याभिविष्यन्दयति । न हि पुनर्ग्रहणं विद्यते । ऽथातो

---

[1] In XIV 12 13

ध्रुवस्यैव[1] परिह्रीणस्य[1] सौमाहुत्यैन्द्राग्निभ्यामेतमृग्भ्यां परिगृह्य जुहुयादिन्द्राग्नी[2] वै देवानां पुनःपुनरभ्युपाकारं[3] यज्ञाम[3] इत्येतदेकमाश्विनीभ्यामेतमृग्भ्यां परिगृह्य जुहुयादश्विनौ वै[4] देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीत्येतदेकं वैष्णवीभ्यामेतमृग्भ्यां परिगृह्य जुहुयाद्यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यतिरिच्यत इत्येतदेकमथाप्येनैनत्सहाभ्यवहरेयुर्यथा सेऽन्यानि सोमलिप्तानि पात्राण्येवं स एव भविष्यतीत्येतदेकं बहिर्वैनत्सहाभ्युपोपेयुर्वा अग्निर्वैश्वानरो यत्प्रदाव्यो ऽग्नय एव वैश्वानराय हूयते ध्रुव एवमग्नौ वैश्वानरे हुतो भविष्यतीत्येतदपरमेव पुनर्दीयते यज्ञो ह[5] वै[6] यज्ञस्य प्रायश्चित्तिरिति[6] श्वेताश्वयाजिनो ऽथ ऋत्विजां मार्जालीये[7] परिषन्दे[7] निषण्णवन्त[7] हत्वा तदेवं निमयन्ति स्वो भूते हि ते सोष्यन्तो[8] भवन्ति ॥ २९ ॥ एकादशः ॥

उक्ताः सप्तवो ऽथ वै भवत्यार्तिं वा एते नियन्ति येषां दीक्षितानां प्रमीयते तं यद्वावर्जयुः क्रूरकृतामिवैषां लोकः

१ ध्रुवस्य परिहीणस्यैव M.

२ इन्द्रौ i.s.o. इन्द्राग्नी all exc. M

३ Thus MGU; ०भ्युपकारं Be; H om. यज्ञ।

४ हि Be.

५ Thus M Be; देव the other MSS.

६ ०रितौ again most of the MSS.

७ Thus MB Bhav , मार्जालीयोपरिविष्टंदमर्थं Be UG (pr. m.); मार्जालीये परिविष्टंद्धिष्ण्यवतं H (sec. m.).

८ Thus MU; सोष्यतो Be BG.

स्यादाहर दहेति ब्रूयादिति । दीक्षितं चेदुपतपदिन्द्राग्नी- ध्रीयप्रयतो[1] ह्य[2] भवति । तदस्मै भक्षानाहरन्ति यावद्भक्षं भक्षाय मन्यते । स यद्यगदो[3] भवति पुनरैति । यद्यु वै प्रैति सर्वेभ्यो ऽग्निभ्यो ऽङ्गारान्निर्वर्त्यारण्योरग्नीन्समारोह्यान्तरेण चात्वालोत्करावुदङ्ङुपनिर्वर्त्य तेनैनं दहेयुस्तं चिरायेण प्रीतीकृत्वा संचिनुयुस्ते यथाहृतेन[4] पलाशवल्कस्था[5] काङ्क्षेयुरथ संस्थिते यज्ञे ऽस्थिकुम्भं याचति । तमित्संचितमवधाय तं दक्षिणतो वेद्यै निधाय सर्पराज्ञ्या ऋग्भिः स्तुयुरियं[6] वै सर्पतो राज्ञ्या एवैनं परिददति । युद्धं तदित्याऊर्ध्वमस्तुतमननुप्रसक्तमिति । होता प्रथमः प्राचीनावीती मार्जालीयं परीयाद्यामीरक्षमुव- न्सर्पराज्ञीनां[6] कीर्तयेदिति । तेषां तथा परीतानामध्वर्युर्जघन्यः पर्यैत्याथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपरियन्ति । तेषां तथा परीतानामध्वर्युः पूर्वः पर्यैत्यथैनमादायान्तरेण चात्वा- लोत्करावप्लावं चास्थिकुम्भं च निधायाङ्गिरवो चतुष्पय[7] नः प्रोष्ठपदप्रमिति । तमिन्नैवावरूपापास्य चाम्प्रयन्त्यंपाति स्पिष्टं प्रयच्छामेते । मक्षावक्षयवेलायामस्थिकुम्भं निधायाङ्गिरवोपदर्तद-

---

१ Thus M; ॰षोमीयेष्ट॰ the other MSS

२ om M.

३ Thus M; यथगाद॰ Bo, यद्युगाद॰ the other MSS

४ सर्वेनाक्ष॰ M Bo.

५ स्थि left out by all exc. M.

६ The passage from इयं वै unto वालोरमुष्य left out by all exc. M.

७ [illegible]

वसथ उ[1] वैवेव[1] भवत्यपि[1] वा[1] यो[1] ऽन्यस्तो[1] नेदिष्ठी स्यात्तस्य स्थाने तं दीक्षयेत्संवत्सरे ऽग्नौनि याजयन्त्यय[3] वै भवति ॥ २७ ॥

असुर्यं वा एतस्मादर्णं कृत्वा पशवो वीर्यमपक्रामन्ति यस्य यूपो विरोहति । त्वाष्ट्रं बहुरूपमालभेतेति । सञ्छिन्नं चेद्यूपो विरोहेत्संमर्ष्छिद्यात्[4] पयसा स्रवणीयस्य त्वाष्ट्रमुपालभ्यं कुर्युरपि वा त्वाष्ट्रं मधौदनं सपथितैस्सः स्रावाः प्रस्थयेयुः प्र वा तत्प्युपुरपि वा त्वाष्ट्रीः सुवाङ्गलीकल्पिताः स्रावाः प्रस्थयेयुः प्र वा तत्प्युपुरपि वा त्वाष्ट्रं[5] त्वष्ट्र[5] इत्येव[6] यूपादित्यैय वै भवत्यार्तिमेते नियन्ति येषां दीक्षितानामग्निरुद्वायति । यदाहवनीय उद्वायेदत्तं मन्येदिच्छिन्द्याद्भ्रातृव्यमस्मै जनयेद्यदाहवनीय उद्वायेदाग्नीध्रादुद्धरेद्यदाग्नीध्र उद्वायेद्गार्हपत्यादुद्धरेद्यद्गार्हपत्य उद्वायेदत एव पुनर्मन्थेदेष वाव स निलयते । अथ खलु वै निर्मीनमुत्तमं पश्यन्ति तदेनमिच्छन्ति । यस्माद्दारोरुद्वायेत्तस्मारणी कुर्यात्तुषानमपिकुर्यादिति । स यस्माद्दारोरुद्वायति तस्मारणी कृत्वा कुसुकमकषमन्ववधाय[6] तान्येवावक्षाणानि संनिधाय मन्थेदिति । स तान्येवावक्षाणानि संनिधाय मन्थतीतः प्रथमं जज्ञे

---

१ Thus M; सर्वैव भवत्यपिवायो G, सर्वैव भवति यो U; इवैव भवत्यपिवा यो B, सर्वैवद्भवत्यो Be.

२ All MSS. ins. वा exc. M.

३ याजयन्त्यय Be U

४ Thus MBG, °च्छेत्संमर्च्छि° Be

५ Thus M, त्वाष्ट्र त्वाष्ट्रेत्येव B, त्वाष्ट्रत्वाष्ट्रेत्येव GU; त्वाष्ट्रेत्येव Be.

६ Thus MU Be, क्रमुकं° BG, °मन्ववधाय MUG Be; °मन्वाधाय B.

अग्निः स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति ' छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयतीति ब्राह्मणम् ' ॥ २८ ॥

अथ यद्याहवनीयगार्हपत्यावुद्वायेयातां गार्हपत्यं मथित्वाग्नीध्रीयादाहवनीयमुद्धरेद्यद्याग्नीध्रीयगार्हपत्यावुद्वायेयातां गार्हपत्यं मथित्वाग्नीध्रीयमुद्धरेदथ यद्याग्नीध्रीयाहवनीयावुद्वायेयातां गार्हपत्यादाग्नीध्रीयमुद्धृत्य तत आहवनीयमुद्धरेदथ यदि सर्वे[१] एवोद्वायेयुर्गार्हपत्यं मथित्वाग्नीध्रीयमुद्धृत्य तत आहवनीयमुद्धरेदित्यथ वै भवति गार्हपत्यं मन्थति ' गार्हपत्यो वा अग्नेर्योनिः ' स्वादेवैनं योनेर्जनयति ' नाग्नौ भ्रातृव्यं जनयतीति ब्राह्मणमथ वै भवति यस्य सोम उपदस्येत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषे ऽन्यदाधूनुयाज्जुहुयादन्यदिति ' स यस्य सोम उपदस्यति तत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषे ऽन्यदाधूनोति मुख्ये चमसे ऽन्यदवधाय जुहोति ' सोममेवाभिषुणोति सोमं जुहोतीति ब्राह्मणमथ वै भवति सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत्तत्सुवर्णꣳ हिरण्यमभवत्तत्सुवर्णꣳ हिरण्यं कुर्वन्ति प्रिययैवैनं तनुवा समर्धयन्तीति ब्राह्मणमथ वै भवति यस्याक्रीतꣳ सोममपहरेयुः क्रीणीयादेव ' सैव ततः प्रायश्चित्तिरिति ब्राह्मणमथ वै भवति यस्य क्रीतमपहरेयुरादाराꣳश्च फाल्गुनानि चाभिषुणुयादित्यादाराः पूतीकतृणानि[२] '

---

१ सर्वं M

२ Thus M, पूतीक॰ the other MSS

फाल्गुनानि श्येनहृतानि । तेषामलाभे श्येनकान्तो प्रतिनिधि-र्विज्ञायते तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहर-त्तस्य पर्णमच्छिद्यत । तत्पर्णो ऽभवत्तत्पर्णस्य पर्णत्वमिति । तस्मात्पर्णस्वरूपाणामेवाभिषवः[1] कार्य इति । शृतेन प्रातःसवने श्रीणीयादिति । शृतमेतद्भवति । दध्ना माध्यंदिन इति । दध्ये-तद्भवति । शीतमिश्रेण तृतीयसवन इति । विमथितं च सपि-स्तकमुद्धृतं[2] प्राकृतशीतभावादित्येतदाख्यते । अग्निष्टोमः सोमः स्याद्रथंतरसामा । य ऋत्विजो वृताः स्युस्त एनं याजयेयुरिति । त एवैनं याजयन्त्येकां गां दक्षिणां दद्यादित्येकां गामेव दक्षिणां ददाति । यदि च दास्यन्भवति तदमुष्य ददाति । पुनः सोमं क्रीणीयाद्यज्ञेनैव तद्यज्ञमिच्छति । सैव ततः प्रायश्चित्ति-रिति ब्राह्मणमेव वै भवति सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः[3] कामेभ्यः[3] सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते यः सत्रायागुरते । एतावान्खलु वै पुरुषो यावदस्य वित्तश्च सर्ववेदसेन यजेतेत्यतिरात्रं विश्वजितमुपयन्त्य-याथ[4] सर्ववेदसं ददाति । सर्वपृष्ठो ऽस्य सोमः स्यात्सर्वेभ्य एव

---

१ Thus M; ॰स्वर्णविशेषाभि॰ BG; ॰स्वर्णविशेषाभि॰ U; ॰स्वरूपवि-शेषाभि॰ Be

२ Thus all, are we to read सपिण्डक॰? सपिस्तकमप्राकृतशीतो॰ Be U; सपिस्तकमुद्धृतकप्राकृतशी॰ M, but the क seems to be cancelled.

३ om M

४ अथ om M

देवताभ्यः सर्वेभ्यः कामेभ्यः सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीत इति ब्राह्मणम् । ॥ २९ ॥

पवमानः सुवर्जन इति सौत्रामण्यामेव भवति । ब्राह्मणमुत्तरमेव वै भवति तस्माद्वैश्वदेवेन यजमानः संवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । तस्माद्वरुणप्रघासैर्यजमानः परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । तस्मात्साकमेधैर्यजमान इदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । तस्माच्छुनासीरीयेण यजमानोऽनुवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीतेत्यथ वै भवत्यग्निः कृत्तिकाः शुक्रं परस्ताज्ज्योतिरवस्तादिति नक्षत्रेष्टकाभिर्विकल्पयन्त इति ब्रुवते । अथ वै भवति यत्पुण्यं नक्षत्रं तद्बट्कुर्वीतोपव्युषमिति[१] । प्रातः कुर्वीत । संगवे कुर्वीत । मध्यंदिने कुर्वीतापराह्णे कुर्वीत । सायं कुर्वीत । यावति तत्र सूर्यो गच्छेद्यत्र जघन्यं पश्येत्तावति कुर्वीत । यत्कारी स्यात्पुण्याह एव कुरुत इति । ब्राह्मणमुत्तरे ब्राह्मणमुत्तरे । ॥ ३० ॥ द्वादशः ॥

॥ इति चतुर्दशः प्रश्नः ॥

---

१ Thus M and Bhav., बट्कु॰ the other MSS, the text of T. Br. I. 5 2 1. has यद्बट्कुर्वीत but cp the comm

[1]अश्वमेधेन यक्ष्यमाणो भवति राजा विजिती सार्वभौमः । स एतद्देवयजनं जोषयत आग्निध्रं प्रागाग्निध्रं दक्षिणाग्निध्रं प्रत्यगाग्निध्रमुदक् । छिन्दन्ति वृक्षान्स्थलानि भिन्दन्ति प्रति निम्नान्पूरयन्ति किंश्राछणि निरस्यन्ति । नदीनां तीर्थानि सर्वतःप्रस्रवणानि पल्वलानि कुर्वन्त्यथैतौ ह्रदौ मध्यतो देवयजनस्य जोषयते संख्याविषावनुपदासिनौ पुण्यनामानौ यद्येवं विन्दन्ति । यदु वा एवं न विन्दन्ति खात्वैनावभिषाव्याभिर्वाभिषार्याभिर्वाद्भिः पूरयन्ति । यथा वैव संख्याविषावनुपदासिनौ पुण्यनामानौ भवतस्तथा । तावपरेण मध्यतो देवयजनं जोषयते छिद्रावद्ध्यायोर्विधायां । तच्छालां कुर्वन्ति प्राचीनवंशां द्विद्वारीकाणां दक्षिणतो वरीयसीं । तस्यै दक्षिणतो ऽश्वशालां कुर्वन्ति । नद्यत्यामाङ्[2] श्रोणायामवाचीनायाणामग्रमजो[3] कुर्वन्त्यथासैते संभारा उपक्लृप्ता भवन्त्यश्वो रूपीयो यो[4] ऽस्य[4] यद्यामाङ् यत्तमस्तस्यान्ये ऽपरिमिता

---

१ As all the MSS., with the exception of M, are mostly very corrupted, the text is given according to M; when the reading of M differs from the reading taken up in the text, this is mentioned; but otherwise the various readings of the other MSS. are, as a rule, not given

२ नद्यत्यान M, but cp. Āp. XX. 7. 7.

३ स्रोणायाम॰ M, मिश्रौसुवाम॰ B Be (pr. m.); मिमख्याम॰ Be (sec m.), मिश्रौमदमाम॰ U.

४ Thus corrected, cp. infra XV. 8 a. f., यो om. M; यस the other MSS

निरमणा निरष्टः कृष्णश्च श्वा चतुरक्षो द्वौ दासावनुजायै च पुत्रो ऽग्न्याधेयार्थे च जरत्पूर्वा वैषीकस्याभूषः निष्कं च सुवर्णं पौंश्चलेयस्य[1] चत्वारि शतानि गोमृगाणाꣳ शतं तल्प्यानाꣳ राजपुत्राणाꣳ शतमराजामुग्राणाꣳ[2] शतꣳ सूतग्रामणीनाꣳ शतं क्षत्तसंग्रहीतॄणां चत्वारो महान्त अभिजस्तानन्वितरे[3] तान्काले ऽपदातीन्समावहन्ति ॥ १ ॥

अथ समुद्रज्यायायास्तुष्टयीरापो दिग्भ्यः संभृतास्तुरः साहस्राभिष्कान्सुवर्णरजतौ च रुक्मौ द्वे अन्ये हिरण्ये द्वौ वीणागाथिनौ ब्राह्मणं च राजन्यं च द्वे रशने मौञ्जीं च कुशमयीं चोभे पयोद्गारत्न्यावेतेनोपक्रमेण चित्रामायतीसुपरमत्यंच[4] चिनयेत्यरण्योरग्नीन्समारोह्य ग्रामामभिप्रैति ये ते पन्थानः सवितः पूर्व्यासो ऽरेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहीत्युत्तरेण ग्रामं परीत्य पूर्वया द्वारा ग्रामं प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य गार्हपत्यमुपतिष्ठते नमो ऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीति नमो वायवे

---

१ All MSS. the accus.

२ उत्तरं left out in all the MSS.

३ We would expect here and in the following words also the nomin.

४ Thus M., अद्य is o. अद्य all the other MSS., cp. supra p. 145, 3, and infra XVIII 8, 16.

ऽन्तरिक्षचिते लोकस्पृते लोककृते यजमानाय देहीत्यन्वाहार्यपचनं नमः सूर्याय दिविचिते लोकस्पृते लोककृते यजमानाय देहीत्याहवनीयमथाश्वमेतत्पुरस्तादेव जघनेनाश्वशालामेकापराधं विमितं कारितं भवति तद्दक्षिणाग्निमुपसमाधाय मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति यथावदाय स्वाहेत्येकादश शतायुर्वै पुरुषः शतवीर्य आत्मैकशततो यावानेव पुरुषस्तस्मान्मृत्युमवयजत इति ब्राह्मणमथ केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृत्य दतो धाव्य स्नातावहते वाससी परिदधाते उभौ मानुषेणालंकारेणालंकृतौ भवतो ऽहतवाससावथाभ्यां व्रतोपायनीयं पाचयति तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्यायापराह्णे सुखयोर्हिरण्ये ऽन्तर्धत्ते ॥ २ ॥

सुवर्णं यजमानो रजतं पत्नी रजतानि वा यदि बह्वी भवन्त्यथास्य वाचंयमस्य सायमग्निहोत्रं जुहोत्युपसंगच्छन्त एनमेते राजपुत्राः सूतग्रामण्यः[1] क्षत्तसंग्रहीतारः कारयिष्य[2] इति तेभ्यः पष्ठौहीं धेनुं ददाति तां ते पयमाना रमयन्तो जागरयन्त आसते ऽथ प्रातरावासमायामन्तौ हिरण्ये प्रोथतर्दते पौंश्चलेय आदत्ते ऽथादित्यमुद्यन्तमुपतिष्ठन्ते द्रष्ट्रे नम उपद्रष्ट्रे नमो ऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमो ऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमो ऽनुशृण्वते नमः

¹ Thus B, ग्रामण्य the other MSS.
² cp XVIII. 18

सते नमो ऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नम इत्यथ वैश्वदेवीꣳ सांग्रहणीं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । यावदेवान्वाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता चतुष्टयीष्वप्सु ब्रह्मौदनꣳ श्रपयित्वाभिघार्योद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेतꣳ रजतꣳ रुक्मं प्रक्षालितमवदधाति । तस्मिन्नेनमसंप्रक्षिप्योद्धरति सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथोपरिष्टात्सुवर्णꣳ रुक्मं प्रक्षालितमवदधात्यथैतानाहृत[1] ऋत्विज[1] उत्तरतो ऽनुदिग्रमुपवेश्य तानानुपूर्वमाचमय्य तेभ्य एवं भूमिꣳ सुप्रसर्पिच्छन्दषिचोपोहति । ॥ ३ ॥

स आह ब्राह्मणाय राजानश्चानेन माध्येन मेध्येन स्वस्ति समापयाता[2] ब्रह्मण्यताया[3] इति । [4]तं तथेतीतरे प्रत्याहुरनेन त्वामश्वेन मेध्येन स्वस्ति समापयिष्यामो ब्रह्मण्यताया इत्यथ

---

१ मत्विजः M, but cp. supra p. 205 5

२ Thus M, समोपयाता the other MSS I am in doubt whether we ought to read समापयाताब्रह्मण्यतायाः (समापयाव conj.); in this case the avgraha should be read before ब्रह्मण्यतायाः (line 18); but the following अथ ब्रह्मण्यतायाम्भो संज्ञानवे seems to plead against this reading

३ Thus M; म (or व) ब्रह्मण्यतायाः all the other MSS.: by this omission of ब्र it is clear that all the MSS., with the exception of M, derive from one common source

४ This passage left out in all the MSS exc M.

ब्रह्मज्यतामग्नौ संजानते । ऽथैनाम्बुदस्माकि सहस्रसहस्राभ्यामयवस्थान्तो धारयाथा इत्यथैतश्चिश्चापरिराधेयने रत्ने संतर्ष्य परिकर्मिणे प्रयच्छति । हिरण्यं माख्य मगधामन्ति राष्ट्रस्ते प्रशौदन इति[1] । तेभ्यश्चतुरः शतमानान्निष्कान्ददाति सुवर्णरजतौ च रुक्मावेव ये चत्वारोऽभिषेकारस्ते ऽध्वर्युमभिपिद्यन्ति । स आह ब्राह्मणाय राजानमध्वर्युरेतौ द्वौ संवत्सरौ राजा भविष्यति तस्य शुश्रूषध्वं यो वाच्य[2] न शुश्रूषिष्यते सर्वस्वं तं[3] ज्यावत्नोत्यध्वर्युरेतौ द्वौ संवत्सरौ राजा भवति । यजमान इतीतरमाचष्टे । स आह ब्रह्मचर्यं वेधं भवयामि देवेभ्यः प्रजापतये तेन राध्यासमिति । यथानेतीतरः प्रत्याह देवेभ्यः प्रजापतये तेन राध्नुहीति । ॥ ४ ॥ प्रथमः ॥

अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयत इमामगृभ्णन्रशनामृतस्येति । तयाश्वमभिदधात्यभिधा असि भुवनमसि यन्तासि धर्तासि सो ऽग्निं वैश्वानरꣳ सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड् यन्तासि यमनो धर्तासि धरुण इत्येवमेव द्वितीयाꣳ रशनामादत्ते । तथैवमेवाश्वमभिदधाति । तौ मध्यस्थानुपृष्ठमनुपृष्ठमवृतस्मिन्काले ऽनुगायै च पुत्री ऽध्यायाये च प्रवन्याभ्याꣳ श्वानमभिघ्नत्तो । ऽथैव पौंश्चलेयो मत्पूर्वेषा

---

१ This passage ( cp 207. 12 ) left out in all the MSS. exc. M.

२ च om. M

३ तत् Be, त M, UB om. this passage

सव्यं जानु वेष्टयित्वा सैध्रकेण मुसलेन श्वानमनूपतिष्ठते । ऽथाध्वर्युः पुरस्तात्प्रतिपद्यते सह शतेन तत्स्थानाꣳ राजपुत्राणां । ब्रह्मा दक्षिणतः सह शतेनाराज्ञामुग्राणाꣳ । होता पश्चात्सह शतेन सूतग्रामणीनामुद्गातोत्तरतः सह शतेन क्षत्तसंग्रहीतॄणां । मध्ये ऽश्वः श्वा चाथ दक्षिणꣳ ह्रदमभिप्रयान्ति । द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरा क्रोडादश्वमभिधावयन्ति[1] । समध्वर्युः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्टायꣳ राजा वृत्रं वध्यादिति । तस्यानु प्रोक्षणꣳ शतं तत्स्था राजपुत्राः प्रोक्षन्ति । ब्रह्मा दक्षिणत उदङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्टायꣳ राजाप्रतिधृष्यो ऽस्त्विति । तस्यानु प्रोक्षणꣳ शतमराजान उग्राः प्रोक्षन्ति । होता पश्चात्प्राङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्टायꣳ राजास्यै विशो बहुग्वै बह्वश्वायै बह्वजाविकायै बहुव्रीहियवायै बहुमाषतिलायै बहुहिरण्यायै बहुहस्तिकायै बहुदासपुरुषायै रयिमत्यै पुष्टिमत्यै बहुरायस्पोषायै बहुसर्वधनायै राजास्त्विति । तस्यानु प्रोक्षणꣳ शतꣳ सूतग्रामण्यः[2] प्रोक्षन्त्युद्गातोत्तरतो दक्षिणामुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्टायꣳ राजा सर्वमायुरेत्विति । तस्यानु प्रोक्षणꣳ शतं क्षत्तसंग्रहीतारः प्रोक्षन्ति । दिग्भ्यो ऽश्वꣳ समुक्षन्तीति ब्राह्मणसंघासेप पौꣳश्चलेयः सꣳश्लिष्टो भवति यदा लोपसी-

१ °धावयंति M

२ Thus BL; °णय M Bk

वाश्वस्य शुनः प्रहरतीत्युपमीवत एष पौंश्चलेयः सैध्रकेण मुसलेन शुनः प्रहन्ति । तमेत एवानुमन्त्रयते ॥ ५ ॥

यो अर्वन्तं जिघांसति तमभ्यमीति वरुण इति । तमश्वस्याधस्तादुपास्य दक्षिणाप्लावयति परो मर्तः परः श्वेत्यश्वस्य ब्रह्मा हस्तं गृह्णाति ब्रह्मणो वा यजमानो ऽहं च त्वं च वृत्रहन्त्संबभूव सनिभ्य आ । अरातीवा चिदद्रिवो ऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातय इत्यथैनमैषीकमभ्यूह्य मौञ्जीभ्यां रज्जुभ्यामन्तयोरभिदधाति । तस्य वेतसशाखोपसंबद्धा भवति । तदेतेन यान्तं तस्या राजपुत्रा विविषन्ते । तेषामनु विवेकमितरे । द्वे अन्यतरमन्तं गृह्णीतो द्वे अन्यतरमन्तं गृह्णीते । अथैनामन्तं गृह्णन्नेनैषीकेणाभ्यूहेनाभ्युदूहन्त[1] इव पुरस्तात्प्रत्यञ्चमूर्मिणाश्वमभिधावयाता[2] इत्यभिधाव्यमाने[3] ऽध्वर्युर्यजमानं वाचयत्यभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानं रजांसि । स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद्युधा त इत्यथैनं सवेन्द्रा दक्षिणाप्लावयत्यथैतमश्वं प्रदक्षिणमावर्त्य शालामानयति यदातो अपो अगमदिन्द्रस्य तनुवं प्रियाम् । एतं स्तोतरेतेन पथा पुनर-

---

1 °भ्यूहंत MSS exc M

2 °भिधावयाता M, °धावदेता the other MSS, if अभिधावयाता is the correct reading we have here a form of the same kind as समापयाता (supra p 207, 12)

3 °भाव्यमाने again M

स्वमावर्तयामि न इति । तमध्वर्युः पूर्वाभि स्तोकीयाभिरन्वेत्याग्नये स्वाहा सोमाय स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदस्य स्तोका उपरमन्त्यथैनमग्रेण शालां प्राञ्चं स्थापयित्वा प्रपद्यास्य सावित्राणि जुहोत्यग्नये स्वाहा वायवे स्वाहेति सर्वा । अथ सावित्रमष्टाकपालं प्रातर्निर्वपत्यासाद्य पुरस्ताद्भागाञ्जुहोत्यग्नये[1] स्वाहा स्वाहेन्द्राग्निभ्यामिति पञ्च । पुरस्तात्स्विष्टकृतस्त्रयोऽग्नीतिमध्यचरितान्युपजुहोतीङ्काराय स्वाहेङ्कृताय स्वाहेत्यस्युदिते त्रयोदश मद्रावाञ्जुहोत्यायनाय[2] स्वाहा प्रायणाय स्वाहेति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथैनमश्वं प्रदक्षिणमावर्त्य पूर्वया द्वारा शालां प्रपाद्यान्तर्वेदि प्राञ्चं स्थापयित्वाह ॥ ६ ॥

यदा इदमाऊः पदेपदे ह वा अश्वस्य मेध्यस्याध्वर्युर्जुहोतीहैव वयं तज्जोष्यामो यथा नः पदेपदे हुतं भविष्यतीति । तस्य पत्सु धृतीर्जुहोत्यन्वयया वा पर्यारिणीर्वेह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेत्यथैनं प्राञ्चमुत्क्रामय्य प्रोक्षति प्रजापतये त्वेति पुरस्तादिन्द्राग्निभ्यां त्वेति दक्षिणतो वायवे त्वेति पश्चाद्विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतो देवेभ्यस्त्वेत्यधस्तात्सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टादथैनमतिप्रोक्षेण प्रोक्षति इष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा

---

१ °भागानुहो° M  २ सर्वा MSS., but cp. infra 214, 9

विश्वेभ्यस्त्वा भूतेभ्य इत्यथास्य[1] रूपाणि जुहोत्यञ्जेताय स्वाहाञ्जिसक्थाय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्येताभ्यामनुवाकाभ्यामथास्योपोत्थायाश्वनामभिर्दक्षिणं कर्णमाजपति विभूर्मात्रा प्रभूः पित्राश्वो ऽसि हयो ऽस्यत्यो ऽसि नरो ऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असि ययुर्नामासीत्यथैनमुपतिष्ठत आदित्यानां पत्वान्विहीत्यथैनꣳ रशनाभ्यामुन्मृजति भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्य इत्यथैनं देवताभ्यः परिददाति देवा आशापाला एतं देवेभ्यो ऽश्वं मेधाय प्रोक्षितं गोपायतेत्यथास्य शतानपरिमिताञ्छिरस्त्राणिञ्छिरस्त्राणमुपावहज्जन्त्यथैनमेतानि चत्वारि शतानि गोप्तृणामनुयुञ्जते प्राप्तकवचा विततधन्वा यथा युद्धाय तथा[2] । तेभ्यः पक्वान्नं प्रमौति । ॥ ७ ॥

स आह ब्राह्मणांश्च राजन्यांश्च य इमे पक्वान्नमुपावहरिष्यन्ते मयाप्रवृत्ता मोपवादिष्टेति । स आह ब्राह्मणांश्च राजन्यांश्च बहिर्देवयजनादाहवनं युद्ध्यध्वं यस्मादयं वडवाभिः सꣳसृज्यते सर्वस्वं तं व्याप्स्यन्तीति । ते बहिर्देवयजनादाहवनं युद्ध्यन्ते[3] । ऽश्वैव माण्डैश्चरन्त्यथान्तरेण । न वडवाभिर्ना-

---

१ The passage अथास्य up to श्वेताय स्वाहेत्येताभ्यामनुवाकाभ्याम् left out in all exc M

२ Thus M, which, however, omits तथा ; all the other MSS are wholly corrupted

३ Thus M , युद्ध्यन्ति Be , युद्धयन्ति U युद्ध्यं B

स्वरीभिरर्थैनौ[1] वीणागाथिनावतिमरङ्गीतो[2] ' ऽथैव ब्राह्मणो वीणागाथी गायतीत्यददा इत्ययजथा इत्यपचथा इत्येवं मिश्रास्तिस्रो गाथाः ' कामचारो ऽस्य ' स्नानाद्येवैनं गोपायन्ति वाहनाद्याय यद्यश्वमुपतपदिन्द्रत्याग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो ऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरित्येव यदि नाश्वगच्छत्यग्नये वैश्वानराय द्वादशकपालो मृगाखर इत्येव यदि वडबाभिः सङ्गच्छते ऽग्नये ऽंहोमुचे ऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागो ' यद्यभिवर्तति रौद्रो ' यदि स्रावः पौष्णो ' यद्यप्सु वारुणो ' यदि काणः[3] सौर्यं । एतासामार्तीनां यां कां° च° न्येति[4] ' सहत्वैव[5] प्रायश्चित्तिरथ यो ऽस्य[6] सदस्यानाह् सन्तमस्तमुत्सृजत्यथातो रशनाभ्यामेव प्रतिपद्यते ' समानं कर्म परिदानात् ' ॥ ८ ॥ द्वितीयः ॥

उत्सृज्याश्वं वैश्वदेवान्पशूनालभन्ते ' तेषां पशुपुरोडाशाननुवर्तन्ते वैश्वदेवहवींषि ' वैश्वदेवहवींषि वैवेषां पशुपुरोडाशा भवन्ति ' तामनुवर्तते मध्यमा सावित्री[7] ' प्रतिहाः[8]

---

१ °थैभौ M

२ Thus M; U om. च, Be B. °थाविनिमरङ्गीतो ; the expression occurs also in the gṛhyasūtra I 15

३ काषः M, काणः the other MSS, but cp Āp xx 7 16

४ कांचिन्येति M

५ Uncertain, सहत्वेव M Be, सृत्वेव B, सहदेव U

६ अस्य M

७ Thus M, शाविन्याः BU, सावित्रः Be

८ Instead of प्रतिह° or प्रतिहाः as the other MSS have it here and infra, M consequently प्रहित, but cp the expression प्रहितेषि संहिते।

पशवः संतिष्ठन्ते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । [illegible] पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथैतौ वीणागाथिनावतिप्रग्रहीतो । ऽथैव राजन्यो वीणागाथी गायतीत्यजिना इत्ययुध्यथा इत्यमुं संग्राममजयदित्येवं मिश्रास्तिस्रो गाथाः । प्रातरग्निहोत्रे हुते ब्राह्मणो वीणागाथी गायति सायमग्निहोत्रे हुते राजन्यस्तावेवमेव संवत्सरं गायतो । ऽथ सावित्रमष्टाकपालं प्रातर्निर्वपत्यासाद्य पुरस्ताद्धोमाञ्जुहोत्यसमुदिते[1] धृतीश्च जुहोति मद्रावाद्य[2] जुहोति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ माध्यंदिने सवित्रे प्रसवित्रे पुरोडाशमेकादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथापराह्णे सवित्र आसवित्रे द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते । स एवमेव सावित्रीभिरहरहर्यजमानश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामं यवाग्वग्निहोत्रेणाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्ट्वा वरुणप्रघासान्पशूनालभन्ते । ॥ ९ ॥

तेषां पशुपुरोडाशाननुवर्तन्ते वरुणप्रघासहवींषि । वरुणप्रघासहवींषि वैवैषां पशुपुरोडाशा भवन्ति । ताननुवर्तते मध्यमा सावित्री । प्रसिद्धाः पशवः संतिष्ठन्ते । ऽथापराह्णे

---

१ •ताद्धागाञ्जुहो• M as above, p. 211, 6.

२ Thus M., प्रत्वाद्य the other MSS, the value of the word is •चदृदाव•।

सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते । स एवमेव सावित्रीभिरन्वहं यजमानो ऽपराह्णश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामꣳ श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु पौर्णमास्या उपवसथ आनीकवतं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तेत आनीकवतꣳ हविरानीकवतो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते प्रथमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथ मध्यंदिने सांतपनं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तते सांतपनꣳ हविः । सांतपनो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते मध्यमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्व्येण[1] चरत्यथ प्रातः क्रैडिनं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तते क्रैडिनꣳ हविः । क्रैडिनो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते प्रथमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथ मध्यंदिने साकमेधान्पशूनालभन्ते[2] । ॥ १० ॥

---

१ पूर्णदर्व्येण all, but cp. vol. I, p. 142. 5, Āp. has also पूर्णदर्वे, but the Śat. Br. पूर्णदर्वे, the word occurs again xvii 57 and in the Dvaidha, Bhav. in his comm. on the latter has ०दर्व्यं।

२ लभेते MU Be, लभते B

तेषां पशुपुरोडाशाननुवर्तन्ते महाहविषोऽपि । महाहविषोऽपि वैवैषां पशुपुरोडाशा भवन्ति ।ताननुवर्तते मध्यमा सावित्री । प्रसिद्धाः पशवः संतिष्ठन्ते । अथापराह्णे पितृयज्ञेन चरति । पितृयज्ञेन चरित्वा त्रैयम्बकैश्चरति । त्रैयम्बकैश्चरित्वादित्यं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तत आदित्यः हविरादित्यो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तत उत्तमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । अथ पौर्णमासेष्ट्याभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । अथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते । स एवमेव सावित्रीभिरहरहर्यजमानोऽर्धचतुर्थान्मासानेति काममिष्ट्या कामं पशुबन्धेन कामं सौत्रामण्येनाथामावास्याया उपवसथीयेऽहन्सावित्र्यैष्टिकानि सावित्राणि कृत्वोखाः संभृत्य पशुशीर्षाणि च वायव्यं पशुमालभते[1] । तस्य प्राजापत्यमूपर उपालम्भ्यो भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । तावनुवर्तते मध्यमा सावित्री । प्रसिद्धौ पशू संतिष्ठेते । अथापराह्णे सवित्र आसविते पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । अथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते । स एवमेव सावित्रीभिरहरहर्यजमान एतमर्धमासमेति काममिष्ट्या कामं पशुबन्धेनाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्टा ॥ ११ ॥

शुनासीरीयान्पशूनालभन्ते[1] । तेषां पशुपुरोडाशाननुवर्तन्ते शुनासीरीयहविषोऽपि । शुनासीरीयहविषोऽपि वैवैषां पशु-

१ °लभंते M °लभते the other MSS

पुरोडाशा भवन्ति । तानन्ववर्तते मध्यमा सावित्री । प्रसिद्धाः पशवः संतिष्ठन्ते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य केशश्मश्रु लोहितायसस्य च क्षुरेण शीर्षण्यानि च वर्तयते परि च वपते पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते चातुर्मास्याः पशवः संतिष्ठन्ते सावित्र्यः ।

॥ १२ ॥ तृतीयः ॥

अथाश्वशालायामश्वं निबध्नन्त्यथैनं तीर्थादानीय पवयित्वा चित्रवियमग्निदीक्षणीयामिष्टिं निर्वपति । तस्यै तावन्त्युत्सीदन्ति यावन्ति दीक्षणीयायाः । अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति स्वाहाधिमाधीताय स्वाहेत्यथ सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेत्येकविंशिनीं दीक्षां जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति । पञ्चाध्वरदीक्षाहुतीर्जुहोति[1] षडग्निदीक्षा एकामृतुदीक्षां ध्रुवो देवानां कर्मणेति । अथाहान्येतयेष्ट्वा यजत इति । स त्रीणि-त्रीण्येव पूर्वाणि वैश्वदेवानि जुहोत्युत्तरामुत्तरामृतुदीक्षां । द्वे[2] अन्ततः[2] ऋतुदीक्षे[2] जुहोति महीमू षु सुत्रामाणमित्येतदे-

---

१ Thus M, °दीक्षाहुतीर्जुहोति the other MSS.

२ Thus M, द्वेऽन्ततऋतु° De, द्वेऽन्ततऋतु° U. द्वेऽन्तऋतु° B

वाहर्द्दीक्षिते । संवत्सरसुत्यां[1] बिभर्ति । द्वादशोपसदो । ऽश्वेनमेता यथाम्नातं विशः पर्यवस्यन्ति । नेदीय एनमेते[2] कर्मकृत उपसंगच्छन्ते तक्षाणश्च रथकृतश्च[3] मयकृतश्च[3] कुलालाश्च द्वयाः कर्मारा नखकृतः सप्तमे । ऽथैतांस्तक्ष्णः संशास्ति ॥ १३ ॥

एकशतं वैल्वानि दार्वाचितानि छिन्दत[4] तानि प्रवल्कलानि कलापायं[5] चिनुतैकविंशतिं यूपाञ्छिन्दतैकविंशत्यरत्नीन्[6] रज्जुदालमग्निष्ठं पौतुद्रवावुपशयावितौ षड् वैल्वान् षट् खादिरान् षट् पालाशान्पालाशमुपशयं पालाशं पात्नीवतं पालाशं विशाखयूपमेकतयानि दारुमयाणि पात्राणि कुरुत षट्त्रिंशतश्च स्रुवान्दीर्घदण्डान् षट्त्रिंशतमनुवेधान्दीर्घदण्डांश्चत्वारि[7] वाष्टौ वैकङ्कतानि चतुस्रक्राणि हस्तमात्राणि यथा समानि यूपाग्रैः क्षुरपरिमितान्यारोहणमहानसानि कुरुतैकं वेतसं कटं कुरुताश्वस्योपस्तरणायेत्यथैतानश्वकृतः संशास्ति

१ °सुत्यां M.

२ एनमेते M

३ °कुलालाश्चमयकृत° M, °कुलालाश्चकृत° Be, the other MSS. are defective; cp. infra 219, 1

४ Thus M (we expect छिन्त), छिंदंति the other MSS.

५ Uncertain, कलापाथा M, कलापायं BU, कलापायं Be (pr. m.), कलापाय Be (sec. m.?), cp infra xv. 19 (223, 19)

६ Thus M, °त्यरत्नि the other MSS.

७ Thus (only °वैतां°) M, षट्त्रिंशतं दर्वी दीर्घदण्डाय° UBe; B om. these words. What is meant by अनुवेध I do not see. Read perhaps °शतं दर्वीदीर्घदण्डाय°; cp p. 224 8.

स्थूरयं कुरुतापरिमितायथान्कुरुतेत्यथैतानयस्कृतः सङ्गृह्णात्यपरिमितं चर्मण्यं कुरुतेत्यथैनान्कुलालान्सङ्गृह्णाति यथैकविंशतिनिधायाग्रय एवमिष्टकाः कुरुत तिस्रो महतीः कुम्भीः कुरुत यथायं कूपरं गोमृगमित्येतान्समाङ्गान्क्लृपयेयुरपरिमिताः स्थालीः कुरुतेति[1] ॥ १४ ॥

अथैतान्कालायसकृतः सङ्गृह्णाति सायकं कुरुत विभिन्नं-कल्पोदकं[1] कृष्णं कृष्णायसकृतं सुवर्णं सुवर्णकृतं चतुरः कालायसान्क्षोदायसकृतं चतुरो लोहायसान्कालायसकृतं षट्त्रिंशतं सुवर्णाजनकृतं षट्त्रिंशतं रजतान्सुवर्णकृतं त्रीणि च शतानि चत्वारिंशतं च सौवर्णानां सूचीनां त्रीणि च शतानि चत्वारिंशतं च राजतानां त्रीणि च शतानि चत्वारिंशतं च सीसानामेकं कालायसस्य कमण्डलुं कुरुताग्नेतेऽन्ये अपणायेत्यथैतान्सुवर्णकृतः सङ्गृह्णाति परःशतं शतपलान्निष्कान्कुरुत सुवर्णरजते महिष्योः पात्रे कुरुतैकशतानि सौवर्णानि पात्राणि कुरुत यावत्यः पत्न्यस्तावतः[2] सौवर्णानुपशयान्कुरुत रजतधन्वीर्वा राजतान्वा सुवर्णधन्वीन्यावत्यः पत्न्यस्तावन्ति[3] सौवर्णानि कुम्बकुरीराणि कुरुत रजतशकूनि राजतानि वा सुवर्णशकूनि यावत्यः पत्न्यस्तावतः[4] सौवर्णान्क-

---

१ I have simply accepted the reading of M, if it is correct, I do not see; चविभमुक्फोदक Be B, चविभमवपादक U.

२ पत्न्य MSS., but cp. Āp xx. 157 and infra

३ पत्न्य॰ MBU, पत्नय॰ Be.

४ पत्न्य॰ all

मण्डूकं कुरुत रजतराखाजताभ्या सुवर्णराखानेकं सौवर्णं विधवनं कुरुत चीणि सौवर्णानि धवित्राणि कुरुत रजतदण्डानि राजतानि वा सुवर्णदण्डानि सहस्रं सौवर्णाङ्काशान्कुरुत सहस्रं राजतान्सहस्रं सामुद्रान्हिरण्मयं कशिपु[१] हिरण्मयं[२] षड्वीशं[२] हिरण्मयं[२] संदानमिति[२] ॥ १५ ॥

अथैतान्सखदतः[३] सहस्राण्यपरिमितान्यष्टमानि कुरुतेत्यथाश्वैतान्यन्यान्युपकॢप्तानि भवन्ति शतं घृतचर्माणि शतं मधुचर्माणि शतं तण्डुलचर्माणि शतं पृथुकचर्माणि शतं लाजाचर्माणि शतं करम्भचर्माणि शतं धानाचर्माणि शतं सक्तुचर्माणि शतं मस्तुचर्माणि शतं मिथक्तुतण्डुलचर्माणीत्यथाश्वैत एकविंशतिः प्रतिप्रस्थातारः संशिष्टा भवन्त्यातमना द्वाविंशस्ते[४] जनपदेभ्यः पशूनसमचन्ति[५] तथारूपान्यथारूपांस्ते विदुर्ग्रामेषु ग्राम्यानरण्येष्वारण्यान्गिरिषु गैरेयान्नदीषु नादेयानप्सुचरेषु यथांसि कुम्भीषु सरीसृपानिति ॥ १६ ॥ चतुर्थः ॥

प्रविहः[६] संनिवापो ऽथ प्रायणीयेन चरति प्रायणीयेन चरित्वा पदेन चरति पदेन चरित्वाथैभे चर्मेम्सहस्रेण

१ •षु M.

२ Thus M; हिरण्मयं विंशहिरण्मयं संदानानीति BU Be (pr. m.); हिरण्मयमुपचर्यं षट्त्रिंश हिरण्मयं संदानानीति Be (sec. m.).

३ Thus M, •नावसंखतः the other MSS.

४ •विंशतिस्ते M

५ Thus M; समवन्ति the other MSS.

६ प्रविष M

राजानं क्रीत्वोद्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्याथान्वहं प्रवर्ग्योपसद्भ्यां प्रचरति । द्वादशाह एवैष । एकविंशतिविधोऽग्निर्निधीयते । तस्यैकविंशतिच्छदिः सदो भवत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय सदोहविर्धाने संमिनोति । सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्याहृता यूपमुच्छ्रयति । सर्वांस्ताꣳ रज्जुदाम्नमग्निष्ठमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृहीत्वाथ पशुपुरोडाशं निर्वपति । तमनुवर्तन्तेऽष्टौ देवसुवाꣳ हवीꣳष्यग्नये[1] गृहपतय[1] इत्येतान्यग्नये[1] गायत्रायेत्येषा च दशहविरिष्टिस्तस्या एता याज्यापुरोनुवाक्या भवन्ति समिद्दिशामाशया नः सुवर्विदितीडान्ताः पशुपुरोडाशाः संतिष्ठन्ते । पत्नीसंयाजान्ताः पशुर्हृदयशूलान्त इत्येके । अथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिभ्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । समानं कर्मा परिधीनां[2] परिधानात्परिधिमनुवर्तयति कस्त्वा युनक्ति स त्वा युनक्त्विति यज्ञमध्यमे यद् दक्षिणार्धे यद्योत्तरार्धे । अथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यह्निरुदेत्यग्निष्टोमं क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं यथा स्तुवन्ते । समानं कर्मा पवमानात्पवमानꣳ सर्पन्त्यासन्ति बर्हिष शतपत्रं चायाच्छोद्गात-

१ अग्नये गृ० इत्येतानि om. M.
२ परिधि M.

वैहिंद्य ते शतपदं चाथो स उद्गायनिति । ते ऽस्य वालधिꣳ समन्वारभन्ते ऽग्निस्ते वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारय वायुस्ते वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारयादित्यस्ते वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारयेत्यथोदस्तो ऽभि[1] पवमानꣳ सर्पन्त्युत्तरत एष वडवाव्रज उपच्छायया परिश्रितो भवति । तं विहृयन्त्यश्वं वडवाः क्रन्दन्त्यभ्यश्वो वडवाः क्रन्दति । सो ऽश्वोद्गीथस्तांपुष्टा वाचः संप्रवदन्ति ॥ १७ ॥

उदगासीदा अयमश्वो मेध्य आयुरुदगासीत्सुभूतमुदगासीद्ब्रह्मवर्चसमुदगासीदिदमुदगासीदिदमुदगासीदिति पुष्टा वाचः संप्रवदन्त्युत्सृजन्ति वडवा । अथ ग्रामायामश्वं निपद्यन्त्यथास्मा आसुकुक्षिकमवस्तुपकिरन्त्यथास्योद्गातर्धेनुयतं[2] च ते शतपदं च त्वं स उद्गायेति । तस्य यतस्पु बहिष्पवमानो[3] । ऽष्टाक्षराख्याख्यानि[3] । द्वादशो माध्यंदिनः पवमानः । षोडशानि पृष्ठानि । सविंशा[4] आर्भवः[4] पवमानश्चतुर्विंशमग्निष्टोमसाम । तं चतुष्टोम इत्याचक्षते । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्येति । स्वयंमाꣳ रज्जुदा-

---

१ भि all.

२ Thus (आसुकुक्षिकमवस्तु॰) M ; आकुकर्मिकमवस्तु॰ the other MSS.

३ Thus corrected, cp infra xviii 34 and Śat Br. xiii 5. 1. 1. ॰पवमानोऽष्टाक्षा ख्याख्यानि, with रा above the lacuna, M, ॰पवमानोऽष्टाक्षाख्याख्यानि BU, ॰पवमानोऽष्टाक्षराख्याख्यानि Bc

४ Thus M, संविंशतिरार्भवः BU; विंशतिरार्भवः Bc, cp infra l c.

सममिष्टसुत्यैकादशिनान्पशूनुपाकरोति । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्म दाक्षिणेभ्यो । दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ् यज्ञः संक्रामत्विति । तृतीयं दक्षिणानां ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति । माचाम्यभिषेको । ऽहीनसंततिं करोत्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति । समानं कर्म पवमानात्पवमानेन चरित्वा द्वे धामच्छदभिचरति[1] । तेषां नाना सतोमा नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्समैषवान्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्म पत्नीसंयाजेभ्य । उपकाम एवैषो ऽग्निष्टोमश्चतुष्टोमः संतिष्ठते पत्नीसंयाजान्तः । ॥ १८ ॥ पञ्चमः ॥

अथाश्वैतानि ग्रहमोचायि चर्माण्युपस्तीर्णानि भवन्त्युत्तरꣳ श्रोणिमुत्तरेण पञ्चसꣳहितान्यथैतेषां शतचर्मणां विꣳशतिं वा चतुर्विꣳशतिं वापोद्धृत्याथैतरैश्चर्माणि संप्रयुनक्त्यथैतेषां दार्वाचितानां विꣳशतिं वा चतुर्विꣳशतिं वा मध्ये ऽभिरचायं[2]

---

१ चरति M

२ Thus M. ; हिरण्य BU ; हरण्य Dc.

चित्वाथेतराणि[1] संछिद्यसंछिद्यैव संप्रकिरन्ति । तदेतां चतुरश्रां देवपुरमध्यात्ममायातयत्यपि वा यवपुच्छानभिनिरूहति[2] यथा समावती यूपार्धैः स्यादथैनाङ्[3] समुच्छ्रित्य[4] परिश्रयन्ति । तस्योदीचीं द्वारं कुर्वन्ति । तदेतानीन्द्राणमान्युपवर्तयन्ति चत्वार्यन्तुदिशमवान्तरदिशास्वितराणि यदष्टौ भवन्ति । तेषां चत्वारश्चत्वार एकैकमधिरोहन्ति दशान्ये रात्रिकर्मिणो । ऽथैभ्यः स्थालीभिराज्यान्यभिहरन्त्यष्टमैरवान्यधाध्वर्युरादत्ते[4] स्रुवं च दीर्घदण्डं दर्विं[5] च दीर्घदण्डामाददत एकविंशतिं[6] प्रतिप्रस्थातारो दशान्ये रात्रिकर्मिणो । ऽथाध्वर्युः स्रुवेणाज्यस्योपहत्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति । स्वाहाधिमाधीताय स्वाहेति स्रुवैरेवाज्यानां जुह्वति दत्वते स्वाहेति दर्वैरन्नानामदन्तकाय स्वाहेति । स एवमेवैतमनुवाकं । यदेतस्यानुवाकस्य पारं यन्त्यथैतेनानुवाकेन व्यवद्धाति । ॥ १९ ॥

पूर्वा स्तोकीया अथैतमनुवाकं द्विषा । अथैतमनुवाकमुत्तरा स्तोकीया अथैतमनुवाकमेकविंशिनीं दीक्षामथैतमनुवाकमृतुदीक्षा अथैतमनुवाकमश्वस्य सावित्राण्यथैतमनुवाकं ।

---

1 छित्वा॰ M.

2 Thus M; ॰पुच्छानभिनिरूहति Be, ॰पुच्छानामभिनिरूहयंति U; ॰पुच्छानामभिनिरूहयंति B.

3 ॰थैनाङ्मु॰ Be

4 ॰होमैरंवान्य॰ M, but cp supra p. 220, 6.

5 Thus MBU, दर्वी Be

6 Thus M ॰शतिः Be, ॰शति BU

त एवमेवैतानुवाकानेतेनैवानुवाकेन । यदैतेषामनुवाकानां पारं यन्त्यथैतानुवाकानुपसंक्रामन्ति वैश्वदेवानि चाश्वाङ्गानि च द्वावश्वरूपाणामोषधीनां च वनस्पतीनां च द्वावपाꣳ संधानानां चाभिधानानां च संस्रवस्यैक । उक्तः स्वारोहोमस्त एवमेवैतानुवाकानेतेनैवानुवाकेन । यदैतेषामनुवाकानां पारं यन्त्यथैतानुवाकानभिनिवर्तन्ते ॥ २० ॥

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति । त एवमेवैतानुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वत्यथ वसतीवरीणां परिहरणकाले ऽधिद्रवन्ति । परिहृतासु वसतीवरीष्वाक्रान्तायाꣳ सुब्रह्मण्यायां पुनरेवाधिद्रवन्ति । त एवमेवैतानुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वतः समाप्नुवन्ति । तानि वा एतान्यश्वस्य सर्वायुपाणीत्याचक्षते । ॥ २१ ॥

समाप्तय इति हैक आहुरेतैर्हि सर्वाꣳ रात्रिं जुह्वत्यथ प्रातरनुवाकमुपाकरिष्यन्तावबद्रवतो ऽध्वर्युश्च प्रतिप्रस्थाता च द्वावन्यावधिद्रवतो रात्रिकर्मिणावथ[1] राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यग्निरुदैत्युक्थ्यं[2] क्रतुमुपैति । समाने कर्मोपाꣳश्वोरुपाꣳशुꣳ होष्यन्निन्द्राणमधिद्रुत्य ततः सुवाहुतीर्जुहोत्युषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहेति । प्रसिद्धो ऽभिषवः । समानं

१ ०कर्मिणावथ M

२ उदेति M, उदैति the other MSS

कर्मान्तर्यागादन्तर्यामँ होत्र्यभिक्षाणमधिद्रुत्य चतस्रः सुवाहुतीर्जुहोत्युदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहेत्यथैतदुदित आदित्य उपरमन्ति रात्रिकर्मिणो ऽथ च्छिन्दन्ति परिव्ययणानि । निवर्तयन्तीन्द्राण्यानि । प्रसिद्धँ सवपांस्येवैषा गृह्यन्ते । समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा सुवर्णरजताभ्यां द्वौ महिमानौ ग्रहौ गृह्णाति यः प्राणतो य आत्मदा इत्यथोक्थ्यं गृह्णाति । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा चतुर्विंशतिँ रशना आदाय यूपानभ्यायन्ति चतस्रश्चतस्र इतरे परिकर्मिणः । सर्वान्कँ राज्जुदालमग्निष्ठमुत्सृज्य तस्माद्दक्षिणमेव पूर्वं पौतुद्रवमुपस्थायानुच्छ्रयति ॥ २२ ॥

अथोत्तरं । त्रीन्दक्षिणतो बैल्वाँस्त्रीनुत्तरतस्त्रीन्दक्षिणतः खादिराँस्त्रीनुत्तरतस्त्रीन्दक्षिणतः पालाशाँस्त्रीनुत्तरतो । ऽथैतं पालाशमुपशयं दक्षिणतो न्यस्यति तूष्णीँ । सर्वेणान्यूपानुत्सृज्याथाध्वर्युरश्वमुपाकरोत्यश्वं तूपरं गोमृगमित्येताँस्त्रीन्प्राजापत्यानेव पर्यङ्ग्यानुपाकरोत्याग्नेन्द्रं[1] कृष्णललाममैन्द्रापौष्णं पौष्णमाग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरँ सौर्यं बलक्षं पेत्वमित्यथाध्वर्युरश्व एवोपाकरोत्यग्नये ऽनीकवते रोहिताञ्जिरनड्वा-

---

1 ०त्याग्नेन्द्र M (sec. m); ०त्याग्नेयं M (pr. m) and all the other MSS, but cp infra xv. 26 med (229. 16).

नित्यैकादशांस्याध्वर्युरग्निष्ठ एवोपाकरोति सोमाय स्वराज्ञे ऽनोवाहावनड्वाहाविति दन्तिनौ[1] । ऽथाध्वर्युरग्निष्ठ एवोपाकरोतीन्द्राय राज्ञे सूकर इत्येकादशारण्यान्सैषाग्निष्ठे पशुषष्टिर्भवत्यथ रोहितो धूम्ररोहित इति दशाष्टादशिनो ऽनुवाकास्तेषां पूर्वा एव नयतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तरा नयत उत्तरेष्वाग्नेन्द्रा दक्षिणेषां मुख्या भवन्त्यैन्द्रासूरा उत्तरेषामथ मधुः प्राजापत्य इति दश दशिनो ऽनुवाकास्तेषां पूर्वा एव पशुतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तराः पशव उत्तरेषु । सोमापौष्णा दक्षिणेषां मुख्या भवन्त्यैन्द्रापौष्णा उत्तरेषामथैतस्मिन्नुपद्रवे समस्यैव यं द्वेष्टि तमुपाकरोति । पशु वै न द्वेष्याऽऽरक्षसे पशुरित्यनुदिशत्येतस्मिन्काल आहवनीये स्रुवाहुतिं जुहोत्युपाहृताय स्वाहेति । ॥ २३ ॥ षष्ठः ॥

अथैतमश्वमग्रेण यूपान्तराये युनक्ति युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुष इत्यथास्य पृष्ठं मर्मृज्यते रोचन्ते रोचना दिवीत्यथैवमेवोत्तर योग्यं युनक्ति । तद्वेवमेवोत्तरतः[2] प्रष्टिमुपनियुनक्ति । तयोः पृष्ठं मर्मृज्यते युञ्जन्त्यस्य काम्या हरी

---

१ चतुर्विंशति पशून् i s o दन्तिन• M But TS v 6 21 are enumerated only 22 paśus The reading of M, however, would agree with the statement made infra (l 3), that there are 60 paśus (3+11+11+24 (22 acc to the Saṃhitā !)+11). Should the text of TS l c be incomplete?

२ •वोत्तर M but cp supra xi 6 (p. 73, 3), this passage is left out in all the other MSS

विपश्चमा रथे। शोणा धृष्णू नृवाहसेत्यथ केतुं कृण्वन्नकेतव इति ध्वजं प्रतिमुञ्चत्यथ यजमानं वर्मसंनहनीयाभिः संनह्यति जीमूतस्येव भवति प्रतीकमिति चतुर्दशभिर्यथारूपमथ रथमुपतिष्ठते वनस्पते वीड्वङ्गो हि भूया इति तिसृभिरनुष्टुप्छन्दसमथ दुन्दुभिमुपश्वासयत्युपश्वासय पृथिवीमुत द्यामिति तिसृभिरनुष्टुप्छन्दसमथ दक्षिणं ह्रदमभिप्रयाति यौक्ते पृष्ठ कर्मेत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैस्तं कोष्ठेभ्यो ऽश्वानभिधावयन्त्यथैनं[1] रथं प्रदक्षिणमावर्त्य शालामागयति यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम्। एतं स्तोतरनेन पथा पुनरश्वमावर्तयासि न इति[1] तानध्वर्युरुत्तराभिः स्तोकीयाभिरन्वैत्यग्नये स्वाहा सोमाय स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदेषां स्तोका उपरमन्त्यथैतमश्वमपेण यूपाम् स्वरयात्समुच्य सौवर्णेन संदानेन संदित्वाध्वर्योरावसथं वियोगं वर्तयन्त्यथ महिषी वावाता परिवृक्तीत्येता अश्वं गन्धाग्गणाभ्यणीङ्ग्यादायाभ्यायन्त्यथ[2] तस्य यत्प्राक् क्रोडान्नाभेस्तदभ्यनक्ति वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति पौतुद्रवेण प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडान्नाभेस्तदावाताभ्यनक्ति रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसेति ॥ २४ ॥

गौग्गुलवेनाराज्ञां जायाभिः सहाथ यत्प्रतीचीनं नाभेरा

---

१ °भिधावयन्त्य° M (as supra xv. 5 and 6, p 209 7, 210. 12); °भिधापयन्त्य° the other MSS

२ Thus M, गंधाग्गणान्नभ्यो° Be, गंधाग्गणामभ्यो° BU

पुष्कलमपरिष्ठतमभ्यनक्त्यादित्यास्त्वाञ्जन्तु जागतेन छन्दसेति क्षौमेन[1] सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । अथ ये प्राचीनं वक्षसः केशान्तेषु महिषी सहस्रं सौवर्णान्काचानावयति भूरिति प्रतिहितानां जायाभिः सहाथ ये प्रतीचीनं वक्षसः केशान्तेषु वावाता सहस्रं राजतान्काचानावयति भुव इत्यराज्ञां जायाभिः सहाथैषा परिवृक्ती वालेषु सहस्रं सामुद्रान्काचानावयति सुवरिति सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । अथैतं पत्नयो[2] यथांग महिषी वावाता परिवृक्ती सावाजमसौ[3] दामीदेता[4] अस्मै मधुमिश्राल्लाजाननुपकिरन्ति ॥ २५ ॥

लाजी३ञ्छाची३न्यशो[5] ममां३[5] यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापत इति । यत्रै हाममत्ति नस्यै क्षोधुका प्रजा[6] भवतीति[6] विज्ञायते । ऽथैतमश्वं संज्ञाप्यमुष्य निर्मथ्यस्याहुता निर्मथ्येन प्रचरति प्रचरत्याभिक्रान्त्याया-ध्वर्युरग्निष्ठे नियुनक्त्यश्वं तूपरं गोमृगमित्यंपाश्य पर्यङ्ग्यानियुनक्त्याग्नेयं कृष्णललाममैन्द्रापौष्णं पौष्णमित्येताञ्श्लोमललाट ।

---

1. Thus M, क्षौमे the other MSS., cp. Āp xx. 15 12 (क्षौमकेन) ।
2. Thus all (not पत्नी) ।
3. Thus M, सवाजसौ BU, सवाजपि Bo
4. Thus M, दाभी॰ the other MSS
5. Pluti sign not in MSS
6. M om प्रजा and reads भवंतीति ।

आग्नेयौ कृष्णग्रीवौ ग्रीवासु । त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे । धात्रे पृषोदरमुदरे । सौर्यं बलक्षं पेत्वं पुच्छ इत्येतांस्त्वाध्वर्युरग्निष्ठ एव नियुनक्त्यग्नयेऽनीकवते रोहिताञ्जिरनड्वानित्येतांश्चाध्वर्युरग्निष्ठ एव नियुनक्ति सोमाय स्वराज्ञेऽनोवाहावनड्वाहावित्येतांश्चाध्वर्युरग्निष्ठ एव नियुनक्तीन्द्राय राज्ञे सूकर इति । सर्वानेवारण्याञ्छियोजनेनैवानुवर्तयते[1] याऽत्र ग्राम्याणां पशूनामुत्सर्जनमारण्यानाञ्चाथ दक्षिणाप्रतिप्रस्थातारो नियुञ्जन्त्यथोत्तरानथैतमश्वं त्रिवेण प्रोक्षेण प्रोक्ष्यातिप्रोक्षेण प्रोक्षति अग्निं वीजमिति । त्रिस्त्रैवेतरान्पशूनथ दक्षिणाप्रतिप्रस्थातारः प्रोक्षन्त्यथोत्तरानथैनमश्वमदेव यूपान्प्रोक्षणीरवप्रापयति ॥ २९ ॥

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोकस्तं जेष्यस्यथावजिघ्र । वायुः पशुरासीदादित्यः पशुरासीदिति । यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः [2]स ते लोकस्तस्मात्त्वान्तरेष्यामि यदि नावजिघ्रसि । वायुः पशुरासीदादित्यः पशुरासीदिति । यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः[2] स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि । वायुः पशुरासीदादित्यः

---

१ Thus M, ॰वर्तयति the other MSS

२ ... २ This passage is found in M only

पशुरसीदितीश्वरो ऽवघातोरित्येतस्मिन्काले[1] आहवनीये स्रुवाहुतिं जुहोत्याप्तव्याय स्वाहेति ॥ २७ ॥ सप्तमः ॥

अथैध्मात्समिधमादायाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं परि समिधꣳ शिनष्टि वेदेनोपवाजयत्यनूच्यमानासु सामिधेनीषु स्रुवेणाघारमाघारयति संमृष्टे स्रुग्भ्यामुत्तरमथामꣳस्रम्प्यन्स्रुचावुदङ्ङत्याक्रम्य जुह्वाश्वं[2] तूपरं गोमृगमित्येतान्समनक्त्यथ पर्यङ्ग्यानथेतरानथ दक्षिणानथोत्तरानथ यथायतनꣳ स्रुचौ सादयित्वा प्रवरं प्रवृणीते प्रसिद्धमृत्विजो वृणीते सीदति होता प्रसवमाकाङ्क्षति प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिद्धः प्रेष्येति समिद्धो अञ्जन्कृदरं मतीनामित्येता आप्रियो भवन्ति वषट्कृते जुहोति प्रेष्य प्रेष्येति चतुर्थाष्टमयोः समानयमानो ऽष्टमे सर्वꣳ समानयते परि स्वाहाकृतीभ्यः सꣳस्रावꣳ शिनष्टि दश प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सुवर्णं च शायकं च याचति तौ जुह्वामक्त्वा ताभ्यामश्वं तूपरं गोमृगमित्येतान्समनक्ति काशायनैः पर्यङ्ग्यान्कोशायनैरितरान्सुवर्णैर्दक्षिणानजतैरुत्तरानथ यथायतनꣳ स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीति त्रिरेव पर्यग्निकरणे ऽनुवर्तयति नेषस्था पषतैरवतु लोहितग्रीवश्छागैः शल्मलिरिति पर्यग्निकृतानामेतेषां पशूनामुत्सृजन्त्यथो[3] द्वे धेनू

---

1 Thus (वघ्नातो॰) M. only, वघ्नाते॰ or वध्नाते॰ the other MSS.

2 जुह्वा॰ om M

3 Thus M ॰वृजन्त्यपि the other MSS

भौमी दिग्भ्यो वडबे द्वे धेनू भौमी वैराजी पुरुषी द्वे[1] धेनू भौमी इन्द्राय राज्ञे सूकर इति सर्वानेवावारण्यान्[2] पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते ' तेषामैन्द्रासूरा उत्तरार्धा भवन्त्यथ उपचारतो ' ऽथैनमाध्वर्यवेणाश्वपर्णीभ्यामन्वारभते ' पृथगितरानृत्विककर्मिण उदञ्चो यथायथमनुपूर्वमभ्यतिव्रजन्तो ' ऽथ याचति महिषिं शतपलं च हस्तिं चाधीवासं च कशिपु तार्प्यं चेत्युत्तरत एतद्धकुलङ् वङ्स्तीर्णं भवति ' तदश्वाय निहन्यमानायोपास्यति महिषिं शतपलं च हस्तिं चाधीवासं च कशिपु चेत्येतत्प्रस्तरं ' तार्प्येण संज्ञप्यमानं यातेन साम्ना प्रस्तोतानूपतिष्ठते ' पृथगितरेभ्यस्तान् इतरान्प्राचो वोदीचो वा निमन्त्र्य हल्वतो मायुम्संज्ञपयतेत्युक्तेनैव यथेतमेत्य पृषदाज्यावकाश आसते ' ऽथैनौ ब्रह्मोद्यं वदतो होता च ब्रह्मा चान्तरेण यूपं चाहवनीयं च ' दक्षिणतो ब्रह्मा भवत्युत्तरतो होता ' होता ब्रह्माणं पृच्छति ॥ २८ ॥

किंस्विदासीत्पूर्वचित्तिः किंस्विदासीद्बृहद्वयः । किंस्विदासीत्पिशंगिला किंस्विदासीत्पिलिप्पिलेति ' तमितरः प्रत्याह द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रिरासीत्पिशंगिलाविरासीत्पिलिप्पिलेति ' तमितरः पृच्छति कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किंस्विद्धिमस्य भेषजं किंस्विदावपनं महदिति ' तमितरः प्रत्याह

१ द्वे द्वे M

२ एव om M

सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महदिति । तमितरः पृच्छति पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योमेति । तमितरः प्रत्याह वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् । सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योमेति । संज्ञप्ताभ्याहुतिं जुहोति संज्ञप्ताहुतिं यत्पशवो मायुमकृषतेत्यथ सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेति । षट्त्रिंशतमश्वस्तोमीयाञ्जुहोति[1] यदक्रन्दः प्रथमं जायमानो मा नो मित्रो वरुणो अर्यमा ये वाजिनं परिपश्यन्ति पक्वमुत त्वास्य द्रुवतस्तुरण्यत हर्यां याभ्यायन्ति ग्रामिमार अपेतनेति । पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयते अदितिः पाशान्प्रमुमोक्तैतानिति । पृथगविशाखाभिरुपसन्धेमां दिशं निरस्यन्त्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानित्यथैताः पत्नयः सौवर्णैरुदकमण्डलुभिरुदायन्ति । ता अश्वस्यानुपृष्ठं प्राणानाप्याययन्त्यो[2] यन्त्यनुपूर्वमितरेषां[2] पशूनामथैषा महिषी प्रास्य केशान्वासः परिधाय सौवर्णेन विधवनेन विधुवाना त्रिरपसलैरश्वं पर्येत्यवन्ती स्थावन्तीस्त्वावन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिꣳ हवा-

---

१ °स्तोमीयाञ्जुहोति M (cp. Āp xx. 21 11), °स्तोमीयं जु° (cp. T Br III. 9 12 1.) the other MSS

२ Thus M, °प्याययन्त्यनुपूर्वं° the other MSS

महे वसो वसेति ' त्रिः परीत्योत्तरतस्तिष्ठन्ति प्रतिहितानां जायाभिः सहैवं वावातानां जायाभिः सहैवं परिवृक्तीं सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह ' अथैतं पत्नयो ऽश्वमेधमश्वं सर्वैरलङ्कारैरलङ्कृत्य परिश्रयन्ति ' तस्योदीचीं द्वारं कुर्वन्त्यथैतां महिषीं सर्वैरलङ्कारैरलङ्कृत्य[1] तां[1] निह्नुवानां[1] गर्हमाणामध्वर्युरुदानयत्यम्बे अम्बाल्यम्बिके न मा नयति कश्चन । ससस्त्यश्वक इति ' अथैनमुत्तरत उपसंविश्य शिरस्तो वास उपधत्ते[2] ' तावध्वर्युस्तार्प्येण[2] संप्रोर्णोति सुभगे काम्पीलवासिनि सुवर्गे लोके संप्रोर्ण्वाथामित्यथैषा महिष्युपस्थे शेफमाधत्त आहमजानि गर्भधमा त्वमजासि गर्भधम् । तौ सह चतुरः पदः संप्रसारयावहा इति ' तामध्वर्युरनुमन्त्रयते वृषा वाजी रेतोधा रेतो दधात्विति प्रतिपद्य य आसां कण्ठे चक्षुषि यद्धिङ्गदिं परावधीदित्यातो ' ऽथैषा पत्नी गर्हते ॥ २८ ॥

अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वक इति ' तां यजमानो ऽभिमेथत्यूर्ध्वामेनामुच्छ्रयतादिति ' सा तथैव गर्हते ' तां वावाताभिमेथति यद्धरिणी यवमत्तीति ' सा तथैव गर्हते ' तां परिवृक्त्यभिमेथतीयं यका शकुन्तिकेति ' सा तथैव गर्हते ' तान्त्सर्वे गणा अभिमेथन्ति[3] माता च ते

---

१ Thus M, ॰जेहानां निह्नुवानां the other MSS.

२ Thus M; उपध इमा अध्वर्यु॰ Be; उपनैता अध्वर्यु॰ E; उपैता अध्वर्यु॰ U

३ Thus, ātmanepadam, all

पिता च न इति । नाच गर्द्धते । मुहूर्तमश्वमुपसंविश्योत्थाय वासः परिधायाद्भिर्मार्जयन्त आपो हि ष्ठा मयोभुव इति तिसृभिरनुष्टुप्छन्दसं दधिक्राव्णो अकारिषमिति चतुर्थीं । सर्व एव सुरभिमतीमृचं जपन्ति ये यज्ञे ऽपूतं[1] वदन्ति । नयन्ति पत्नीः । अथ च्छिन्दन्ति परिश्रयणमथास्याहरणमध्वर्यो रावषयं हिरण्येनाश्विकल्मशिरश्चं आज्यपिष्टानि संयुत्य तैरनुलोममश्वं प्रलिम्पन्त्यथ[2] महिषी वावाता परिवृक्तीत्येता अश्वे गणान्सूचीरादायाभ्यायन्त्यथ । तस्य यत्राश्च क्रोडान्तस्तस्मिन्महिषी सौवर्णाभिः सूचीभिरसिपथान्कल्पयन्त्येति गायत्री त्रिष्टुप् द्विपदा या चतुष्पदेति द्वाभ्यां प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडादा नाभेस्तस्मिन्वावाता राजताभिरुत्तराभ्यां द्वाभ्यामपराभ्यां जायाभिः सहाथ यत्प्रतीचीनं नाभेरा पुच्छात्तस्मिन्परिवृक्ती सीसाभिरुत्तराभ्यां द्वाभ्यां सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । अथैतं पत्नयो यन्त्यध्वर्यो रावषयं सूचीर्हिरण्यं सुवर्णं च सायकं च याचति । ताभ्यामस्य क्रोडमापिनष्टीत्यमद्[3] विशायतेति[3] । कस्त्वा च्छ्यति कस्त्वा विशास्तीत्येतत्षडृचं यजमानं वाचयति । यदैतस्य सूक्तस्य पारमेत्यथाध्वर्युरश्वस्य क्रोडात्पिशितमुत्पिनष्टी-

---

१ The avagraha added by me

२ •लिंपत्यथ MB, •लिपत्यथ Be U

३ Thus M, क्रोडमापिनस्तिसंभवनपरिवारयेति Be, क्रोडमापिनविर्धेमम (वं) त्वं पिबामवैति BU.

त्यमस्थं[1] विद्यमतेत्याश्मिति[1] नाश्वस्य वपा भवति चन्द्रमिव मेदः परिहृत्य[2] श्यास्य वपा वपा[3] तूपरस्यैवं गोमृगस्य कालायसैः पर्यङ्ग्याणां लोहितायसैरितरेषां सुवर्णैर्दक्षिणेषां रजतैरुत्तरेषाम् ॥ ३० ॥

अथ हैताध्वर्युर्वपया प्रथमया प्रतिपद्यते ऽनूचीरितरा आहरन्त्यश्वस्यैव वपायै प्रतितप्यमानायै बर्हिषो ऽपसुपास्य-त्युपेतरा यच्छन्त्युत्तरतो ऽश्वस्य तूपरस्य गोमृगस्येति वपाः श्रपयन्ति दक्षिणत इतरेषां पशूनामश्वस्यैव वपायै स्रुवाहुत्या-भिजुहोत्युपेतरा यच्छन्त्यथ [4]स्वाहाकृतिभिर्येषां चरित्वा सऽस्ना-वेण पृषदाज्यमभिघार्याश्वस्यैव वपामभिघारयत्युपेतरा यच्छ-न्त्यथ पुरस्तात्स्वाहाकृतिऽ[5] स्रुवाहुतिऽ हुत्वा स्रुवर्णेन मध्य-मानं जुहोति यस्य ते यौर्मेध्यमेत्यथोपस्तीर्य द्विः स्रुवेणाश्व-स्यैव[5] वपाऽ समवद्यन्नाह प्रजापतय इत्युपाऽशु छागस्य छागस्योत्तरस्य वपानां मेदसो ऽवदीयमानस्यानुब्रूहीत्युच्चैर्यावतीः[6] स्रुवन्भवत्यथेतराः पाथ्या वेडसूनेन श्योतायच्छन्ते द्विरभि-

---

१ Thus (without, however, the pluti sign) M ; •तदुपविमहि इत्य-मर्थं विमाशवे इत्याश्मिति Be, and thus also BU (but थे i s n. इत्य) ।

२ •कम्' MSS exc M

३ वपां M

४ स left out in all the MSS exc. M.

५ सव om M

६ ब्दीयमानामनु० M, cp. supra xx 5 (p 70, 11),— यावती M, यावति the other MSS cf supra l c.

धारयत्यथास्याश्वस्याह प्रजापतय इत्युपाꣳशु चयस्य छागस्योस्रस्य वपा[1]मेदः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते वपां[2] जुहोत्यथोपरिष्टाद्व्रजतेन महिमानं जुहोति · तस्य ते पृथिवी महिमेत्यथ पर्यङ्ग्याणां वपाभिश्चरत्यथैतरेषामथ दक्षिणेषां प्रतिप्रस्थातारो वपाभिश्चरन्त्यथोत्तरेषां । याꣳश्च ग्राम्याणां पशूनामुदस्याचीदारण्याꣳश्च स्रुवाहुत्यस्तेषां वपाभ्यः प्रतिजुहोत्युपाꣳश्वेतेषां पशुजातानां वपाभिश्चरन्ति प्राजापत्यानाꣳ सावित्राणाꣳ सारस्वतानां पौष्णानां यामानां पितृदेवतानां द्यावापृथिव्यानां वायव्यानाꣳ सौर्याणां वैश्वकर्मणानामित्यथोपरिष्टात्स्वाहाकृतिꣳ स्रुवाहुतिꣳ हुत्वा वपाश्रपणीरनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते । ऽथ पशूनभिग्राहि[3] शमितरित्याह माश्वस्य सोमापिहतीमांश्वस्यास्थि[4] संꣳश्चारीर्येयाङ्गमेनं[4] विहृत्य श्रामित्रे कुम्भ्याꣳ समवश्रमयतादेवं तूपरमेवं गोमृगमथ दक्षिणमश्वशफं गोमृगकण्ठमिति श्रामित्रे निष्पचतादथाश्वेन कमण्डलुनाश्वतेजनीꣳ श्रपयतादित्यथ सावित्रꣳ हुत्वा प्रसर्पन्ति प्रातःसवनाय । तदनुधा संतिष्ठते । ॥ ३१ ॥

अष्टमः ॥

---

१ वपा M, वपां B Be U

२ वपां MB, वपा Be

३ Thus M, संस्रवि Be B, मयावि U.

४ Thus M, सोमविहत्वीमांस्यास्थि संधाररायथा° B, सोमाविहतीमांस्यास्थि संसाररायथा° U, सोमाविहतनी etc (as U) Be

अथ सावित्रꣳ हुत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यश्वषाड् यज्ञः संक्रामत्विति । कामं दक्षिणानां[1] ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति । प्रसिद्धो ऽन्वभिषेको[2] । ऽहीनसंततिं करोत्युत्था माध्यंदिनꣳ सवनꣳ संतिष्ठते । ऽथ सावित्रꣳ हुत्वा प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यपात्रेण चरित्वाग्रयणं गृह्णात्यथोक्थ्यं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वाथैतान्पशून्प्रचरत्यश्वं तूपरं गोमृगमित्यथ पर्यङ्ग्यानथेतरानथ दक्षिणतश्चोत्तरान्तु-रतो ऽश्वस्य तूपरस्य गोमृगस्येति हविरुपसादयन्ति दक्षिणत इतरेषां पशूनामथ वैतसे कटे ऽश्वस्य[3] हृदयं निधाय सुवर्णेन च सायकेन च तक्षाये ऽवद्यत्याह ॥ ३२ ॥

मनोताये हविषो ऽवदीयमानस्यानुब्रूहीत्येकादशावदानान्यवद्यत्येवं तूपरस्यैवं गोमृगस्य । कालायसैः पर्यङ्ग्याणां लोहायसैरितरेषाꣳ सवर्णैर्दक्षिणेषाꣳ रजतैरुत्तरेषां । नाश्वस्य[4] तूपरस्य गोमृगस्येति स्विष्टकृते ऽवद्यत्यवद्यन्तीतरेषां पशूनां ।

---

१ M ins. पनि after कामं and leaves a blank for two akṣaras before दक्षि० ।

२ Thus M, ०भिषो the other MSS.

३ वꣳ M.

४ Thus M, नाश्वस्य the other MSS.

नाश्वस्य[1] तूपरस्य गोमृगस्येतीडामवद्यत्यवद्यन्तीतरेषां पशूनामथैतमश्वं[2] वैतसे कटे यथाङ्गं[3] चिनोति । पुरस्तात्प्रत्यञ्चं तूपरमायातयति । पश्चात्प्राचीनं गोमृगमथ जुहूपभृतावाददान आह प्रजापतय इत्युपाꣳशु हयस्य छागस्योस्रस्य हविषो ऽनुब्रूहीत्युच्चैरित्याक्रम्याश्राव्याह प्रजापतय इत्युपाꣳशु हयस्य छागस्योस्रस्य हविः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते नाम्नैव कटेनाप्रावृत्प्रहरति ॥ ३३ ॥

यौस्ते षष्ठं कर्मेत्यकर्मीद्राव्याकाम्याजीति त्रिभिरनुवाकैरथ पर्यग्न्याणाꣳ हविर्भिश्चरत्यथैतरेषामथ दक्षिणेषां प्रतिप्रस्थातारो हविर्भिश्चरन्त्यथोत्तरेषां । याꣳश्च ग्राम्याणां पशूनामुदस्थाचीदारण्याꣳश्च स्रुवाहुत्यस्तेषाꣳ हविर्भ्यः प्रतिजुहोत्युपाꣳश्वेतेषां पशुजातानाꣳ हविर्भिश्चरन्तीत्युक्तमेतदथ पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजत्यथ वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतो गोमृगकण्ठेन प्रथमामश्वस्तेजनीमुपजुहोत्यथ स्विष्टकृता चरत्यैतस्मिन्काल आहवनीये स्रुवाहुतिं जुहोति कृताय स्वाहेति । ॥ ३४ ॥

अथैतं प्रत्येकमश्वावायानयति दक्षिणतो वोदञ्चं पश्चाद्वा प्राञ्चं । तस्य स्रुगिव पूर्वार्धो[4] भवत्येवमेव मध्यं । चमस इव

१ Thus M Be, नानाश्वस्य UB
२ MSS exc M ins here पशूनां ।
३ Thus M, यथार्थं Be, यथाश्व BU.
४ पूर्वार्धं M, पूर्वार्धौ the other MSS, but cp supra x. 54 (p 56, 9)

बुध्नस्मिंश्चतुर[1] उपस्तृणान, आहामप्रमत्तः संततमानय स्तेगाञ्जिगद्भ्यामीति । स यत्र धाराग्निं प्राप्नोति तत्प्रतिपद्यते स्तेगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति चतुर्दशानुवाकान्यथा-म्नायं स्वाहेति प्रत्यृचमेव द्वे आहुती जुहोति सुवर्दाय स्वाहा बलिवर्दाय स्वाहेति षट्त्रिंशतमश्वस्तोमीयांस्त्रिंशतो[2] द्विपदा इमा नु कं भुवना सीषधेमापो हि ष्ठा मयोभुव इति संचितं प्रत्येकमग्नावनुप्रहरत्यथैनꣳ सꣳस्रावेणाभिजुहोति । समानं कर्मानूयाजेभ्यो । ऽथ पुरस्तादुत्तमस्यानूयाजस्याश्वशफेनाज्यतेज-नीमुपजुहोति[3] । समानं कर्म पत्नीसंयाजेभ्यो । ऽथ पुरस्ता-दुत्तमस्य पत्नीसंयाजस्यायस्मयेन कमण्डलुनाज्यतेजनीमुपजुहो-त्यनुषेकविꣳश उक्थ्यः संतिष्ठते पत्नीसंयाजान्तो । ऽथ वसती-वरीः परिहृत्य यथाऽर्षि विप्रियोपवसन्ति । ॥ ३५ ॥

नवमः ॥

अथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातर-नुवाके ऽपो ऽच्छैत्यग्निरुदैत्वतिरात्र[4] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माश्विनाद्ग्रहादा-श्विनं षष्ठं गृहीत्वैकादश रशना आदाय यूपमभ्यैति । सर्वांस्तꣳ

---

1 बुध्नस्मि° all, but cp l.c.

2 °स्तोमियांस्त्रिंशतो MSS.

3 अश्वस्य १४० अश्व° (before तेजनीम्) all the MSS exc M.

4 Thus M., the other MSS are more or less defective

रान्युदालमग्निष्टुत्स्वैकादश प्रातर्गव्यान्प्राजापत्यान्पशूनुपाकरोति । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्म दाक्षिणेभ्यो दाक्षिणानि हुत्वाष्टौ संवर्गाञ्जुहोत्यर्वाङ् यज्ञः संक्रामत्वित्यथग्निष्टं दक्षिणानां ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदित्युत्सन्नो ऽन्यभिषेको नाचाह्रीमसंततिं करोत्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृहीत्वाथोक्थ्यं गृह्णाति । समानं कर्म पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति । तेषाꣳ समानी मनोता समानी देवता समानः प्रत्यभिमर्शनः समानो वसाहोमः समानो वनस्पतिः समानः स्विष्टकृत्समानीडा समान्यो दिशः । समानं कर्म पत्नीसंयाजेभ्यः । पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याभूतीरनुद्रुत्य जुहोत्या मे गृहा भवन्त्वग्निना तपो ऽभवदित्येताभ्यामनुवाकाभ्यामथ भूताभव्यौ होमौ जुहोति भूताय स्वाहा भविष्यते स्वाहेत्यथाध्वरिकाणि समिष्टयजूꣳषि हुत्वा दशाग्निकान्युपजुहोति । समानं कर्मावभृथादथैतस्मिन्नवभृथे द्वितीयामवभृथाहुतिꣳ हुत्वा दश वारुणान्युपजुहोति नमो राज्ञे नमो वरुणायेत्यथ मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति प्रयामाय स्वाहायामाय स्वाहेत्येकादश । शतायुर्वै पुरुषः

शतवीर्यं ह्यात्मैकशतो यावानेव पुरुषस्तस्मान्मृत्युमवयजत इति ब्राह्मणम् ॥ ३६ ॥

अथैष आत्रेयो विहृतः शुक्लो विक्लिधस्तिलकवान्पिङ्गाक्षः[1] खलतिर्विकटः कुनखी कुब्जः शिपिविष्टो मग्न उपमज्जति[2] तस्य मूर्ध्नि जुहोति जुम्बकाय स्वाहेत्यथास्मा एतत्कृतं विषयं ददात्यथैनमभिप्रजिताध्रमन्ति[3] मा मे राष्ट्रे वात्सीरिति[3] प्रविद्धो ऽवभृथ उदयनीयायेष्ट्वा मैत्रावरुणीं वशामुपाकरोति तस्यै सौरीमेव श्वेतां वशां इत्युपालम्भ्या भवन्ति तासां प्रविद्धं वपाभिपरिमाणेन गार्हपत्यं पात्नीवतमुच्छ्रित्य तस्मिञ्छगलं कल्माषं किकिदीविं विदीगयमिति स्वाहाकृतपशूनुपाकरोति तान्पर्यग्निकृतानुत्सृज्याज्येन वशस्यां करोत्यथ पशुपुरोडाशान्निर्वपति पशुपुरोडाशौ वाथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश पथ्यान्युपजुहोति नमो राज्ञे नमो वरु-

---

१ पिङ्गाक्षाम्पिङ्गलाक्षः M.

२ Thus M; उपविशति the other MSS

३ Wholly uncertain ददात्यथैनमिपुजिताध्रयमति मा मे राष्ट्रे वात्सीरिति M, ददात्यैनामिपु(षि) माध्रयमनिभासे राष्ट्रेमेवाध्वत्सीरिति B Be (pr. m.); ददात्येनामिपुषिताध्रयमंविभासे राष्ट्रेमेवाध्ववात्सीरिति Be (sec. m), ददात्यैनामिपुषिताध्र॰ etc (as B) U, this is certain, that ध्रमति is a third person of a verb, I have conjectured ध्रमन्ति (cp. Śāṅkh. śrs xvi 18, 20 निरवेधन्ति), then the foregoing must be an ablative; but whether इषुजितात् is the correct reading I do not see.

णायेत्यथ पुरस्तात्पशुस्विष्टकृतो दश[1] गव्यान्युपजुहोति मयोभूर्वातो अभिवातूस्रा इति । प्रसिद्धं पशवः संतिष्ठन्ते । ऽथोदवसानीययेष्ट्वाग्रेणाहवनीयं विशालयूपमुच्छ्रित्य तस्मिन्नेतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति । तेषां प्रसिद्धं वपाभिश्चरित्वा पशुपुरोडाशान्निर्वपति । तानमुवर्तन्ते ऽष्टौ देवसुवाꣳ हवींष्यग्नये ऽꣳहोमुचे ऽष्टाकपाल इत्येषा च; दश हविरिष्टिसंस्था एता याज्यापुरोनुवाक्या भवन्ति ॥ ३७ ॥

अग्नेर्मन्वे प्रथमस्य प्रचेतस इत्यथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश ब्रह्मवर्चसान्युपजुहोत्या ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्यथ पुरस्तात्पशुस्विष्टकृतो दश संनतिहोमानुपजुहोत्यग्नये समनमत्पृथिव्यै समनमदिति । प्रसिद्धं पशवः संतिष्ठन्ते । ऽथैतैरश्वह द्वादशभिर्महौदमैश्चरति । तेषामुक्तं चरणं यथामुत्रैकस्मान्यत्र[2] रत्नाभ्यामेभ्य एतान्परःशतं शतपशानिष्कान्ददाति । सुवर्णरजते महिष्योः पात्रे ददात्येकतयानि[3] सौवर्णानि पात्राणि ददाति हिरण्मयं कशिपु[4]

---

१ om M

२ Thus M (for अमुत्र cp. supra xv 4), यथामुत्रैकस्मन्यत्र the other MSS., as all the MSS. contain a case form of रत्न, I did not venture to change यथामुत्रैवमत्र, i.e., yathā amutra evam, a. r.

३ Thus M, •तेनानि the other MSS.

४ •पु or •पुं MU.

हिरण्मयं[१] पड्वीशं[१] हिरण्मयं संदानमित्यथ[२] वीणागाथिभ्यां शतं विपथौ ददात्यथर्तुपशुभिर्यजत[३] ऋतुपर्यायं वा समानेषु वान्यायतनेषु पिशङ्गास्त्रयो वासन्ताः सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयः शारदाः पृश्निसक्थास्त्रयो हैमन्तिका अवलिप्तास्त्रयः शैशिराः संवत्सराय निवक्षस इत्यथ देविकाहविर्भिर्यजते । अथ वैधातवीयया यजते । अथ सौत्रामण्या यजते । संतिष्ठते ऽश्वमेधस्त्रिभिः संवत्सरैः । संतिष्ठते ऽश्वमेधः संतिष्ठते ऽश्वमेधः । ॥ २८ ॥ दशमः ॥

॥ इति पञ्चदशः प्रश्नः ॥

---

१ Left out in the MSS. exc. M.

२ वदावथि॰ MSS. exc. M.

३ यजत M, यजेत the other MSS.

द्वादशाहेन यक्ष्यमाणो भवत्येको वा बहवो[१] वेतो[१] ह्येको[१] दक्षिणावता यजते । स[२] यद्येको[१] यदि बहवो ऽमावास्याया एव यज्ञेनोपरिष्टाद्दीक्षन्ते । ते[३] गृहपतेररण्योः संजानते पृथग्वा । ते यदि गृहपतेररण्योः संजानते मथित्वा गार्हपत्यमाहवनीयमुद्धरन्ति[४] । ग्रामाद्धृतमपणमाहरन्ति । यद्यु वै पृथक् संजानते गृहपतिरेव प्रथमो मन्थते[५] । अथेतरे[६] पर्युपविश्य मथित्वामथित्वैव गार्हपत्ये[७] संनिवपन्ति । तस्मादेकवद्धृतादाहवनीयमुद्धरन्ति । ग्रामाद्धृतमपणमाहृत्य संनिवपन्त्यथ यदि पश्चादपर[७] आगच्छति मथित्वैव गार्हपत्ये ऽर्धं निवपत्याहवनीये ऽर्धं ग्रामाद्धृतमपणमाहृत्याप्यर्वाक्तुपो[८] एवं[८] पूर्वेषु कर्मसु क्रियन्ते । ऽथातः पवनस्यैव मीमांसा । गृहपतिमेवाध्वर्युः प्रथमं पवयत्यथ होतारमथ ब्रह्माणमथोद्गातारं प्रतिप्रस्थाताध्वर्युं पवयति प्रशास्तारं प्रस्तोतारं ब्राह्मणाच्छंसिनमाग्नीध्रः प्रतिप्रस्थातारं पवयत्यच्छावाकं नेष्टारं पोतारं

१ Thus M only (regarding वतो ह्ये cp. infra xvi 13 : 260, 5), बहवो वा बहवो all the other MSS
२ Given only by M
३ Only in M
४ Thus M only, ०हरन्ति all the other MSS.
५ मन्थति M
६ मदेवे० all the MSS exc M.
७ पर्यपर M
८ Thus M ०त्याप्यर्वाकुप० T Bo H D, ०त्याप्यर्वाक्तपसमुद्धरन्त० B Br, ०त्याप्यर्वाक्तपसमेव U

सदस्यमुन्नेताग्नीध्रं पवयति यावत्स्तुतः सुब्रह्मण्यं प्रतिहर्तार-मात्मानमन्ततस्ते चेद्ब्रूयुरध्वर्युर्वाव[1] सर्वस्य पवयिता स नः सर्वा-न्पवयत्विति स एवैनान्सर्वान्पवयत्यपि वान्योऽन्यं पवयन्ति[2] यथाधीयन्तो भवन्ति । ॥ १ ॥

तेषां प्रसिद्धा दीक्षणीयेष्टिस्तायते । सत्रदाम्नाविति स यथाह भरतवदिति तद्गृहपतेरेवार्षेयं प्रथमं वृणीते[3] ऽथ होतुरथात्मनो ऽथ ब्रह्मणो ऽथोद्गातुरथ प्रतिप्रस्थातुरथ प्रस्तोतुरथ प्रशास्तुरथ ब्राह्मणाच्छंसिनो ऽच्छावाकस्य सदस्य-स्याग्नीध्रः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तु-रन्ततो ब्रह्मण्वदिति समानं । ते[4] सर्वे[4] एव[4] दीक्षाकृतिषु समवारभन्ते । गृहपतिमेवाध्वर्युरन्वैः कृष्णाजिने वाचयति । तदेवेतरे[5] ऽनुमिकामन्त्र्यपि[6] वान्योऽन्यं वाचयन्ति यथाधी-यन्तो भवन्ति । ते यथोत्साहं प्रतदुघमुपयन्त्येकैका[7] वा सर्वेवा । तेषां यथैव प्रवरानुपूर्व्येणैव[8] यशोच्छिष्टे[9] ऽति-

---

१ Thus MTD Be 11 U (pr. m.); वा (i. e. वाव) B Be U (sec. m).

२ Thus M, sing the other MSS

३ प्रवृणीते M.

४ Thus M, ते सर्वे (without एव) T Ba 11 U D; समानमन्ततः सर्वे एव B Be.

५ Thus MUD; तदेवेतरे the other MSS.

६ Thus M; ऽनुमिकाम॰ all the other MSS.

७ Thus (प्रतदुघमु॰) Bo 11 DUT; ॰दुघमुप॰ B, ॰दुघ उप॰ M.

८ एव om. M

९ Thus M B Be, ॰च्छिष्टे॰ T Be 11 DU

पाश्नभवेषु[1] षोडशिनि । षष्ठ्यामुपसद्युत्तरवेदिष्ठं संनिवपन्ति यद्यनग्निचित्यो भवत्यथ यदि साग्निचित्यः प्रथमायामेवोपसद्युत्तरवेदिष्ठं संनिवपन्ति । ॥ २ ॥

तेषां द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुता[2] । स द्वादशाहे ऽग्निं चिन्वीतेत्येक आहुरस्थित उ हैके । प्रविद्धेन कर्मणौपवसथ्याद्यन्ति । तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रस्तायते । स यत्र माध्यंदिने सवने तृतीयसवनाय वसतीवरीभ्यो ऽवनयति तद्वसतीवरीकलशे यावन्मात्रीरतिरिच्याग्नीध्रे[3] हुत्वा छायायै चातपतश्च सन्धौ व्युहरति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माँ आविवासति हविष्माँ अस्तु सूर्य इत्यपाहोमसंततिरेतासेव पुनःपुनश्चोदयिष्याम[4] इति वदन्तः । सो ऽस्य वैव[5] यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञियस्य[6] वा स्तोत्रे शंयुवाके वा । तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रः संतिष्ठते । तस्मिन्सं-

---

१ Thus M T Be 11 DU, ॰भवे B Be.

२ प्रसुताः all the MSS exc M, cp. infra xvi. 12 init.

३ Thus (यावन्मात्रीर॰) MT Be 11, ॰मात्रीम॰ D; ॰मात्रम॰ B Be U.— All the MSS. exc M चरिष्य।

४ Thus M B Be; ॰ष्याम्ह T Be 11 DU.

५ Thus M in accordance with the Dvaidha, सोऽवैव T Be 11 U; सोऽवश्यै B Be, सौवैव B

६ ॰यज्ञियस्य T Be 11 DU, ॰यज्ञीयस्य MB Be

प्रतिपत्सु न्यूङ्खयन्ति ग्रहो[1] वेत्येतदेकमथापरं[2] प्रातरनुवाके न्यूङ्खयन्ति हविष्कृत्युभयेषु प्रस्थितेषु माहेन्द्रस्याश्रावणे । न तत ऊर्ध्वं न्यूङ्खयन्तीत्यरणीहस्त[3] एतदहरध्वर्युर्माहेन्द्रस्य । स्तोत्रमुपाकरोति । तदुद्गातुर्दक्षिण[4] ऊरौ मन्थति[5] । तं जातꣳ सर्व एवाभिहिङ्कुर्वन्ति । ॥ ३ ॥

तस्य मीमाꣳसा । गार्हपत्ये ऽनुप्रहरेत्प्रतिष्ठाकामानामाग्नीध्रे[6] प्रजाकामानाꣳ[7] । मार्जालीये पशुकामानामाहवनीये स्वर्गकामानामित्यमाहृत्य तदाहवनीय[8] एवानुप्रहरति भवतं नः समनसाविति । प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्येतावदेवैतदहः क्षिप्रं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते चित्राव सवन्यः प्राकरणामैन्द्रो ऽतिग्राह्यो । ऽङ्गिरेतदहरवकाशिभिरध्वर्युर्माहेन्द्रस्य[9] स्तोत्रमुपाकरोति । तासां

---

१ प्रस्तोमस्तं Be B
२ म ins TD Be 11 U
३ Thus MT Be 11 UD, °रणीश्यामे° B Be.
४ नदुद्गा° M
५ मर्थति M
६ °ग्नीध्रीये B Be U
७ प्रजननका° M.
८ Thus M only, तेनमाह° T Be 11 DU (pr. m.), तमाह° U (sec. m.), एतमाह° B Be.
९ All MSS ins एव after ऽङ्गिर, exc. M

ये३[1] यजामहे ऽग्निं गृहपतिं गार्हपत्यात्सुगृहपतयस्त्वयाग्न इमे सुन्वन्तो यजमानाः स्युः सुगृहपतिस्त्वमेभिः सुन्वद्भिर्यजमानैः स्या[2] अग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम् । विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन्देवाँ उशतः पायया हविष्वृतुना सोमं पिबतु वौ३षडिति । [3]सांवाग्निमेतद्दशभंवत्युत्तरतो वत्सान्धारयन्ति दक्षिणतो माहेन्द्रस्य स्तोत्रे ऽन्तरेण[4] सदोहविर्धाने संवाग्य[5] वत्सान्मातृभिः संसृजन्ति[6] । बध्नन्ति वत्सानुत्सृजन्ति माहेन्द्रस्य[7] स्तोत्रमुपाकरोत्यथापराह्ण° उक्थ्यपर्यायेषु शिल्पानि क्रियन्ते । पारुच्छेपीर्होता शंसति । वालखिल्या मैत्रावरुणो विहरति । वृषाकपिं ब्राह्मणाच्छंसी शंसत्येवयामरुतमच्छावाकः । संतिष्ठते पृष्ठ्यः

---

१ Sign of pluti only in B Be UD.

२ स्याद् all

३ The passage सांवाग्नि° up to उपाकरोति (line 9) is given here by MB Be (sec. m) only, the other MSS. give it in kh 6 after the words वृषण्वानस्य (252, 3). U agrees with M with this exception that only the first words सांवाग्निमेतद्दशभंवति are given after वृषण्वा-नानम् ।—सांकाग्नि° all.

४ Thus MB Be, स्तोत्रे ऽन्तरेण the other MSS.

५ Thus M only, संविश्य all the other MSS.

६ उभयत्र° M.

७ माहेन्द्रस्तो° उपाकरोति not found in M

षड्ढो ऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य यथार्षि विनिर्मथ्योपवसन्ति ॥ ५ ॥ प्रथमः ॥

अथ श्वो भूते चतुर्विंशं छन्दोमसुपयन्ति बृहत्सामानमथ श्वो भूते चतुश्चत्वारिंशं छन्दोमसुपयन्ति रथंतरसामानमथ श्वो भूते ऽष्टाचत्वारिंशं छन्दोमसुपयन्ति बृहत्सामानमथ श्वो भूते चतुर्विंशमग्निष्टोममुपयन्ति रथंतरसामानमविवाक्यमेतदहर्भवति नैतदहरन्योऽन्यस्मा अपवदाय आक्रोशथा[१] वा मारामृष्या वा विब्रूयादिति यद्वा आक्रन्दे वै यज्ञः संतिष्ठते यच्च विब्रूयादिति विब्रूयादिति[२] वै[२] नो[२] ब्राह्मणं भवति नैतदाद्रियेत[३] नाद्रियेतेति[३] स्थितिरनुष्टुभमेतदहर्भवति नानुष्टुभो ऽधीयते[४] ते चेदनुष्टुभ ऋग्वेदश्चाध्वर्युरनुष्टुभ[५] यजुर्वेदमूर्धा वय सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरमित्येतया सौर्या[६] गायत्र्या वषती-

---

१ Thus T Be 11 DU, आक्रन्दिवाया B Be; आक्रन्दयाया M, but above च and च two aksaras are written, which I am unable to decipher.

२ Thus M, the other MSS विब्रूयादिति once only and वैनो।

३ Thus M, most of the other MSS. om here and at the collateral passages (xvi 6 s fin, xvi, 16 s, fin.) नाद्रियेत।

४ धीयंते all the MSS exc. M.

५ Thus Be, and M, which inserts only चेद् after चाध्वर्युः।—अनुष्टुभ both times B, the whole passage runs thus in T Be 11: तचेदनुष्टुभश्च ऋग्वेदेनुष्टुभ ऋग्वेदमूर्धा; in U, चचेभनुष्टुभनुष्टुभ ऋग्वेदे अनुष्टुभ ऋग्वेदमूर्धा, in D तचेदनुष्टुभमनुष्टुभमृग्वेदेनुष्टुभ ऋग्वेदमूर्धा।

६ Thus M only, सौर्या all the other MSS.

वरीगंत्रीथाद्दृदे त्वा मनसे त्वेत्यपोद्धृत्यैतामन्यया सौम्या[१] गायत्र्या राजानमुपावहरेदिष्णो त्वं नो अन्तम इत्यपोद्धृत्यैतामन्यया वैष्णव्या गायत्र्या राजानमुपतिष्ठेत । स उ चेद्विद्वाननुष्टुभमभिव्याहरत्यत्यक्रमिषमिति[२] होत्रे प्राह । होतानाप्यापयिता । होतास्य तदक्षरैरपिवपति[३] । स उ चेन्मन्येतामितकामो[४] वा अहमस्मि यदृङ्मयं वेदे यजुर्मयमेव[५] तद्वाचैवाध्वर्यौ[५] वेदौ नौ[५] संपादयेतामिति[५] नैतदाद्रियेत । नाद्रियेतेति स्थितिः । संतिष्ठत एष चतुर्विंशो ऽग्निष्टोमो रथंतरसामा । ॥ ६ ॥

तस्मिन्संस्थिते समिद्धारा[६] यन्त्वाहृत्य[६] समिध आग्नी-

---

१ Thus M only, सौर्या B Be, सौर्यया Be 11 TUD.

२ The text is corrupt in all the MSS, and I am at a loss how to emend, अत्यक्रमिषम् is my conjecture, अचमिषमिति B, अमिषमिति Be, अचयामिषमिति TDU, अचयामिषति Be 11, अभुमन्या (or न्मा) सुनीषमिति M Probably we are to read an iṣ-aorist 1 ps sing. act. Keś. has· सत्यामिषमिति मौर्वैर्जमारि मारिणा (sic).

३ Thus conjecturally All the MSS ०वपति exc M, which has ०पवपति ।

४ ०कामा MT Be 11 DU, ०कामः B Be, which om वा; all the MSS exc M begin a new kh with अहमस्मि ।

५ Thus M, यजुर्मयं वैतान्यागावैवाध्वराचयौ वेदौ ननौ संपा० T Be 11 D, यजुर्मयं वैतान्यचराश्चयो वेदौ संपा० B Be, यजुर्मयं वैतान्यावैवाध्वरापयौ वेदौ संपा० U.

६ Thus corrected, समिद्धारसंस्था० MSS.

भीये संन्यस्यन्ति[१] । तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं[२] जुहोति प्रजापतये स्वाहेति मनसैव सदः प्रसर्पन्ति तूष्णीꣳ स्तोमाय । संप्रसृप्तान्विदित्वाध्वर्युर्मनसैव प्राङ् द्रुत्वा मनसेमां[३] पात्रं कृत्वा मनसाग्नेयं[४] ग्रहं प्रजापतये गृह्णात्युपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामीति[५] । यदिदं किं च तदिति मनसा परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा मनसैव स्तोत्रमुपाकरोति । मनसा[६] प्रसौति[६] । मनसा प्रस्तौति । मनसोद्गायति । मनसा प्रतिहरति । मनसा होत एषोऽत्तमेति माङ्मनसा होताह्वयते । मनसाध्वर्युः प्रत्याह्वयते । मनसा शꣳसति । मनसा प्रतिगृणाति । यदेतस्य[७] मानसस्य ग्रहस्य पारमेत्यथ होतोक्थैयतुहोतृभ्याचष्टे । तस्मा[८] अध्वर्युः प्रतिगृणाति ॥ ७ ॥

ओꣳ होतस्तथा होतः सत्यꣳ[९] होतरराम होतरिति ।

---

१ सं॰ found in M only.

२ स्रुवाहुतीर् T Be 11 UD.

३ Thus M ; मनसैव the other MSS.

४ All the MSS exc. M om. आग्नेयं ।

५ इति om. M

६ om B Be U

७ यदेतस्य B Be

८ तस्माद् T Be 11 UD.

९ Be 11 TD ms. च, not M Be BU, cp. xxi. 16 (109, 14).

यद्धु वै होता नाध्येत्यन्य[1] उ[2] होत्राशंसी शंसति । तस्मा उ प्रतिप्रस्थाता प्रतिगृणाति । यदैतेषां पारं यन्त्यथाध्वर्युर्मनसैव प्राङ् द्रुत्वा मनसैव तं ग्रहमुपोद्यच्छते[2] । मनसाश्रावयति । मनसा प्रत्याश्रावयति । मनसा वषट्कृतानुवषट्कृते हुत्वा हरति भक्षं । मनसा समुपहूय भक्षयन्ति । मनसा निर्णिज्य पात्रं प्रयच्छति । संतिष्ठत एव तूष्णींशंसो । ऽयमिंजो विसृच्छत्यधिवृक्षसूर्ये[3] वाचं विसृजध्वाश्व[4] नक्षत्रेषु[3] इत्यधिवृक्षसूर्य[4] इति वै मो ब्राह्मणं भवति । ते ऽधिवृक्षसूर्य एव वाचं विसृजन्ते । तामेवैतामीमाम्परिश्रयन्ति । पत्नीशाले पत्नीः परिश्रयन्त्यथामतिसर्पन्तावध्वर्यू धिष्णियानर्हिभ्यामौदुम्बरीं समन्वारभेते इह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिति[5] । ते यथासमुदितं[6] वाचं विसृजन्ते । ॥ ८ ॥

अथातः सर्पणस्यैव मीमांसा । दक्षिणस्य हविर्धानस्याधो-

---

1 Thus MT B 11, °न्यु D, °न्यो B Bo.

2 Most of the MSS have the plural.

3 विश्वंत्य° all exc. M.

4 Thus emended hesitatingly, विसृजध्वाश्वनक्षत्रेषु—अधि° M, विसृज्याध्वांनक्षत्रेषु इत्यधि° T Bo 11 D, विसृज्याध्वांनक्षत्रेष्वित्यधि° U; विसृज्याध्वमिति वाचंनक्षत्रेष्विति वा अधि° B Bo; Keś. अथाते तूष्णींशंसेने ऽध्वर्युः अग्निजो विसृजति अधिवृक्षसूर्ये वाचं विसृज्याध्वमा (sic) नक्षत्रेष्विति। इतर ऋत्विजः प्रतिशृण्युः अधिवृक्षसूर्ये वाचं विसृज्यामह (sic) इति वा। उदितेषु नक्षत्रेषु विसृज्यामह (sic) इति वा।

5 Thus M B Bo and cp. Āp XXI 12 7, रमतिमिति T Be 11 DU

6 °दितां M

ऽधो ऽवाङ् सर्पंपुरेतेन ह वै मर्पाः सहपुत्रांतो वै ते जीर्णा-
स्तनूरपाघ्नतेति । तद् वा आहुर्यो वा अपथेन प्रतिपद्यते
स्थाणुं वा हन्ति गर्तं[1] वा पतति श्वेपड् स न्येति । वषट्कार-
पथेनैव सर्पंपुरेष याव[2] स्वर्गः[2] पन्था यद्वषट्कारपथ इति ।
तद् वा आहुः पराङिव वा एषो ऽध्वान्तः पन्था यद्वषट्कार-
पथो । ऽध्वर्युपथेनैव सर्पंपुरेष वा[3] अर्वाचः[3] पराचः[3] स्वर्गः
पन्था यदध्वर्युपथ इति । ते ऽध्वर्युपथेनैव सर्पन्ति । तेषु
समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोत्युपसृजन्मात्रे वत्सं
धारयन्नरुणो धयन् । रायस्पोषमिषमूर्जमस्मासु दीधर-
त्स्वाहेति । समुत्क्रम्य चात्वालदेशे जपन्ति वागैतु वागुपैतु
वाग्नोपैतु वागध्वर्कर्म यथाकर्म यदत्यगाम यथात्यगाम
यदत्यरीरिचाम यथात्यरीरिचाम प्रजापतौ[4] प्रजापतिं[4]
तत्पितरमप्येत्विति[4] । तदाप्यन्ततः[5] प्रतितिष्ठन्ति । तेषां य
एव प्रायणीयो ऽतिरात्रः स उदयनीयः । सत्त्रादुदवसाय

१ कर्तं B Be.

२ Thus M, याव पराचः स्वर्गः B Be, यावस्वर्गः T, यावस्वर्गः Be 11 DU.

३ Text not wholly certain वा अर्वाच पराच M, वावपराचः all the other MSS.

४ Thus U (sec. m) B Be, प्रतिपत्तौ तत्प्रजापतौ सपितर॰ T Be 11 D, M reads as B, but with तत् also before प्रजापतिं ।

५ Thus B Be, तदाप्यन्तत॰ Be 11 DU, तदाप्यन्ततः T, तावदाप्यंततः M.

ज्योतिष्टोमेनाग्निष्टोमेन चतुष्टोमेन पृष्ठ्यशमनीयेन सहस्रदक्षिणेनैकैको यजेत । ॥ ९ ॥ द्वितीयः ॥

अथातो ग्रहक्लृप्तेरेव मीमांसैन्द्रवायवाग्रं प्रथममहः । शुक्राग्रं द्वितीयमाग्रयणाग्रं तृतीयं च चतुर्थं चैन्द्रवायवाग्रं पञ्चममहः । शुक्राग्रꣳ षष्ठं च सप्तमं चाग्रयणाग्रमष्टममहरैन्द्रवायवाग्रे[1] नवमदशमे[1] । इति[2] न्या[2] अध्वर्युतो[2] । ऽथ छन्दोगक्लृप्तो । [3]गायत्रीप्रातःसवनः [3]प्रथमस्त्रिरात्रस्त्रिष्टुब्माध्यंदिनो[4] जगत्तृतीयसवनो[5] । जगत्प्रातःसवनो द्वितीयस्त्रिरात्रो गायत्रीमाध्यंदिनस्त्रिष्टुप्तृतीयसवनस्त्रिष्टुप्प्रातःसवनस्तृतीयस्त्रिरात्रो जगन्माध्यंदिनो गायत्रीतृतीयसवन इति[6] । तस्मात्सच्छन्दस[7] उपयन्ति । ॥ १० ॥

---

१ Thus MT Bell UD and Keś; चैन्द्रवायवाग्रमष्टममहः शुक्राग्रं नवममहरैन्द्रवायवाग्रं दशमम् II Be, on the whole passage cp. also Āp. xxi. 14. 5

२ My correction, इतीन्याध्व॰ M; इतीमाध्व॰ T Be II DU, इतीमे चाध्व॰ II Be.

३ Thus M only, गायत्रीप्रातःसवन प्रथम त्रिरात्र the other MSS

४ Thus M only (on the form त्रिष्टुब्म॰ cp TS. vii. 2 8 3), त्रिष्टुप्मा॰ II Bell, त्रिष्टुभमा॰ Be TD, त्रिष्टुभोमा॰ U.

५ All exc. M जगतीतृतीयसवनो॰ ।

६ T Bell DU om इति and read ॰सवनस्तस्मा॰, on this whole passage cp Sāy on Ait. Br iv 25 10

७ Thus all exc M, which has तस्मात्सर्वंद and Be II which reads तस्मात्सच्छंदस । The reading of M might be correct

अथातः पशुकॢप्तेरेव मीमांसैन्द्राग्नाः पशवः स्युरित्येक
आहुरेतैरयं लोको वायोरन्तरिक्षमसाविन्द्रस्य । यदैन्द्राग्नः
पशुर्भवति वायव्यो वशाहोम इमानेव[1] लोकानभीप्सन्त[2] एषु
लोकेषु प्रतितिष्ठन्तो यन्त्यथ[3] ये[3] ऽनैन्द्राग्नान्प्रतिपद्यन्ते[3] यथा
श्रेयसे ऽनाहृत्य[4] पापीयस आहरन्ति[5] तादृक्तत्तस्मादैन्द्राग्नाः[6] । १
पशवः स्युरित्येतदेकमन्तिरावपशवो ऽभितो मध्य ऐन्द्राग्ना ।
एकादशिना[7] अभितो मध्य ऐन्द्राग्नाः । सर्वाग्नेया[8] एव स्युरि-
त्येतदेकं । सर्वैन्द्रा[9] एव स्युरित्येतदेकं । सर्वप्राजापत्या[10]
एव स्युरित्येतदेकं । सर्वैकादशिना[11] एव स्युरित्येतदपरं ।
तेषां सर्वैकादशिनैर्यन्तां प्रसिद्धमेव प्रथमे ऽहनि प्रथमामेका॰ २

---

1 Thus M; इमान्वैवेनेकौ॰ B Be, इमान्वैवनेकौ॰ T Bo 11 D; इमानेव-नेकौ॰ U. – पौषंत M, पौषयंत all the other MSS.

2 पांसुप M.

3 Thus M (without, of course, avagraha); वैथैनैन्द्राग्नात्य॰ U; वैथ्येनैन्द्राग्ना अ॰ B Be; वैथ्येनैन्द्राग्नांप्र॰ T Be 11 D.

4 नान्देनाहृत्य M.

5 आवरन्ति MU Be 11 D, आवरति B Be.

6 नत् after मादृक् found in Be B only.

7 ऐका॰ M only, but cp TS. vi. 6. 5. 1.

8 सर्वं अग्ने॰ Be

9 Thus MU, सर्वं ऐन्द्रा B Be; सर्वैन्द्राग्ना T Be 11 D.

10 Thus M, सर्वे or सर्वाः प्रा॰ the other MSS.

11 सर्वं ऐका॰ B Be

दग्निनीमालभन्ते[१] आग्नेयस्य वारुणमुपालम्भ्यं[२] कुर्वन्ति । तथास्यैतानि दश मध्यमान्यहान्यतिरिच्यमानाः पशवो ऽनुभवन्ति । प्रसिद्धमेवोत्तमे ऽहन्युत्तमामेकादशिनीमालभन्ते[१] । आग्नेयस्य वा वारुणस्य वा वैश्वदेवमुपालम्भ्यं कुर्वन्ति । ॥ ११ ॥

तद् वा आहुर्यद्द्वादश[३] दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः कथमस्यैतान्यहानीष्टान्याप्तानि[४] पशुमन्ति भवन्तीति । तिस्र एकादशिन्यो ऽग्नीषोमीयो वैश्वदेवो ऽनूबन्ध्या । षट्त्रिंशतमेते[५] पशवः [६]षट्त्रिंशतमेतान्यहान्येवमस्यैतान्यहानीष्टान्याप्तानि पशुमन्ति भवन्तीति । तद् वा आहुर्यद्द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः कथं द्वादशाहेन संवत्सर आप्यत इति । द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्या । एतानि ह[७] वै[७] संवत्सरस्य वर्षिष्ठान्यहान्येता-

---

१ ॰न्ते MB Be, ॰न्त the other MSS. (cp Āp xxi. 14. 7), the last time DU also plural

२ Thus M; वारुणस्य वा वैश्वदेवमुपा॰ B Be, वा वरुणस्य etc. (as B Be) T Be 11 UD.

३ यद् om all the MSS. exc M

४ M only has preserved this correct reading, all the other MSS. are badly corrupt.

५ Thus all, are we to correct ॰त्रिंशत एते ?

६ Thus all, exc. M, which reads षट्त्रिंशमेतान्य॰ ; are we again to correct षट्त्रिंशत एतानि ?

७ Thus B Be, ह om M, नवे TBe 11 DU

न्यसु संवत्सर आप्यते । [1]समाप्तो द्वादशाहः । समाप्तः संवत्सरकाम । एवं द्वादशाहेन संवत्सर आप्यते[1] । ॥ १२ ॥ तृतीयः ॥

संवत्सराय दीक्षिष्यमाणाः समवस्यन्ति । तद्ध्येतत्पूर्वं संवत्सरस्य समवसायामते ऽन्योऽन्यस्यानूकं[2] च मानुषं च विजिज्ञासमाना । ततो[3] लोके प्रमरस्य[4] कर्ता भवति । ते चतुरहे पुरस्तान्माघ्यै पौर्णमास्यै दीक्षन्ते । तेषामेकाष्टकायां क्रयः संपद्यत । इति नु यदि समामविज्ञाय[5] दीक्षन्ते । यद्यु वा एतस्यामेवैकाष्टकायां समां[6] विजिज्ञासन्ते[6] चतुरह एव पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्यै दीक्षन्ते । तेषामपरपक्षस्याष्टम्यां क्रयः संपद्यते । तेनैकाष्टकां न छम्बट्कुर्वन्ति । तेषां पूर्वपक्षे सुत्या संपद्यते । पूर्वपक्षं मासा अभि संपद्यन्ते । पूर्वपक्षे प्रसवः पूर्वपक्षे वैषुवतं पूर्वपक्ष उत्थानम् । समानं द्वादशाहिकं कर्म । तथैव प्राच्यामुपपक्ष उत्तरवेदिं संनिवपन्ति यद्यनग्निचित्यं भवत्यथ यदि साग्निचित्यं प्रथमायामेवोपपक्ष उत्तरवेदिं संनिवपन्ति । ॥ १३ ॥

---

१...१ Thus M, i. a. o. संवत्सरकाम एवं T Be 11 DU संवत्सरकामेनाम एवं; acc to B Be the passage runs thus एवं द्वादशाहेन संवत्सर आप्यते समाप्तो द्वादशाहः समाप्तः संवत्सरक्रतुः ।

२ Thus M Be, °स्यानुकं Be 11, °स्यानूकं BUD

३ Thus M Be (sec. m.), cp. supra xvi 1 (p 245, 1); ततात the other MSS

४ The word occurs again xvii 43 and Drāhy v. 4 11.

५ समाविज्ञाय M.

६ Thus M, समामविज्ञायासन्ते Be, समामविज्ञासन्ते the other MSS.

तेषां द्वादश दीक्षा द्वादशोपसदः संवत्सरं प्रसुता । न संवत्सरे ऽग्निं चिन्वीतेत्येक आहुरग्निंचित उ हैके । प्रसिद्धेन कर्मणोपवसथाद्यन्ति । तेषां प्रसिद्धं ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रः संतिष्ठते । तस्मिन्संस्थिते चतुर्विंशमुक्थ्यमारम्भणीयमुभयसामानमुपयन्त्यथाभिप्लवं षडहमुपयन्ति । [1]ज्योतिरग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो ज्योतिरग्निष्टोमस्तं चतुरुपयन्ति । रथंतरं बृहद्बृहद्रथंतरं बृहदिति विपर्यासं पृष्ठे भवतः । पृष्ठ्यः षडहः । स मासस्तेनैवं संयत्तेन पञ्च मासान्यन्त्यथैतं षष्ठं मासं संभार्यं संभरन्ति । चत्वारो ऽभिप्लवाः षडहास्तान्यष्टादशाहानि । प्रायणीयारम्भणीयौ । तानि विंशतिरहानि । पृष्ठ्यः षडहो ऽभिजित्त्रयः परःसामानः । स मासो । ऽथ वैषुवतमेतं वैषुवते ऽहन्येकविंशमग्निष्टोममुपयन्ति बृहत्सामानं । तस्य सौर्यो ऽतिग्राह्यः सौर्यः पशुरुपालम्भ्यस्तद्धैतदेके[2] दिवैवैतेनाह्ना प्रतिपद्यन्त उदित आदित्ये दिवाकीर्त्यमहरिति वदन्तो । यथैवान्येषामह्नामेवमुपाकुर्यादिति मौद्गल्यस्तस्य महादिवाकीर्त्यं होतुः पृष्ठं विकर्णं ब्रह्मसामं मासो ऽग्निष्टोमो । ऽथोर्ध्वं वैषुवतादावृत्तान्स्वरानुपयन्त्यथ विश्वजितमुपयन्त्यथावृत्तं पृष्ठ्यं

---

१ The following acc to M, the other MSS are all more or less corrupt.

२ corrected hesitatingly, तद्धोनैवदेक M, तद्धोचैवदेके Bc, तद्धोतेवदेके Be 11 D, तद्धोनत्देके B; तद्धोननदेके U pr m, तद्धोतुः तदेको U sec. m; cp. infra xvi 16 (p. 263, 1) and xvii. 11.

प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ वैषुवते ऽह्नि शुक्राग्रा यथा गृह्यन्ते' समानं कर्माग्रयणाद्ग्रहादाग्रयणं[1] गृहीत्वा चौत्परःसाम्नो गृह्णात्युपयामगृहीतो ऽस्यग्नास्त्वौषधीभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ सौर्यं च[2] सौर्यमतिग्राह्यं गृह्णाति ॥ १७ ॥

तरणिर्विश्वदर्शत इत्यनुद्रुत्योपयामगृहीतो ऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामीति' परिमृज्य सादयत्येष ते योनिः सूर्याय त्वा भ्राजस्वत इत्यथातिग्राह्यान्गृह्णात्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णाम्युपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽस्यग्नास्त्वौषधीभ्यो जुष्टं गृह्णामीति' यत्रैतदतिग्राह्या गृह्यन्त इति ब्राह्मणमथोर्ध्वं वैषुवतादवरमन्वहमादित्यानेव गृह्णाति वैश्वकर्मणादित्याभ्यां विपर्यासमुपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ वैश्वकर्मणं' विश्वकर्मन्हविषा वावृधान इत्यनुद्रुत्योपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णामीत्यथादित्यमदितिर्न उरुष्यत्वित्यनुद्रुत्योपयामगृहीतो ऽस्यग्नास्त्वौषधीभ्यो जुष्टं गृह्णामीत्यथ वैश्वकर्मणमथादित्यमथोर्ध्वं त्र्यहाद्वैश्वकर्मणादित्याभ्यामेव विपर्यासमेत्या

१ चर्द ins M
२ om. B Be H UD

महाव्रतात्तांवुभौ सह महाव्रते गृह्येते । अथैतं महाव्रतीये ऽह्नि प्राजापत्यमतिग्राह्यं गृह्णाति । त्वे क्रतुमपि वृञ्जन्ति विश्व इत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेति । ॥ १८ ॥

अथातः पशुकॢप्तेरेव मीमांसाग्नेयैन्द्राग्नानां[1] प्रसंख्यातिरात्रपशवो ऽभितो मध्य ऐन्द्राग्ना । ऐकादशिना[2] अभितो मध्य ऐन्द्राग्नाः । सर्वाग्नेया[3] एव स्युरित्येतदेकं । सर्वैन्द्राग्ना[4] एव स्युरित्येतदेकं । सर्वप्राजापत्या[5] एव स्युरित्येतदेकं । सर्वैकादशिना[6] एव स्युरित्येतदपरं । तेषां सर्वैकादशिनैर्यता[7] प्रसिद्धमेवोत्तमस्य दशरात्रस्य तृतीये ऽहन्सदस उक्थ्य एकादशिन्याप्यते । तस्य नवानान्यपशून्यतिरिच्यन्ते । तैर्वेताश्च ब्राह्मणवतः पशूनालभन्ते वैष्णवं वामनमित्येतांस्तेषामेव[8] यतो बार्हस्पत्यो वैषुवते सवनीयः संपद्यते । तस्य सौर्यमुपालभ्यं कुर्वन्ति । यद्यु वा एतावत्[9] ब्राह्मणवतः पशून् विन्दन्ति सवैतानि मध्यमानि सांवत्सरिकाण्यहान्यैन्द्राग्नपशूनि

---

१ Thus M, मीमांसा चाग्नेयैन्द्राग्नानां Bo; मीमांसा ऐन्द्रा॰ B Bo H UD

२ Thus M; एका॰ the other MSS

३ सर्वे आग्ने॰ MSS. exc M.

४ सर्वे ऐ॰ MSS, this passage is missing in M

५ सर्वप्रा॰ MSS exc. M.

६ Thus M; सर्वे ऐका॰ Bo, सर्वे एका॰ the other MSS.

७ Thus M, युर्ता or यता the other MSS

८ ॰मेव M Be, ॰मिव the other MSS

९ M, एतावत Be H BUD एतावेव Bc

षडहमुपयन्ति । [1]यद्यु त्रिंशमभ्युत्थायाथाप्येतदहर्भवत्यथा-वृत्तमेवाभिप्लवं षडहमुपयन्ति ॥ १४ ॥

ज्योतिरग्निष्टोम आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्यो ज्योतिरेवाग्निष्टोमस्तं तथैव चतुरुपयन्ति । बृहद्रथंतरं-बृहद्रथंतरमिति विपर्यासं[2] पृष्ठे[3] भवतः । पृष्ठ्यः षडहः पुरस्तात् मासमेवं संपन्नेन पञ्च मासानभ्यवयन्त्येतं[4] षष्ठं मासं संभार्यं संभरन्ति । द्वावभिप्लवौ पृष्ठ्यौ तानि द्वादशाहानि । गोआयुषी तानि चतुर्दश । अतऊर्ध्वं वैषुवतान्मासान्यष्टादश । दशरात्रो महाव्रतं अतिरात्रश्च । स मासस्तदेतन्मासिपृष्ठं गवामयनम् । ॥ १५ ॥ चतुर्थः ॥

अमुत्राग्रे बृहद्रथंतराभ्यामित्वोक्षते मासि सहस्रपृष्ठान्युपेयु-स्तद्द्वितीयं गवामयनं । दशमासा[5] स्तृतीयमभिप्लवायाचीयन्ति[5] च तदङ्गिरसामयनं । पृष्ठ्यायाचीयन्ति च तदादित्यानामयन-मग्निष्टोमायाचीयन्ति च तत्प्रजापतेरयनं । प्रायणीयोदय-नीयावभितो मध्ये ऽग्निष्टोमास्तद्द्वितीयं प्रजापतेरयनं । सर्वाग्निष्टोमा[6] एव स्युरिति तत्तृतीयं प्रजापतेरयनमथातो

---

१ यदि त्रिंशम° M, यद्यु त्रिंशमभ्य° the other MSS.

२ All MSS. exc M ins इति।

३ Thus M, पृष्ठे Be UD, पृष्ठो B; पृष्ठो Be II.

४ Thus M, मासाभ्यवंत्य° [illegible] Be II DU (pr m); मासानुपयंत्य° Be

५ Thus M, दशमासास्तृतीयमभि° Be, दशमासाभ्यभिप्ल° BU (pr. m); दशमासाभ्यभिप्ल° Be II U (sec. m).

६ सर्वेऽग्नि° Be.

ग्रहकृतेव मीमांसा । तद्धैतदेके[१] सारस्वतवैष्णवौ ग्रहौ गृह्णन्ति प्रायणीयादेवाऽतिरात्रादोदयनीयात्सरस्वती यज्ञो विष्णुस्ते वाचं चैव यज्ञं च मध्यतः परिगृह्णाना उदृचं गमिष्याम[२] इति वदन्तस्तदु वा आहुर्यद्वाचा[३] यज्ञस्तायते तेन सरस्वत्यामा[४] यदु[५] यज्ञस्तेन[५] विष्णौ[६] वै[६] को ब्राह्मणं भवति । सारस्वतवैष्णवौ ग्रहौ गृह्णीयादिति नैतदाद्रियेत[७] । नाद्रियेतेति[७] स्थितिः । ॥ १९ ॥

अथातोंऽश्वदाभ्ययोरेव ग्रहणं । प्रायणीयेऽदाभ्यं गृह्णीयादंशुं वैषुवतेऽदाभ्यं महाव्रत उभौ प्रायणीय उभौ वैषुवत उभौ महाव्रते । यत्र ह वा एनौ[८] गृह्णीयादित्येतदं-परमथातः परःसाम्नामेव ग्रहणं । ते वा एते परःसामानः पुरस्ताद्वैषुवतात्सप्तममहरभितः पराञ्चो गृह्यन्त उपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णाम्युपयामगृहीतोऽस्योषधीभ्यस्त्वा

---

१ Thus Bo, तद्धैनमेदेके MUD, तद्धैतदेके Bo II; तद्धैवैनदेके B; cp. supra p 261, 14

२ °ष्याम्व Bo and M, but, if I see right, the व has been struck out

३ °र्यद्वाचा M.

४ All MSS. exc. M °मा इति ।

५ Thus M; यज्ञस्तेन Bo, यद्यज्ञस्तेन the other MSS

६ वै om BUD Bo (pr m.)

७ Thus M (cp supra p 252, 10), नैतदाद्रियेत नाद्रियेतेति the other MSS.

८ Thus M, वैनौ the other MSS

कुर्वन्ति । तेषामेवं सतामैन्द्राग्नो वैषुवते सवनीयः संपद्यते । तस्य सौर्यमुपालम्भ्यं कुर्वन्ति । सावित्रो महाव्रते । तस्य प्राजापत्यस्तूपर ऐन्द्रश्चर्षभ उपालम्भ्यौ भवतः । ॥ १९ ॥

पञ्चमः ॥

श्वो महाव्रतमित्युपकल्पयते [1]ऽपरिमिताश्चयानपरिमितान्दुन्दुभींस्तावत[2] एवैवाजिसृतश्चर्मौ[1] वेडसंवर्तं[3] च भूमिदुन्दुभिमार्षभं चर्म शलाकूनं ब्राह्मणं च शूद्रं चार्द्रं[4] च चर्मकर्तं[1] प्रेङ्खं होता कूर्चावध्वर्युर्हंसौ हिंसका[5] औदुम्बरीमुद्गातासन्दीमुपकल्पयते[1] । वाणं च शततन्तुमाघाटीः पिञ्छोलाः[6] कर्करीका इति तदु पलयः । कटपरिवारं च मिथुनौ चापरिमिताश्च दाससास्तावत एवैवोदकुम्भानर्थैत[7] महाव्रतीयेऽह्नि पञ्चविंशमग्निष्टोममुपयन्ति रथंतरसामानम्[8] । समानं कर्मा माहेन्द्राद्ग्रहान्माहेन्द्रं पर्व[8] ग्रहीत्वाथैतान्संभारानायातयति । जघनेनाग्नीध्रं गर्तं[9] खानयित्वार्षभेण कृत्स्नेनोत्तरलोम्नाभि-

1...1 This passage found in M and Be sec. m only

२ तावत सदा॰ Be.

३ Corrected (cp. infra p. 267 5), वेदासंवर्तं M; वेडुसं॰ Be

४ om Be.

५ ॰र्हंसो॰ M Be

६ पिञ्छोला M here and infra.

७ Thus M, ॰स्तोद॰ the other MSS

८ om. all exc. M Be.

९ कर्तं M Be 11 (pr m) D

विघ्नन्ति[१] । तस्य लाङ्गूलमुच्छिद्य हन्तानूपतिष्ठते । ऽथैतान्दुन्दुभीननुदिशमासञ्जयति । नानाघ्ननैरनाघ्नन्[२] एते हन्तारो ऽनूपतिष्ठन्ते । ऽथैते रथाः समन्तं देवयजनं परीत्योत्तरतस्तिष्ठन्ति[३] । तेषां त्रिष्टुधन्वी राजपुत्रो मुख्यो भवति । ॥ २० ॥

तस्मा अग्रेणाग्नीध्रमभिसंवर्तं[४] चर्मकर्तं व्यवास्यति । तं काल एव गत्वाध्वर्यवैतौ ब्राह्मणश्च शूद्रश्चान्तरेण सदोहविर्धाने तिष्ठत आर्द्रे चर्मकर्तमादाय । प्रेङ्खꣳ होतारोहते । कूर्चावध्वर्युरुपमृणीते एकोशीर्षका । औदुम्बरीमुद्गातासन्दीमारोहत्यादत्ते वाणꣳ शततन्तुमाघाटीभिः पिच्छोलाभिः कर्करीकाभिरित्युद्गातारं पत्न्यः पर्युपविशन्त्यथ दक्षिणे वेद्यन्ते कटपरिवारे मिथुनौ संप्रवादयतो[५] । ऽथैता दास्य उदकुम्भानधिनिधाय मार्जालीयं पर्युपविशन्त्यथाध्वर्युः कूर्चयोरासीनो माहेन्द्रस्य स्तोत्रमुपाकरोति । स्तुवते माहेन्द्राय । प्रस्तुते मार्जि संप्रेषमाहाजिं धावत दुन्दुभीन्समाघ्नताभिषोतारो ऽभिषुणुताग्नीदाग्निरं विनयोलूखलमुद्वादय प्रतिप्रस्थातः

---

१ •भिविनिघ्नन्ति M, cp. supra XI. 10 (p 79 4) and infra XVII. 39, XVIII 18

२ Corrected, नानाचादमनैरावनत M, नानादनवैरनाघ्नन B Be 11 UD, नानाघ्ननैरग्नाघ्नन्ता Be

३ Thus M, परीत्यरद्रंतोत्तरतस्ति• all the other MSS

४ Thus M, •भिषंवर्तं all the other MSS

५ Thus M, संप्रवादैतौ BUD (pr. m.) Be 11 (pr. m.), संभवतौ Be 11 (sec m) D (sec. m), संप्रवादैयतौ Be

मौञ्जस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । धावन्त्याजिसृत आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाच । आघाटीभिः पिच्छोराभिः कर्करीकाभिरित्युद्गातारं पत्न्य उपगायन्ति । ॥ २१ ॥

भद्रमु नाम सामास्ति । तद् वाचोपगीयते[1] । ऽथैव[1] निरुधन्वौ राजपुत्रश्चर्मावभिमन्ति । तं ब्राह्मणोऽनुपतिष्ठते मापराह्सीर्मातिव्याह्सीरिति । तत्तथैव त्रिभिरन्तर्हितमवभिमन्यैतौ[2] ब्राह्मणश्च शूद्रश्चार्द्रे चर्मकर्ते व्यायच्छेते इमे ऽराल्सुरिमे सुभूतमक्रन्निति ब्राह्मण । इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति शूद्रो । ब्राह्मणः संजयति । मज्जन्ति दृषदः । संवर्तेते मिथुनावपैना दास्य उदकुम्भानधिनिधाय मार्जालीयं परिनृत्यन्त्युपश्वासुपहत्य दक्षिणान्पदो निघ्नतीरिदंमधुं[3] गायन्त्यस्तामाहुः सहस्यरीतानां प्रथमां वाचयति ॥ २२ ॥

गाव एव सुरभयो गावो गुग्गुलुगन्धयः । गावो घृतस्य मातरस्ता इह सन्तु भूयसीरिमहा३ इदं मधित्युपश्वासुपहत्य दक्षिणानेव पदो निघ्नन्ति । द्वितीयं परीतानां प्रथमामेव वाचयति मनु गावो मङ्कीरस्य गङ्गाया उदकं पपुः । पपुः सरस्वत्यै नदी ताः[4] प्राचीरुञ्जगाहिरे[4] हैमहा३ इदं मधित्यु-

---

१ Thus M, ∘यथार्द्वेधैव BUD Be 11, ∘यथार्द्वैस्थैव Be.

२ I. so. व्यवभिनन्ति B Be 11 UD भवति।

३ Thus M and cp Āp. XXI. 19 18, निघ्नतीद्∘ the other MSS

४ Thus M, ताः प्राचरुञ्जीर्जगाहिरे (or जगाहिरः) the other MSS. Kes. ताः प्राचीर्योञ्जगाहिरे, cp. Āp. XXI 20 3

पश्चादुपहृत्य दक्षिणानेव पदो निघ्नन्ति । तृतीयं परीतानां प्रथमामेव वाचयति यदा राखन्द्यौ[1] वदतो[1] याम्यं[2] मञ्जीरदाघ्नकौ[2]। प्रेमाध्वधस्तो यामे[3] मानवाङ्गस्तथ्यते वहन्देमहाङ्ग इदं मध्वित्यिथैना उत्तरेण मार्जालीयं तिष्ठन्तो वाचयतीदमेव मधु सारघमयङ्ग सोमः सुतो इहन् । तमिन्द्र परितापयोर्वैमहाङ्ग इदं मध्विति । ता अत ऊर्ध्वमिदं मध्विदं मध्विदं मध्वित्येव[4] परियन्ति । तेषां य एव प्रायणीयो ऽतिरात्रः स उदयनीयः । सत्रादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन[5] चतुष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेनैकैको यजेत । ॥ २४ ॥ षष्ठः ॥

स्वर्गकामो द्विरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते द्विरात्रस्य मे सुतो ऽमावास्याया उपवसथीये ऽहः पूर्वमहः संपत्स्यत उत्तरमभिजुत्तरमिति । तच्च तथा संपद्यते । ऽभिप्लवः पूर्वमहर्भवति गतिरुत्तरं । ज्योतिष्टोमो ऽग्निष्टोमः पूर्वमहर्भवति । तेजस्तेनावरुन्द्धे । सर्वस्तोमो ऽतिरात्र उत्तरम् । सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै । गायत्रं पूर्वे ऽहन्साम भवति । त्रैष्टुभ-

---

१ Uncertain, राखंबौर्वदतो M, राखन्दोषो वदतो Be II, राचौषघोतौ वदतो Be, यारायौर्वदतो U, D indistinct

२ Thus M, याम्यमकौ° Be Be II

३ यामे M, यामो the other MSS

४ °त्येवमेव M.

५ Thus M Be, ज्योतिष्टोमेन चाग्निष्टोमेन the other MSS

मुत्तरे । रथंतरं पूर्वे ऽहन्साम भवति । बृहदुत्तरे । वैखानसं पूर्वे ऽहन्साम भवति । षोडश्युत्तरे । हविष्मन्निधनं पूर्वमहर्भवति । हविष्कृन्निधनमुत्तरं । नानैवार्धमासयोर्भवतो नानावीर्ये भवत इति ब्राह्मणꣳ । संतिष्ठते द्विरात्रस्त्रिरात्रेण यक्ष्यमाणो भवति । स उपकल्पयते सहस्रं । तस्मिन्नुपन्तो वेहद्दामन इति भवन्त्यास्यैषा सहस्रतम्यन्यतएनी कण्डूकृतोपकृष्टा[1] भवति । दीक्षते । रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति । द्वादशोपसदः । ॥ २४ ॥

तायते प्रथमे ऽहन्नग्निष्टोमस्तस्य त्रिवृत्प्रातःसवनं पञ्चदशं माध्यंदिनꣳ सवनꣳ सप्तदशं तृतीयसवनꣳ । स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोति त्वꣳ सहस्रमानय। उक्षत उदस्याभिनस्त्वचम् । सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरित्युन्नत एतेषां त्रयाणां त्रिꣳशच्छतानां[2] प्रथमो नीयते । ऽहीनसंततिं करोति । तायते द्वितीये ऽहन्युक्थ्यस्तस्य पञ्चदशं प्रातःसवनꣳ सप्तदशं माध्यंदिनꣳ सवनमेकविꣳशं तृतीयसवनꣳ । स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीः सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । वेहद्देतेषां त्रयाणां त्रिꣳशच्छतानां[2] प्रथमा[3] नीयते । ऽहीनसंततिं करोति । तायते तृतीये ऽह-

१ Thus M and Karmāntasūtra, कण्डूकृतो॰ the other MSS.

२ Sic MSS !

३ प्रथमो M Be.

अतिरात्रस्तस्य सप्तदशं प्रातःसवनमेकविꣳशं माध्यंदिनꣳ सवनं त्रिणव आर्भवः पवमानस्त्रयस्त्रिꣳशमग्निष्टोमसामैकविꣳशान्युक्थ्यानि सषोडशिकानि । षोडशं प्रथमꣳ रात्रिसाम पञ्चदशानीतराणि त्रिवृद्राथंतरः[1] सन्धिः । स दाक्षिणानि हुत्वाग्नीध्रे सुवाहुतिं जुहोति त्वꣳ सहस्रस्य प्रतिष्ठासि[2] वैष्णवो वामनस्त्वम् । सा[3] मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । वामन एतेषां त्रयाणां चत्वारिꣳशच्छतानां[4] प्रथमो नीयते । नानावीनसंततिं करोति । ॥ २५ ॥

अथैताꣳ सहस्रतमीमुत्तरेणाग्नीध्रं[5] पर्याणीयाहवनीयस्यान्ते द्रोणकलशमवघ्रापयेदाजिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । प्रजयैवैनं पशुभी रय्या समर्धयति प्रजावान्पशुमान्रयिमान्भवति य एवं वेदेति ब्राह्मणमेव वै भवति तथा सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादिति । स तथा सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहोत्युभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा

---

१ Thus M, बृहद्राथंतरः Bc, बृहद्रथंतरः the other MSS

२ प्रतिष्ठा असि all, also M

३ स M

४ Thus M only (sic!); चत्वारिꣳशच्छतानि all the other MSS

५ ॰ग्नीध्रं MSS ; U sec. m. ॰ग्नीध्रे ।

सहस्रं वि तदैरयेथामिति । त्रेधाविभक्तं वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनां करोति । सहस्रस्यैवैनां मात्रां करोतीति ब्राह्मणमथास्यै रूपाणि जुहोत्यञ्ज्येतायै स्वाहा कृष्णायै स्वाहा श्वेतायै स्वाहेत्यथास्या उपोत्थाय नामभिर्दक्षिणे कर्णमाजपतीडे रन्ते अदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतादिति । देवेभ्य एवैनमावेदयत्यन्वेनं देवा बुध्यन्त इति ब्राह्मणम् । ॥ २६ ॥

अथैताꣳ सहस्रतमीमन्तरेण चात्वालोत्करावुदीचीं नीयमानामनुमन्त्रयते सा मा सुवर्गं लोकं गमय सा मा ज्योतिष्मन्तं लोकं गमय सा मा सर्वान्पुण्याँल्लोकान्गमय सा मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । प्रजयैवैनं पशुभी रय्यां प्रतिष्ठापयति । प्रजावान्पशुमान्रयिमान्भवति य एवं वेदेति ब्राह्मणमेव वै भवति तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाध्वर्यवे वा दद्यात्सहस्रमस्य सा दत्ता भवति सहस्रमस्य प्रतिगृहीतं भवतीति ब्राह्मणमेव वै भवति यस्तामविद्वान्प्रतिगृह्णाति तां प्रतिगृह्णीयादेकासि न सहस्रमेकां त्वा भूतां प्रतिगृह्णामि न सहस्रमेका मा भूताविश मा सहस्रमित्येकामेवैनां भूतां प्रतिगृह्णाति न सहस्रं य एवं वेदेति ब्राह्मणमेव वै भवति स्योनासि सुषदा सुशेवा स्योना माविश सुषदा माविश सुशेवा माविशेत्याह । स्योनैवैनꣳ सुषदा सुशेवा भूताविशति नैनꣳ हिनस्तीति ब्राह्मणमेव वै भवति ब्रह्मवादिनो वदन्ति सहस्रꣳ सहस्रतम्यन्वेती३

सहस्रतमीꣳ सहस्राꣳमिति । यत्प्राचीमुत्सृजेत्सहस्रꣳ सहस्रतम्यन्वियात्तत्सहस्रमप्रज्ञात्रꣳ सुवर्गं लोकं न प्रजानीयात्प्रतीचीमुत्सृजति । ताꣳ सहस्रमनु पर्यावर्तते । सा प्रजानती सुवर्गं लोकमेति । यजमानमभ्युत्सृजतीति । तां पुरस्तात्प्रतीचीं यजमानमभ्युत्सृजति । त्रिषि सहस्रं प्रजायत उत्तमा नीयते प्रथमा देवान्गच्छतीति ब्राह्मणं । तेन हैतेन रौहिणेयः कौथुमिः[१] कौशाम्बो[२] याज्ञ ऋतुमुखेषु विहृतेनेजे[३] । ऽयो[३] हाजमाम[३] मशको गार्ग्य आरुणेरन्तेवासी । स[४] ह[४] सꣳस्थामद्दृष्ट्वोवाच[४] ननु मत[५] एकाहाꣳ इति । नेति हैनं प्रत्युवाच । तꣳ होपेयाय । तस्मा उ हैनꣳ स उवाच । तेन ह स्म[६] समस्तेनैव[६] यजते । तमेतं गर्गत्रिरात्र इत्याचक्षते । ॥ २७ ॥ सप्तमः ॥

चतुरो वीरानवरुन्धमानश्चतूरात्राय दीक्षते । [७]तस्यापरिमिता दीक्षा द्वादशोपसदःसंस्थाहान्यग्निष्टोमा एवैते चतु-

---

१ Thus M, कायुमि B Bo 11 D; कायमि Be.

२ कौशाम्बो B

३ Thus M, विहृतेनेजेऽयाजमाम B Bo 11 DU, विहृतेनैयजेनायो याज-माम Be.

४ Thus M, संस्थछूष्यो (ष्या) हवोवाच B Bo 11 UD, सर्वं हवोवाच Be.

५ Doubtless corrupt, thus reads M, मट Bo 11 D; मट BU; मप Be.

६ Thus M, क (स्म) समस्ते (स्ते) मेव the other MSS.

७ From here unto दीक्षते, p 274 5, left out in M

विंशाः पवमाना[1] उद्यत्स्तोमाः । स्युरित्येतदेकमेको ऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु[2] सामविकल्पं[3] पृच्छेयुरित्येत-दपरं यदि श्रद्धादेवं यजमानं चत्वारि वीर्याणि नोपनमन्ते तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यमित्येतान्कामानवरुरुत्समानश्चतूरात्राय[4] दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । संस्थास्त्वग्निष्टोमा एवैते चतुष्टोमाः स्युरित्येतदेकमेको ऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु[2] सामविकल्पं पृच्छेयुरित्येतदपरं । पुष्टिकामश्चतूरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशो-पसदो । ऽय वै भवति पुरोडाशिन्य उपसदो भवन्तीति । प्रथमे चतूरात्र आग्नेय आज्य आग्नेयमष्टाकपालꣳ सायंप्रात-रन्ववधाय जुहोति । द्वितीये चतूरात्रे सौम्य आज्ये सौम्यं चतुष्कपालꣳ सायंप्रातरन्ववधाय जुहोति । तृतीये चतूरात्रे वैष्णव आज्ये वैष्णवं त्रिकपालꣳ सायंप्रातरन्ववधाय जुहोति । तस्य त्रिवृत्सप्तदशौ विपर्यासꣳ स्तोमौ भवतः । प्राणो वै त्रिवृ-दन्नꣳ सप्तदशः प्रजापतिः । प्राणांश्च खलु वा इदमन्नाद्यञ्च

---

१ Thus (without visarga) Be, पवमानास्स्तोमा B Be 11 UD.

२ I am in doubt whether छन्दोगानु सा॰ पृ॰ or छन्दोगाननु सा॰ पृ॰ should be put into the text, Be has each time the last mentioned reading, M presents once the first, once the last mentioned, the other MSS छंदोगानन् or ॰नु or छंदोगान ।

३ सोमवि॰ B Be 11 DU, सामवि॰ Be.

४ Thus Be, ॰नवरुत्स (त्सु) कामश्च॰ B Be 11 UD

परिगृह्य प्रजापतिः प्राजायत । प्राणाश्चैवैतद्वाचाश्च परिगृह्य यजमानः प्रजायते । तस्माद्वाऽन्यग्निष्टोमा एवैते चतुस्त्रिंशपवमानाः स्युरित्येतदेकमेको ऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु[1] सामविकल्पं पृच्छेयुरित्येतदपरम् । ॥ २८ ॥

प्रजातिकामो[2] वा व्यावृत्कामो वा पशुकामो वा[3] वाचो[3] वान्तं[3] परिजिगांसन्संवत्सराचाय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्तांस्थाहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चविंशो ऽग्निष्टोमो महाव्रतवाग्विश्वजित्सर्वपृष्ठो ऽतिरात्रः । सारस्वतेनायनेनैष्यतो[4] द्यौर्गा उपकल्पयन्त ऋषभैकादशा[5] वन्या[6] ऋषभैकशता[7] वन्यास्तेषामाग्नत्यौ हविर्धानं चाग्नीध्रं च भवतस्तद्धि सुवर्ग्यं । चक्रीवती भवत । उलूखलबुध्न एषां यूपो भवति । ते सरस्वत्यै जघन्योदके[8] दीक्षन्ते । तेषामयमेव त्रिवृदग्निष्टोमः संतिष्ठते । तस्मिन्संस्थिते ऽभि यूपं वहन्त्यभि धिष्णियान्हरन्त्यग्निष्ठे ऽनसि

---

१ Cp page 274, note 2.

२ प्रजापतिकामो all MSS exc. M

३ Thus M Be, वाचावसानं Be 11 वाचावासन BUD

४ •नैष्यतो (•ते) MSS exc M.

५ Thus M, ऋषभैकादश Be, ऋषभैका Be 11 BUD.

६ om M

७ Thus all, exc M, which has ऋषभैकादशता ।

८ Thus B Be 11 UD, जघनेनोदके Be M

समवग्रमयन्ते[1] यदेषाꣳ समवग्रमयितव्यं[1] भवति । ते[2] ऽनेनैव[2] पृष्ठ्येन[2] षडहेन प्रतिपद्यन्ते । ऽहरहः शम्यान्यासेऽशम्यान्यासे यजमाना आक्रोशन्तो ऽज्यानिमिच्छमाना यदा दश शतं कुर्वन्त्यथैकसुत्यानं । यदा शतꣳ सहस्रं कुर्वन्त्यथैकसुत्यानं । यदैषां प्रमीयेत यदा वा जीयेरन्नथैकसुत्यानं स्नावे वा प्रस्रवणे । ॥ २९ ॥

अथातो तुरायणमित्याचक्षते । श्रमणः खारीविवधी[3] सरस्वत्यै जघन्योदके[4] ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथैताꣳ सवनेष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालमिति । तथा समस्तया वा[5] विहृतया वा प्रतिपद्यते । ऽहरहः शम्यान्यासेऽशम्यान्यासे यजमान[6] आक्रोशन्नज्यानिमिच्छमानो[7] यदैनं[8] प्रतिराध्नुवन्ति यदा वास्यैतं खारीविवधमाच्छिन्दन्त्यथैकसुत्यानं[9] स्नावे वा प्रस्रवणे । ॥ ३० ॥ अष्टमः ॥

---

१ Thus Be, समवग्रम॰ M, the other MSS. are wholly corrupt.

२ Thus M; सनेनषडहेन B Be 11 UD, वैनैवषड्हेन Be.

३ Thus M; ॰विवधः Be, खारीविधा the other MSS.

४ Corrected; जघनोदके M Be 11, जघनेनोदके the other MSS

५ All exc. M om.

६ यजमाना M.

७ Corrected, ॰क्रोशमसज्या॰ B Be 11 UD, ॰क्रोशंज्या॰ Be, ॰क्रोशं-मोज्या॰ M.

८ Thus MU Be 11; यदेनं BD, यदेनं Be

९ Thus M Be, खारीविवेधमा॰ Be 11, खारीविवेधुत्त BUD.

पशुकामः सप्तरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्त्रीण्यहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविंश उक्थ्यस्त्रिणव उक्थ्यः पञ्चविंशो ऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठो ऽतिरात्रो । इदन्त्वपरे पूर्वमहःसूपेत्य प्रत्यञ्चं विश्वजिति पृष्ठान्युपयन्ति । ब्रह्मवर्चसकामो ऽष्टरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्त्रीण्यहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविंश उक्थ्यस्त्रिणव उक्थ्यस्त्रयस्त्रिंश उक्थ्यः पञ्चविंशो ऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठो ऽतिरात्रः । प्रजासु वा हुचुकाश्च ज्योगामयावी वा नवरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्त्रीण्यहानि ज्योतिर्गौरायुरित्येतमेव त्र्यहं त्रिरुपयन्ति । तेषामायुरतिरात्र उत्तममहर्भवति । प्रजातिकामो वा भ्रातृव्यकामो वाभिचरन्वाभिचर्यमाणो[1] वा दशरात्राय दीक्षिष्यमाणो दशहोतारं हुत्वा दशरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्त्रीण्यहानि त्रिवृदग्निष्टोमो ऽग्निष्टुदाग्नेयीषु भवति । पञ्चदश उक्थ्य ऐन्द्रीषु । त्रिवृदग्निष्टोमो वैश्वदेवीषु । सप्तदशो ऽग्निष्टोमः प्राजापत्यासु तीव्रसोम । एकविंश उक्थ्यः सौरीषु । सप्तदशो ऽग्निष्टोमः प्राजापत्यासूपहव्यस्त्रिणवावग्निष्टोमावभित ऐन्द्रीषु । त्रयस्त्रिंश उक्थ्यो वैश्वदेवीषु । विश्वजित्सर्वपृष्ठो ऽतिरात्रः । ॥ ३१ ॥

---

१ वाभिचरन् left out in all exc M

प्रजाकामा एकादशरात्राय दीक्षन्ते । तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि ज्योतिरतिरात्रः । पृष्ठ्यः षडहस्त्र्यहश्छन्दोमा । अथातिरात्रो । ऽथाहीनविधिः पृष्ठ्यः षडहस्त्र्यहश्छन्दोमा । दशममहरथातिरात्रो । ऽथायं पौण्डरीक एकादशरात्रो ऽयुतदक्षिणो ऽश्वसहस्रदक्षिणस्तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहान्यभ्यासङ्ग्यः षडहस्त्र्यहश्छन्दोमा । दशममहरथातिरात्रो । ऽयुतं सहस्रं सहस्रं ददात्युत्तमे ऽहन्यश्वसहस्रं ददात्यथातो ज्योतिरयनमित्याचक्षते । स भरतद्वादशाह इत्येक आचक्षते[1] । तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि ज्योतिरतिरात्रो[2] । ज्योतिरग्निष्टोमो । ऽष्टौ ज्योतींष्युक्थ्याः[3] । ज्योतिरेवाग्निष्टोमो । ज्योतिरेवातिरात्र एष द्वादशाहो । दशमं चाहरतिरात्रं च महाव्रतं व्यन्दधाति । स एवैष[4] त्रयोदशरात्रः । ॥ १२ ॥ नवमः ॥

अथ पूर्वश्चतुर्दशरात्रो । ऽतिरात्रः । पृष्ठ्यः षडहः । प्रत्यङ् षडहो । ऽथातिरात्रो । ऽथोत्तरश्चतुर्दशरात्रो । ऽतिरात्रो । ज्योतिर्गौरायुरिति त्र्यहः । पृष्ठ्यः षडहः । प्रत्यङ् त्र्यहो । ऽथातिरात्रो । ऽथ पूर्वः पञ्चदशरात्रो । ऽतिरात्रो । ज्योतिर्गौरायुरिति त्र्यहो । दशरात्रो । ऽथातिरात्रो । दशमं चाहरतिरात्रं च

---

१ ऽत्याच॰ M
२ Thus MUD, ज्योतिरात्रो II Be, Be 11 def
३ Thus M (sec. m.) BUD, ॰ष्यानि M (pr. m.) Be ; Be 11 def.
४ Thus Be B 11 DU, स चैष B, स एव M

महाव्रतं[1] व्यवदधाति । स एवैवाम्नायः[2] षोडशरात्रो ऽथोत्तरः पञ्चदशरात्रो ऽतिरात्रस्त्रिवृदग्निष्टोमो[3] ज्योतिर्गौरायुरिति[1] त्र्यहः । पृष्ठ्यः षडहः । प्रत्यङ् त्र्यहो । ऽथातिरात्रो । ऽथ सप्तदशरात्रो । ऽतिरात्र । एकः पञ्चाहो । दशरात्रो । ऽथातिरात्रो । दशमं चाहरतिरात्रं च महाव्रतं[1] व्यवदधाति । स एवैवाम्नायो[2] ऽष्टादशरात्रो । ऽथ विंशतिरात्रो । ऽतिरात्रो । ज्योतिर्गौरायुरिति त्रयस्त्र्यहाः । पृष्ठ्यः षडहः । प्रत्यङ् त्र्यहो । ऽथातिरात्रो । ऽथैकविंशतिरात्रो । ऽतिरात्रः । पृष्ठ्यः षडहः । समानानि मध्यमानि सांवत्सरिकाण्यहानि भवन्ति । प्रत्यङ् षडहो । ऽथातिरात्रः । ॥ ३३ ॥ दशमः ॥

अथ पूर्वश्चतुर्विंशतिरात्रो । ऽतिरात्रो ज्योतिर्गौरायुरिति चत्वारस्त्र्यहा दशरात्रो ऽथातिरात्रो । दशमं चाहरतिरात्रं च महाव्रतं[1] व्यवदधाति । स एवैवाम्नायः[2] पञ्चविंशतिरात्रो[4] । ऽथोत्तरश्चतुर्विंशतिरात्रो । ज्योतिरतिरात्रः । पृष्ठ्यः षडहस्त्रयस्त्रिंशात्त्रयस्त्रिंशमुपयन्त्यथाभिरूढं पृष्ठ्यं षडहमुपयन्ति । त्रिवृत आयतने त्रयस्त्रिंशमुक्थ्यमुपयन्ति[5] रथंतरसामानं । तस्य चतुर्विंशाः पवमाना भवन्ति । पञ्चदशस्यायतने त्रिणव-

---

1 All MSS. exc M ins च ।

2 Some of the MSS एवैनमाम्नायः ।

3 त्रिवृदग्निष्टुभो॰ M

4 Thus M Be; चतुर्विंशति॰ B Be 11 DU

5 अग्निष्टोमम् 160 उक्थ्यम् M

मुक्थ्यमुपयन्ति बृहत्सामानं' तस्याष्टाविंशाः पवमाना भवन्ति' सप्तदशस्यायतन एकविंशमुक्थ्यमुपयन्ति वैरूपसामानं' तस्य द्वात्रिंशाः[१] पवमाना भवन्ति' स एवायतन[२] एकविंशमुक्थ्यमुपयन्ति वैराजसामानं' तस्य षट्त्रिंशाः पवमाना भवन्ति' स एवायतने[२] त्रिणवमुक्थ्यमुपयन्ति शाक्वरसामानं' तस्य चत्वारिंशाः पवमाना भवन्ति' स एवायतने त्रयस्त्रिंशमुक्थ्यमुपयन्ति रैवतसामानं' तस्य चतुश्चत्वारिंशाः पवमाना भवन्ति' त्रयस्त्रिंशात्त्रयस्त्रिंशमुपयन्ति' तस्याष्टाचत्वारिंशाः पवमाना भवन्त्यथाहत्ते पृष्ठ्यं षडहमुपयन्ति' ॥ ३४ ॥

त्रिवृतोऽधि त्रिवृतमुपयन्ति' स्तोमानां संपत्त्यै प्रभवाय' ज्योतिरग्निष्टोममुपयन्त्यथातिरात्रो' ऽथ त्रिंशद्रात्रो' ज्योतिरतिरात्रः' पृष्ठ्यः षडहस्त्रयस्त्रिंशात्त्रयस्त्रिंशमुपयन्ति' त्रिणवमुपयन्त्येकविंशमुपयन्ति' त्रिवृतमग्निष्टुतमुपयन्ति' पञ्चदशमिन्द्रस्तोममुपयन्ति' सप्तदशमुपयन्त्येकविंशमुपयन्ति' चतुर्विंशमुपयन्ति' चतुर्विंशात्पृष्ठान्युपयन्ति' त्रयस्त्रिंशात्त्रयस्त्रिंशमुपयन्ति' त्रिणवमुपयन्ति' द्वावेकविंशावुपयन्ति' चतुरश्चतुष्टोमान्स्तोमानुपयन्त्यथातिरात्रो' ऽथ द्वात्रिंशद्रात्रो' ऽतिरात्रो' ज्योतिर्गौरायुरिति नव त्र्यहाः' प्रत्यङ् त्र्यहो' ऽथातिरात्रो' ऽथ त्रयस्त्रिंशद्रात्रो' ऽतिरात्रस्त्रयः

---

१ Thus M Bo 11, द्वाविंशाः the other MSS.
२ एव om M

पञ्चाहा । विश्वजित्सर्वपृष्ठो ऽतिरात्र । एकः पञ्चाहो । दशरात्रो ऽप्यतिरात्रो । दशमं चाहरतिरात्रं च महाव्रतं[1] व्यवदधाति । स एवैवाम्नातश्चतुस्त्रिंशद्रात्रः[2] । ॥ ३५ ॥ एकादशः ॥

अथ षट्त्रिंशद्रात्रो । ज्योतिरतिरात्रस्संभारो ऽभिप्लवाः षडहा । दशरात्रो । ऽप्यतिरात्रो । दशमं चाहरतिरात्रं च महाव्रतं व्यवदधाति । स एवैषामाम्नातः[2] सप्तत्रिंशद्रात्रो । ऽथैकस्मान्नपञ्चाशद्रात्रो । ऽतिरात्रस्तस्य त्रिवृतो ऽग्निष्टोमा । अथातिरात्रो । दश पञ्चदशा उक्थ्या । अथातिरात्रस्तेषां षोडशिमद्दशममहर्भवति । द्वादश सप्तदशा उक्थ्या । अथातिरात्रः । पृष्ठ्यः षडहो । ऽप्यतिरात्रो । द्वादशैकविंशा उक्थ्या । अथातिरात्रो । ऽथ संवत्सरकॢप्त एकस्मान्नपञ्चाशद्रात्रो । ऽतिरात्र । आरम्भणीयमहस्तयो ऽभिप्लवाः षडहास्तान्यष्टादशाहानि । प्रायणीयारम्भणीयौ । तानि विंशतिरभिजित्तयः परःसामानो । ऽथ वैषुवतं । त्रयो ऽर्वाक्सामानो । ऽथ विश्वजिदावृत्तो ऽभिप्लवः षडहो । गोआयुषी । दशरात्रो । महाव्रतं चातिरात्रश्चाथैकषष्टिरात्र[3] । एतस्यैव सतो ऽभितो महाव्रतं पृष्ठ्यौ षडहावुपोहति । तयोरावृत्त उत्तरो । ऽथ

---

१ All MSS exc. M ins च ।

२ एवेम्ना॰ Be.

३ The passage अथैकषष्टिरात्र up to चातिरात्रश्च (p 282 2) is left out in all the MSS exc M Be, and the tradition preserved by Be is rather corrupt, cp Pañc br XXIV 19 1

शतरात्रो[1] ऽतिरात्रो ज्योतिर्गौरायुरिति त्र्यहश्चतुर्दशाभिप्लवाः षडहा दशरात्रो महाव्रतं चातिरात्रश्चाथ सहस्ररात्रो[1] ऽतिरात्रो नवनवतिस्त्रिवृतो ऽग्निष्टोमाः शतं पञ्चदशा उक्थ्याः शतꣳ सप्तदशा उक्थ्याः शतमेकविंꣳशा उक्थ्याः शतं त्रिणवा उक्थ्याः शतं त्रयस्त्रिंꣳशा उक्थ्याः शतं चतुर्विंꣳशा उक्थ्याः शतं चतुश्चत्वारिंꣳशा उक्थ्याः शतमष्टाचत्वारिंꣳशा उक्थ्या नवनवतिरेव[1] त्रिवृतो ऽग्निष्टोमा अथातिरात्रः[1] ॥ ३६ ॥ द्वादशः ॥

॥ इति षोडशः प्रश्नः ॥

---

१ Thus Be, ॰नवतिमेव the other MSS.

अतिरात्रं करिष्यन्नुपकल्पयते चतुरो ऽतिरात्रपशूनरुणपिशङ्गमश्वमौदुम्बरꣳ षोडशिपात्रं चतुःस्रक्ति ज्यायसो ऽश्मण-ज्ज्यायस एकधनानंदीचते । रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति । द्वादशोपसदः । प्रसिद्धेन कर्मणोपवसथादेत्यथ[1] वसतीवरीः परिहृत्य पयाꣳसि विगृह्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यद्भिरुदैत्यतिरात्रं[2] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माग्रयणाद्ग्रहादाग्रयणं[3] गृहीत्वा षोडशिनं गृह्णात्या तिष्ठ वृत्रहन्रथमित्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं[4] गृहीत्वा चतस्रो रशना आदाय यूपमभ्यैति । स्वर्वन्तं यूपमुत्सृज्य चतुरो ऽतिरात्रपशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रꣳ[5] सारस्वतीं

---

१ Thus U, cp. supra XVI 3 (p 247. 6), °णोपवसथादेत्याथ M; °णोपवसथादेत्यथ D; °णोपवसथादेत्याथ Tr, °णोपवसथादेत्व Be, °णोपवसथादेय B Be 12; °णोपवसथ्यादेय H

२ उदैति M, उदेति the other MSS

३ ग्रहं ins. B 12 D.

४ om B Be.

५ ऐन्द्रꣳ ins M

मेधीमिति[1] । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माग्रयणाद्ग्रहादाग्रयणं[2] गृहीत्वा[2] षोडशिनमभिगृह्णातीन्द्रमिद्धरी वहत इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णात्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृहीत्वाथ षोडशिनमभिगृह्णात्यसावि सोम इन्द्र त इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । ॥ १ ॥

समानं कर्मा पवमानात्स्वमाभेन चरित्वा स्वे धामन्यङ्गभिश्चरति[3] । तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वपाहोमाः समानो वनस्पतिः समानः स्विष्टकृदैळवान्त्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्मा ध्रुववच्चमसेभ्यो । ध्रुववद्भि-

---

१ Instead of इति B Be and U (sec. m.) have the clause: यदि वा वारभन्तौ मैत्रीमेवोपाकुर्यात् ; Tr. has the same words after इति ; they are clearly an interpolation, cp the Dvaidha.

२ D om. यं and reads गृहीत्वाय ।

३ Thus Tr Be 12 HD, चरन्ति the other MSS.

श्चमसैश्चरित्वा त्रिभिरुक्थ्यपर्यायैश्चरतीन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामित्यथ षोडशिना चरिष्यन्प्राडायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । होतृचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांश्चमुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति । तदेतꣳ षोडशिनꣳ सह सꣳसादयन्त्यथैनमुपतिष्ठते ॥ २ ॥

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे ॥ प्र ते महे विदथे शꣳसिषꣳ हरी । य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् ॥ इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु । हरिवर्पसं गिर इत्यथाप उपस्पृश्य बर्हिषी आदाय वाग्यतः प्रत्यङ् द्रुत्वा समयाविषिते सूर्ये हिरण्येन षोडशिनः स्तोत्रमुपाकरोति । पुरस्तात्प्रत्यञ्चमरुणपिशङ्गमश्वं धारयन्ति श्यामं वा । हिरण्यꣳ संप्रदाय स्तुवते ॥ ३ ॥

होष एवोत्तमेति प्राकृतात्कालात्पराङावर्तते ऽध्वर्युरभ्यैनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणात्यथ यच्च होतुरभिजानात्या त्वा वहन्तु हरय इति तदुभयतोमोदं[1] प्रतिगृणात्योषा मोद इव मदे मदा मोद

---

१ ०मोदं M Tr Bo B, ०मदं Bo 12 DU, मद H

दवोमपेत्यथ[1] यत्र होतुरभिजानाति मम वषिष्टुभमिति तत्प्रसिद्धमुक्थ्ये[2] प्रतिगीर्य माहेन्द्रोपच्छन्न एतद्द षोडशिनं ग्रहमनूपच्छन्नो यजमानायाश्रावयत्याश्रावयाद् औषडुक्थशा यज सोमानामिति । वषट्कृते[3] षोडशिनं जुहोतीन्द्राधिपते ऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति । वषट्कृतानुवषट्कृते हिंकुर्वोति । तथैव द्विर्द्विः सर्वांश्चमसानाम्नुत्कर्षेय भक्षैः प्रत्यक्ष आहूवन्त्येनुवचनमथ इन्द्रेण षोडशिना पीतस्येति । तस्य[4] व्युदितो[5] भक्षो । यजमानवशो हि[6] यजमानस्य होत्रका होतुश्चाष्वेदध्वर्यवे प्रब्रूयातां वषट्कर्तुर्भक्ष इत्येव ब्रूयात्संयात्मानं भक्षायात्मानयेति[6] । तस्य भक्षः ॥ ४ ॥

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरनु भक्षं भक्षयामि वाग् जुषाणा सोमस्य तृप्यतु तस्य त इन्द्रेण षोडशिना पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । निर्णिज्य पात्रं प्रयच्छत्यथैतमहरपिप्रद्रमयं ददाति

---

१ The pratigara thus only in the Vivaraṇa; all the MSS. (exc. only M, which has the first time also मोद इव) and Keś read मोदैव i.e. मोद इव ।

२ तत् only found in MDUBe 12

३ Thus M Tr Be 12 Be UD Keś.; वषट्कृतानुवषट्कृते HB.

४ Thus MDH(= विविधग्रह) ; भक्षानुदितो the other MSS.

५ Thus Be 12 HDU Keś , च Be B; om. M Tr.

६ Thus M (writing भक्षाभि॰) ; भक्षयंतरेति Be 12; भक्षांतरेणेति H Tr, भक्षांतरेणेति U, भक्षांतरे Be, भक्षात्मनरे B, D om this passage.

प्राशं वा । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाध्वर्यवः स्वयात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षान्[1] मार्जयन्ते । अथ संप्रैषमाह प्रतिप्रस्थातरापयमद्धतीयं शृतवतीयानि जाघनीः पृषदाज्यं गोपायाग्नीद्राश्विनं ते द्विकपालꣳ श्रृतमप्यपरराजे[2]ऽस्त्विति । यथासंप्रैषं तौ कुरुतो । अथ विनिःसृप्य राजये प्रसर्पन्ति । संप्रसृप्तान्विदित्वाध्वर्युः प्राङायच्छति ॥ ५ ॥

होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्संस्रुत्योत्तरवेद्याꣳ सꣳसाद्यन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाग्यतः प्रत्यङ्ङुत्वा स्तोत्रमुपाकरोति । स्तुवते । होत एषोत्तमेति प्राङ्वेदेः कात्वालात्पराङावर्तते ऽध्वर्युरध्वेनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतꣳ होतृचमसमनूद्यच्छन्ते चमसाध्वर्यव आश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते जुहोति । तथैव हविर्भिः सर्वाꣳश्चमसाञ्जुहोत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुमन्त्रभक्ष इन्द्रेण पीतस्येति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाध्वर्यव स

---

१ M here and infra ॰भक्षा।

२ Thus HB Tr Bo and cp Karmānta, श्टतमप्यपर॰ U, श्टतमपर॰ M Bo 12 D, Keś

इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसांस्सर्वभक्षा मार्जयन्ते । अथ प्राक्रायमाह ॥ ६ ॥

मैत्रावरुणस्य चमसमनूद्यध्वमुन्नेतः सोमं प्रभावयेति । मैत्रावरुणचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्संस्नुभ्योत्तरवेद्याः अङ्गसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाग्यतः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । मैत्रावरुण एषोत्तमेति प्राङ्मैत्रावरुणस्य कालात्पराङावर्तते ऽध्वर्युरभिप्राक्रयते मैत्रावरुणः । प्रत्याक्रयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छन्त एतं मैत्रावरुणचमसमनूद्यच्छन्ते चमसानेवाध्वानयन्तो आश्रावयाह औपहुव्यग्ना यज सोमानामिति । वषट्कृतानुवषट्कृते जुहोति । तथैव जिह्मिः सर्वांश्चमसाञ्जुहुत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति । मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्धिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसांस्सर्वभक्षा मार्जयन्ते । अथाह प्रतिप्रस्थातश्चमसगणौ ते प्रचरेति । तच्छ्रुत्वा प्रतिप्रस्थाता प्राक्रायमाह ॥ ७ ॥

ब्राह्मणाच्छंसिनश्चमसमनूद्यध्वमुन्नेतः सोमं प्रभावयेति । ब्राह्मणाच्छंसिचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांस्संस्नुभ्योत्तरवेद्याः अङ्गसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाग्यतः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । ब्राह्मणाच्छंसिन एषोत्तमेति प्राङ्ब्राह्मणाच्छंसिनः काला-

# BIBLIOTHECA INDICA

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

New Series No 1282

# बौधायन श्रौतसूत्रम् ।

# BAUDHAYANA SRAUTA SŪTRAM




EDITED BY

Dr W CALAND OF UTRECHT

VOL II FASCICULUS IV

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS

AND PUBLISHED BY THE

ASIATIC SOCIETY, ...

1911

त्पराङावर्तते प्रतिप्रस्थातारमेनमाह्वयते ब्राह्मणाच्छꣳसी । प्रत्याह्वयते प्रतिप्रस्थाता । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ब्राह्मणाच्छꣳसिचमसमनूद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति । ब्राह्मणाच्छꣳसिचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथ प्राङायन्नाह ॥ ८ ॥

अच्छावाकस्य चमसमनूद्यच्छन्त्युन्नेतः सोमं प्रभावयेत्यच्छावाकचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् हुत्वा स्तोत्रमुपाकरोति । स्तुवते । ऽच्छावाकायेयोत्तमेति प्राङुरच्छावाकस्य कालात्पराङावर्तते प्रतिप्रस्थातारमेनमाह्वयतेऽच्छावाकः । प्रत्याह्वयते प्रतिप्रस्थाता । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतमच्छावाकचमसमनूद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येत्यच्छावाकचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म

इत्याख्यानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसांस्तैर्भक्षा मार्जयन्ते । होत्रे प्रथमं स्तुवते ऽथ मैत्रावरुणायाथ ब्राह्मणाच्छंसिने ऽथाच्छावाकायाध्वर्युः पूर्वाभ्यां चमसगणाभ्यां प्रचरति प्रतिप्रस्थातोत्तराभ्यां । सर्वे ऐन्द्रा[1] महावमचमसगणा[1] भवन्तीति[1] स्मा[2] अथो[2] प्रथमश्चतुःपर्यायः[3] संतिष्ठत । एवमेव द्वितीयः संतिष्ठत । एवं तृतीयो । मध्यमेन पर्यायेण त्रिस्तवन्त एव चरन्त्यथ विनिःसृप्य रथंतराय संधये समर्पयन्ति । ॥ ९ ॥

संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वेष्वेव राजानमुन्नय मातिरीरिच इति । होतृचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांस्तेष्वेव राजानं संस्थीयोत्तरवेद्यां सादयन्ति । [4]तदेतमाश्विनमुपस्तीर्णाभिघारितं च सादयन्त्यथाप्[5] उपस्पृश्य महिषी आदाय वाचंयमः प्रसृप् हुत्वा सोमसुपाकरोति । स्तुवते । होत्र एषोत्तमेति प्राक्सौत्रः आवातपराडावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिष्ठपाद्यां

---

१ Thus Be 12, M (the last however चचरा°); HTr DU om. चरा; Be B चमसगणाभ्यां प्रचरति 1, 8, 0 सर्वे ... भवन्तीति स्मा ।

२ भवंतीतीत्था अथ M; भवंतीतोत्थाय U, the other MSS. om. इति स्मा or स्मा alone.

३ चतुष्पर्याय M.

४ Thus Tr, तदेतदाश्वि° all the other MSS, after आश्विनं some of the MSS. have पुरोडाशं here and *infra* (p 291, 4 and 6).

५ Thus MTr Be DHU, अप् om Be 12 B.

मघाहनाच्छस्यते१ । परःसहस्रमाश्विनं भवतीति ब्राह्मणं । प्रसिद्धमुक्थं प्रतिगीर्य प्राङायन्नाहाश्विभ्यां तिरोअह्नियानाꣳ सोमानामनुब्रूहीति । प्राङ्ङेत्योद्यच्छन्न एतꣳ होतृचमसमनूद्यच्छन्त आश्विनमुपोद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडश्विभ्यां तिरोअह्नियान्सोमान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति । २तदेतमाश्विनमुपस्तीर्णाभिघारितꣳ सह जुह्वति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो ऽश्विभ्यां पीतस्येति । तस्य भक्षः सर्वगणस्य ते सर्वगणाश्विभ्यां पीतस्य तिरोअह्नियस्य सोमस्य सुपुतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते पयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिंन्व स इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहरत्येतानाग्नीध्रादौपयजानङ्गाराꣳस्तानपेण होतारं निवपत्युपसीदत्युपयष्टा गुदतृतीयैश्चैतानि गुदतृतीयान्येकादशधा कृत्वोपयष्टोपयजति । समानमत ऊर्ध्वꣳ । संतिष्ठते ऽतिरात्रः । ॥ १० ॥ प्रथमः ॥

१ Thus HD, मघोनाः० Tr, मघावना० M, मघवाचा० Bo 12 B; मघामाद्या० U, मघामाद्यात् Bo, my copy of the vivaraṇa (Burnell MSS) reads वाचस्पत्यात्, the words are explained thus वार्वि-धस्य चातयो भवति तावत्।

२ तदेतदा० all the MSS exc Tr

व्यतिषजेदितरानिति व्यतिषजति ' स एवमेव[1] दक्षिणमुत्तरमित्यष्टौ यूपान्व्यतिषजति ' ॥ १२ ॥

अथ वै भवति यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्धं वर्षिष्ठमथ ह्रसीयांसमित्युत्तरार्धमेव वर्षिष्ठं मिनोति दक्षिणार्धं ह्रसीयांसमेषा वै गर्तमिद्यस्यैवं मिनोति ताजक्प्रमीयत इति ब्राह्मणं ' दक्षिणार्धं वर्षिष्ठं मिनुयात्सुवर्गकामस्याथ ह्रसीयांसमिति दक्षिणार्धमेव वर्षिष्ठं मिनोत्युत्तरार्धं ह्रसीयांसमाक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्या इति ब्राह्मणमथ वै भवति यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते ' यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दत इति ब्राह्मणमथ वै भवति यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेदित्युपान्ते तस्य व्यतिषजति ' स्त्र्येवास्य जायत इति ब्राह्मणमथ वै भवति यं कामयेत पुमानस्य जायेतेत्याम्नं तस्य प्रवेष्टयेदित्याम्नं तस्य प्रवेष्टयति ' पुमानेवास्य जायत इति ब्राह्मणमथैतमुपशयं दक्षिणतो न्यस्यति तूष्णीं ' सर्वांस्तान्यूपाननुसृज्याग्नेयमेवाग्निष्ठ उपाकरोति ॥ १३ ॥

सारस्वतीमुत्तरे सौम्यं दक्षिणे पौष्णमुत्तरे बार्हस्पत्यं दक्षिणे वैश्वदेवमुत्तर ऐन्द्रं दक्षिणे मारुतमुत्तर ऐन्द्राग्नं दक्षिणे सावित्रमुत्तरे वारुणं दक्षिणे ' ऽथ वै भवति यदि

---

१ एव om M, एवम् om M2

कामयेत यो ऽवगतः सो ऽपरुध्यतां यो ऽपरुद्धः सो ऽवगच्छेदित्यैन्द्रस्य लोके वारुणमालभेत वारुणस्य लोक ऐन्द्रं ' य एवावगतः सो ऽपरुध्यते यो ऽपरुद्धः सो ऽवगच्छतीति ब्राह्मणमेय[1] वै[1] भवति[1] यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजेदिति ' पशूनेवास्य[2] व्यतिषजति ' प्रजा एव मोहयतीति ब्राह्मणमेय वै भवति यदभिवाहतो ऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमालभते ऽपवाहतो ऽपां प्रजानामवरुणग्राहायेति ब्राह्मणमेवैतस्मिन्नुपक्रमे मनसैव यं द्वेष्टि तमुपाकरोति ' यद्यु वै न द्वेष्यात्स्तुते पशुरित्यनुदिशति ' समानं कर्मा पर्यग्निकरणात्पर्यग्निकृतानामेतेषां पशूनां पञ्च दक्षिणार्ध्यान्पशूनुपकम्यैव स्थापयित्वा द्वावुपातिनीयायेतरैर्व्यतिषजत्यथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते ' तेषां वारुण उत्तरार्ध्यो भवत्याग्नेय उपधारत ' आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्तस्तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय ' तद्गुधा संतिष्ठते ' ॥ १४ ॥ द्वितीयः ॥

अथ वै भवतीष्टं वपया भवत्यनिष्टं वशयाथ पात्नीवतेन प्रचरतीति ' स यत्रैकादशिन्या अनुबन्ध्यस्येष्ट[3] वपया भवत्यनिष्टं वशया तज्जघनेन गार्हपत्यमौपसदायां वेद्याः

---

१ ब्राह्म वै भ॰ om. Be BU.

२ एव om MH Ms

३ ॰बंधस्ये॰ MH.

ह्यस्त्वयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं । चिर्पशुपा तूष्णीं चतुर्थं । पूर्वं परिघाहं परिगृह्णाति । करणं वपत्युद्धगद्धतादाग्नीभिश्चिर्हरति । यदाग्नीभिश्चिर्हरत्ययथायतनेन[1] गार्हपत्यं प्राग्नीवतस्य यूपावटं परिलिखति । समानं कर्म स्रुचाः सादनात्सादयित्वा, स्रुचो ऽपेण गार्हपत्यं प्राग्नीवतमुच्छ्रित्य तस्मिंस्त्वाष्ट्रं शाण्डमजं पशुमुपाकरोति[2] । तं पर्यग्निकृतमुत्सृज्याज्येन संस्थां करोत्यथ चतुर आज्यस्य गृहीत्वाह त्वष्ट इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोतीति नु वपायाः प्रतिचरति । चतुर एवाज्यस्य गृहीत्वाह त्वष्ट इत्युपांश्वनुब्रूहीत्युच्चैः । ॥ १५ ॥

अत्याक्रम्याश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोतीति नु पशुपुरोडाशस्य प्रतिचरति । चतुर एवाज्यस्य गृहीत्वाहाग्नय इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्निमित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोतीति नु पशुपुरोडाशस्य स्विष्टकृतः प्रतिचरति । चतुर एवाज्यस्य गृहीत्वाह त्वष्ट इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोतीति नु हविषः प्रतिचरत्याज्येन दिशो जुहोति । पृषदाज्येन वनस्पतिमाज्यस्य स्विष्टकृतमाज्यस्येडामवद्यति । पृषदाज्येनानू-

---

१ यदाग्निभिश्चिर्हरति found in MUH only

२ पशुम् om. Ms

याजान्यजति । सो ऽन्त एव पशोः संयाज्याश्चैव समिष्टयजूंषि[1] जुहोति । संतिष्ठते पात्नीवतः । ॥ १६ ॥ तृतीयः ॥

अथ वै भवति यो ऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमादधीत यो ऽग्निं चित्वा नर्ध्नोति स पुनश्चितिं चिन्वीत इत्यग्निं चित्वा व्यामात्रो द्वादशेष्टका उपकल्पयते ऽष्टौ याजुषीस्तस्रो लोकंपृणाः । स यत्र[2] होत्तरवेदिर्व्याघारितोपन्युप्तसंभारा[2] भवति तद्वाभ्यामात्मन्यग्निं[3] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । अथैतमश्वमभिमृश्याष्टौ याजुषीरुपदधाति येनर्षयस्तपसा सत्रमायन्निति । अनन्तो लोकंपृणा लोकं पृण छिद्रं पृणेत्यथ चितिकृत्याभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाग्न आयन्माणद्य इति । तायते पशुबन्धो वाग्निष्टोमो वा । स मन्नातः संतिष्ठते । ॥ १७ ॥ चतुर्थः ॥

[4]जर्वरो गृहपतिर्धृतराष्ट्र ऐरावतो ब्रह्मा दत्तस्तापसो होता पृथुश्रवा दूरेश्रवा[5] उद्गाता ग्लावमाजगावश्च[6] प्रस्तोतमति-

---

१ °यजुर् MH.

२ Thus M, °सवेदो° D, °ययवो° the other MSS.

३ Thus M Be B U, °त्मन्यग्निं or °त्मन्यग्निं Be 7 D.

४ On the following cp Baudh grhs. III, adhy 10 and Pañc br XXV, 15

५ Found in M only

६ Thus M, °माज° or °माव° the other MSS

वाकस्त्विपिश्चापचितिश्च नेष्टापोतारावग्निरेवाग्नीध्रो वाक्सुब्रह्मण्यो भगो ग्रावस्तुदूर्गुन्नेता बलं[1] ध्रुवगोपो[1] मनो ऽध्वर्युश्चक्षुः प्रतिप्रस्थाता सेदिश्चाऽऽनया[2] चेध्मवाहौ दिष्टिर्विशास्ता[3] मृत्युः शमितैते वै विश्वसृजः प्रथमाः सत्रमासां चक्रिरे । तेषाꣳ सतꣳ समा दीक्षा आसञ्छतमुपसदः सहस्रं प्रसुतास्तदेषाभिवदति विश्वसृजः प्रथमाः सत्रमासत सहस्रसमं प्रसुतेन यन्तः । ततो निषदमिषत्संबभूव ततो ह जज्ञे भुवनस्य गोपा इत्यग्निष्टोमैर्वाव[4] ते[4] तदीयुस्तदेतदृद्धमयनं[4] प्रजननं[5] यदग्निष्टोमाः । ॥ १९ ॥ षष्टः ॥

कुण्डपायिनामयनेनैष्यन्तो दीक्षन्ते । पत्र सर्वतो धुरास्तेषामियमेव प्रज्ञाता संवत्सरदीक्षा । समानं कर्मारम्भणीयादारम्भणीयेनेष्ट्वैन्द्रं पयो दोहयति सांनाय्यस्य वाहृता तूष्णीं वाथ वसतीवरीः परिहृत्याविभिद्य[6] पयांस्युपवसन्त्यथ[6] सो भूत आमावास्येन हविषा यजन्ते । तेन यन्त्यष्टाविंशति-

---

१ Thus M, बलंध्रु॰ U, बलधु॰ Be B, बलडु॰ Be 7 D.

२ Thus MUDBe 7; सेदीश्चाससया Be, सेदिमयाससयो B

३ विशिद् ।. ७० दिशिर् M, but cp. Pañc. br. XXV. 18. 4

४ Thus M (reading only तदिषु॰ ।. ७० तदीयु॰); ॰मैर्वाविरेतमिदिरुपरे॰ Be, ॰मैर्वाविरेतमिदिरुपदे॰ BU ॰मैर्वावरुतेभिरिदुपरे॰ D, ॰मैर्वावरवेभिपुपरे॰ Be 7.

५ Uncertain, प्रजन M, प्रजनि all the other MSS.

६ Thus corrected with some hesitation; cp. Karmānta-Sūtra III. 25, पर्याहृत्य पर्याशि विभिद्य M, but all the other MSS. पर्याहृत्यविभिद्य पयांस्यु॰ ।

रहानि । प्रायणीयारम्भणीयौ । स मासः[१] । पौर्णमासहविर्भिर्यन्ति मासं । वैश्वदेवहविर्भिर्यन्ति[२] मासं । वरुणप्रघासहविर्भिर्यन्ति मासꣳ । साकमेधहविर्भिर्यन्ति । मासꣳ शुनासीरीयहविर्भिर्यन्ति षड्विꣳशतिरहान्यभिजिन्मयः[३] परःसामानः । स मासो । वैषुवतं । अथो ऽर्वाक्सामानो । ऽथ विश्वजित्त्रयस्त्रिꣳशेन[४] यन्ति मासं । त्रिणवेन यन्ति मासमेकविꣳशेन यन्ति मासꣳ । सप्तदशेन यन्ति मासं । पञ्चदशेन यन्ति मासं । त्रिवृता यन्ति द्वादशाहानि । गोआयुषी । तानि चतुर्दश । चत्वार्यूर्ध्वं वैषुवतात्तान्यष्टादश । दशरात्रो महाव्रतं चातिरात्रश्च । स मासः । ॥ २० ॥

अथैषां कुण्डानि । ते खल्वेव विवेदसो[५] भवन्ति नदेयां कुण्डमेव यदन्योऽन्यमनुपरिसर्पि[६] याजयन्ति नदेयां कुण्डमेव यदस्यकेयमभिषेचयन्ति[७] नदेयां कुण्डं । तेषां य एव ब्रह्मा स एव[८] ब्राह्मणाच्छꣳसी स पोता यो होता स एव मैत्रावरुणः यो ऽच्छावाको । ऽथ य उद्गाता स एव

---

१ Thus MB Be, Be 7 D present here a lacuna of two akṣaras.

२ UBD here and *infra* each time चर्यन्ति i.s.o. यन्ति ।

३ षड्विꣳशानि° i.s.o. षड्विꣳशमि° M

४ After विश्वजित् Be ins. मास ।

५ Thus M, °वेदसौ the other MSS.

६ Thus M, परि om. all the other MSS.

७ यत्स्यकै° M

८ एव om. all exc. M

प्रस्तोता स प्रतिहर्ताथ यो ऽध्वर्युः स एव प्रतिप्रस्थाता स नेष्टाथ य आग्नीध्रः स एव ग्रावस्तुत्[1] सुब्रह्मण्यः स उन्नेताथोपनिषद्दो[1] ऽग्निश्चतुर्होता[2] वायुः पञ्चहोता चन्द्रमाः षड्ढोता प्रजापतिः सप्तहोतासावादित्यो नवहोतैता वै देवता एतेनायनेनायꣳस्ता वै ता आर्ध्नुवन्सुवर्गं[3] लोकमायन्न्य् एवं विद्वाꣳस एतेनायनेन यन्त्यृध्नुवन्त्येव सुवर्गं[4] लोकं यन्ति । ॥ २१ ॥ सप्तमः ॥

उत्सर्गिणामयनेनैष्यन्तो दीक्षन्ते । तेषामियमेव प्रज्ञाता संवत्सरदीक्षा । समानं कर्मा पृष्ठ्यात्षडहात्पृष्ठ्येन षडहेनेदैन्द्रं पयो दोहयति सांनाय्यस्य वाहता तूष्णीं वाथ वसतीवरीः परिहृत्याविभज्य[5] पयाꣳस्युपवसन्त्यथ प्रातरहरहर्दुह्य[6] ज्योतिष आयतने प्राजापत्यं पशुमालभन्ते । तस्य पशुपुरोडाशमनुवर्तते ऽग्नये वसुमते पुरोडाशो ऽष्टाकपालो । माध्यंदिन इन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्त्यैन्द्रꣳ सांनाय्यꣳ । सा दिवविरिष्टिः संतिष्ठते । ऽथैतदैन्द्रꣳ सांनाय्यꣳ समुपह्वय भक्षयन्त्यथापराह्णे वैश्वदेवं द्वादशकपालं निर्वपन्ति वैश्वदेवं चरुं । ताभ्यां चरन्ति देवताप्रस्तौभ्यामिडान्ताभ्या-

---

१ All MSS. exc M ins. एव ।

२ Thus M Be 7, •विषद्ग्नि• Be D U, •निषद्दोग्नि• D.

३ स्वर्गं all.

४ सुवर्गं M, स्वर्गं the other MSS

५ परिहृत्यवि• MSS, cp *supra* p 209, n. ■

६ अहरह om. Be 7 D.

मेध[1] पशुना चरति मनोताप्रभृतिनेडान्तेनाथानूयाजैश्चरित्वा प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य वसतीवरीः परिहृत्य पयांसि विग्रिष्योपवसन्त्यथ श्वो भूते गवा प्रतिपद्यन्ते । स एवमेवैतेन[2] यन्तो[2] मासिमास्युत्सृजन्तः पञ्च ज्योतींष्युत्सृजन्त्यथामुत आवृत्ताश्चतुरश्च[3] त्रयस्त्रिंशस्तोमानुत्सृजन्त्येकं[4] च ज्योतिरथ श्वो भूत आयुषैव प्रतिपद्यन्ते । ॥ २२ ॥ अष्टमः ॥

तपश्चितामयनेनेष्यन्तो[5] दीक्षन्ते । तेषामियमेव प्रज्ञाताग्निदीक्षा । समानं कर्मा संनिवापात्प्रसिद्धः संनिवापो । ऽथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा राजानं क्रीत्वोद्धासिष्यं निर्वपत्यातिथ्येन प्रचर्यैतां पञ्चहविषमिष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालमिति । तया महादेवेद्धा नाद्रियेरन्नित्येक आह्वरेतयैवाहरहः संवत्सरं यजेरन्नित्येके । प्रथमे ऽहन्सर्वैरन्वहमेकैकया[6] षष्ठे ऽहन्सर्वैरन्वहमेकैकया । प्रथमे द्वादशाहे ऽग्निं चिन्वीतेत्येक आहुस्तद्

१ °प्रभृतीष्टा° MD Be 7, °प्रभृतिष्टा° Be BU.
२ Thus M, एवमेवोद्यन्तो Be BU, एवमेतेनान्तो Be 7 D.
३ च om. M.
४ Thus M, त्रयस्त्रिंशाद्द्यान्° the other MSS.
५ तप° all exc M
६ °न्वासर्वैः° M.

वा आङ्क्[1] रुद्रो वा एष यदग्निः । स एतर्हि जातो यर्हि सर्वश्चितः । स यथा वत्सो जात स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति । संवत्सर एवैवास्माता भागधेयं । नैतस्याग्नां चनेयादित्युत्तमे[2] द्वादशाहे ऽग्निं चिन्वीतेत्येतदपरम् । ॥ २३ ॥

अथातो ऽहरहश्चयनस्यैव मीमांसा । वयश्चितिं निस्सिष्ठन्त्यथ लोकंपृणा इष्टका उपदधन्मासमेति । मासि तथादेवतं कुरुते । द्वितीये मासे पुरीषचितिः । वयश्चितिं निस्सिष्ठन्त्यथ सुषिनो ऽनु प्रकारं[3] मासमेति । मासि तथादेवतं कुरुते । तृतीये मासे अपुच्छचितिश्चतुर्थे[4] मासे पुरीषचितिः । पञ्चमे मासे मध्यमा चितिः । षष्ठे मासे पुरीषचितिः । सप्तमे मासे अपुच्छचितिरष्टमे[5] मासे पुरीषचितिर्नवमे मासे यत्र स्कन्ध्या उपदधात्या नक्षत्रेष्टकाभ्यो । दशमे मासे[6] पुरीषचितिरेकादशे मासे[6] संयच्च प्रचेतायेत्येता उपदधात्या विकर्णीद्वादशस्य°

---

१ आङ्क all exc. M.

२ My conjecture, between °ग्नां and नेया° M has a blank of one akṣara, all the other MSS °ग्नांशनेया° ।

३ Thus Be BU, सुषिरानुप्र° M Be 7 D

४ Thus M, (मासे)ऽपुच्छदशचितिः Be, °पुच्छदशचितिः the other MSS. I am not sure about the meaning of अपुच्छ; it occurs repeatedly *infra* and once in the Karmānta. Perhaps अपुच्छ "without the tail (of the Agni)"

५ Thus M, संद° the other MSS

६ मासि all exc M

७ Thus M D U, विकर्णेद्वा° B Be 7 विकर्णीद्वा° Be

मासस्याष्टाविंशतिरहानि पुरीषमेकान्नत्रिंशे शतरुद्रीयꣳ' श्वो भूते वसोर्धारा' ॥ २४ ॥

अथोपरिष्टान्मासमित्याचक्षते' मासस्य प्रथमे ऽहन्स्वयंचितिं निदधति यथादेवतꣳ[1] ससूददोहसं' [3]मासं प्रवर्ग्योपसदौ यन्ति' द्वितीयस्य मासस्य प्रथमे ऽहन्पुरीषचितिः' मध्यचितिं निदधति यथादेवतꣳ ससूददोहसं' द्वितीयं[2] मासं प्रवर्ग्योपसदौ यन्ति' तृतीयस्य मासस्य प्रथमे [4]ऽहन्मध्यचितिश्चतुर्थस्य मासस्य प्रथमे ऽहन्पुरीषचितिः' पञ्चमस्य मासस्य प्रथमे ऽहन्मध्यमा चितिः' षष्ठस्य मासस्य प्रथमे ऽहन्पुरीषचितिः' सप्तमस्य मासस्य प्रथमे ऽहन्मध्यचितिरष्टमस्य मासस्य प्रथमे ऽहन्पुरीषचितिर्नवमस्य मासस्य प्रथमे ऽहन्याश्च स्कन्ध्या उपदधात्या मण्डलेष्टकाभ्यो' दशमस्य मासस्य प्रथमे ऽहन्पुरीषचितिरेकादशस्य मासस्य प्रथमे ऽहन्संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णीर्द्वादशस्य मासस्य प्रथमे ऽहन्पुरीषचितिरेकान्नत्रिंशे शतरुद्रीयꣳ' श्वो भूते वसोर्धारा' ॥ २५ ॥

अथ पुरस्तान्मासमित्याचक्षते' मासं प्रवर्ग्योपसदौ यन्ति'

---

१ Thus all, not °देवताꣳ, also *infra*.

२ Be 7 BU ms. द्वितीयं।

३ om. B

४ The whole passage from ऽहन्मध्य° up to मासस्योत्तमे (p. 305, 4) left out by all exc. M

मासस्योत्तमे ऽहन्मध्यचितिं निस्तिष्ठन्ति सतयादेवतꣳ समुद्रदोहसं । द्वितीयं मासं प्रवर्ग्योपसद्भ्यां यन्ति । द्वितीयस्य मासस्योत्तमे ऽहन्पुरीषचितिः । मध्यचितिं निस्तिष्ठन्ति सतयादेवतꣳ समुद्रदोहसं । तृतीयस्य मासस्योत्तमे ऽहन्मण्डचितिश्चतुर्थस्य[१] मासस्योत्तमे ऽहन्पुरीषचितिः । पञ्चमस्य मासस्योत्तमे ऽहन्मध्यमा चितिः । षष्ठस्य मासस्योत्तमे ऽहन्पुरीषचितिः । सप्तमस्य मासस्योत्तमे ऽहन्मण्डचितिरष्टमस्य[२] मासस्योत्तमे ऽहन्पुरीषचितिर्नवमस्य मासस्योत्तमे ऽहन्सप्त स्कन्ध्या उपदधात्या नवमेष्टकाभ्यो । दशमस्य मासस्योत्तमे ऽहन्पुरीषचितिरेकादशस्य मासस्योत्तमे ऽहन्संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णीद्वादशस्य[३] मासस्याष्टाविꣳशे ऽहन्पुरीषमेकान्नत्रिꣳशे[४] शतरुद्रीयꣳ । श्वो भूते वसोर्धारा । ॥ २६ ॥

अथात उत्थानानामेव सौमाꣳर्वाभिजितेष्टोत्तिष्ठेयुरित्येतद्ब्राह्मणसंपन्नमपि साभिजितेष्ट्यायैताꣳ[५] सवनेष्टिं [६]निर्वपन्त्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपाल-

१ Thus M Be 7, ॰ण्मण्ड॰ B, ॰न्मण्ड॰ Be.
२ Thus M Be 7, ॰ण्मण्डचि॰ B, ॰न्मण्डचि॰ Be
३ Thus M, the other MSS as *supra* (p. 303, 13)
४ ॰विꣳशे Be 7 D
५ Thus MU, ॰ष्ट्यायैताꣳ B Be, ॰ष्ट्यायैतां D, ॰ष्ट्येतां Be 7.
६ Thus M Be BU, निर्वपन्त्या॰ Be 7 D

मिति । तया समस्तया वा विहृतया वा प्रतिपद्यन्ते । वसतीवरीषु मृत्पिण्डमन्ववधायाहरन्वसतीवरीः[1] परिहरमाणा यन्त्येष संवत्सरसंपन्नं ब्राह्मणो[2]ऽयनमित्याचक्षते । चतुरो मासो दीक्षाभिर्यन्ति चतुर उपसद्भिश्चतुरो मासः प्रसुताः । तदाहुः क एतावत्तपस्तप्स्यान्यमाधास्यं कुर्वीताग्निवासिषु वोपहवमिच्छेत[3] दक्षिणावता वैनं याजयेयुरिति । यो ऽग्नेवासिषु[3] वैवोपहवमिच्छते[4] दक्षिणावता वैनं याजयन्ति । ॥ २७ ॥ नवमः ॥

अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इति । स छन्दश्चिद्येव स च याकृतिरागच्छति[5] जुहोत्येव तथांय[6] यदन्यदाकृतिभ्यः शरीरयजुरेव तत्र जपति यजुरेव रश्मनयोर्यजुरश्वगर्दभयोर्यजुरत्माथे प्रह्वाने[7] । यजते[7] वायव्येन पशुना । दीक्षते । विमायाग्निं परिखायापस्यायतने यजुरेव[8] तत्र[8] जपति यजुः सर्वासामिष्टकानामुपधाने । जुहोति शतरुद्रीयं । कुरुते वसोर्धाराम् । श्येनचितं चिन्वीत सुवर्गकाम इत्ययमे-

---

१ °मन्ववधाय° MB Be U, °मन्वाधाय° Be ? D.

२ Thus M; °आप्नुवायन° the other MSS.

३ वा om Be BU.— इच्छते i. s. o. इच्छेत Be ? D

४ Thus M Be; °वुपोपहव° Be ? D, °वृपहव° BU.— इच्छते i. s. o. इच्छन्ते all exc. M

५ °याकृतीरागच्छंति M.

६ Thus M Be BU; तद् Be ? D.

७ प्रहंजनेयजते M, प्रहंजनेयजजते B Be, प्रह्वजुंव DU

८ °देव B Be U.

वैष[1] श्येनचित्कङ्कचितं[1] चिन्वीत यः कामयेत शीर्षण्वानमुष्मिँल्लोके स्यामित्येतस्यैव सतो ऽरत्निमात्रेण प्राक् शिर इव निरूहति । स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यादलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकाम इत्येतस्यैव सतो ऽरत्निमात्रेण पक्षावणीयांसौ भवतस्तावन्मात्रेणापिपक्षौ वरीयांसौ । तौ मनागपनतौ परोऽणीयांसौ[2] भवत । एकैकामत्र[3] सीतां कृषति । प्रउगचितं चिन्वीत भ्रातृव्यवानित्येतस्यैव सतः समुदूह्यांसौ[4] प्रागायातयति । स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यादुभयतःप्रउगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानित्येतस्यैव सतः समुदूह्यैव श्रोणी प्रत्यगायातयति । स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यात् ॥ २८ ॥

रथचक्रचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते । आकृतिविकारः शब्दसंयोगाद्यावानग्निः[5] सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वानुशर्करमन्तःशर्करमिष्टकाः परिचिनोत्यंधान्ततो[6] ऽयान्तरत । एवमेवा[7] रथमादधाया । अथा-

१ Thus M only, इत्युपमाधेय (or इत्यधायमेवैव) श्येनचितिः the other MSS

२ परो om all exc. M

३ एकैकामत्र M, अत्र om. Be

४ Thus M Be BU; समुदूह्यैव श्रोणी Be 7 D.

५ Thus MBU; शुभसंयो॰ Be, आया॰ संयो Be 7 D

६ Thus MD Be 7, ॰प्रांतरतो Be U, B om

७ Thus M, एवमेव the other MSS

भितः स्वयमातृण्णां । मध्ये नाभिमिव करोति । तस्या [1]अनुदिशमवान्तरदिशमरानिव[2] नेमिमिवेष्टका[2] आयातयति । स एष रथचक्रचिद्भ्रातृव्यवतः परिक्षयो । द्रोणचितं चिन्वीतान्नकाम इत्येतस्यैव सतो ऽरत्निमात्रेण प्रागोष्ठमिव निरूह्यर्थं[3] मध्ये निम्नमिव[4] करोति । स एष द्रोणचिदन्नकामस्य परिक्षयः । समूह्यं चिन्वीत पशुकाम इति विज्ञायते । पुष्करपर्णं रुक्मं हिरण्मयं पुरुषं स्रुचावित्येतमक्षण्णमित्याचक्षते[5] । कुरुत एव तद्यो पुरीषस्यैवेष्टका[6] आयातयति । स एष समूह्यः पशुकामस्य परिक्षयः । परिचाय्यं चिन्वीत ग्रामकाम इत्येतां शर्करैरन्तःशर्करैरिष्टकाः परिचिनोत्यथान्ततो[7] ऽप्यासारन्[7] । एवमेवा[8] स्वयमातृण्णाया । अथाभितः स्वयमातृण्णामिष्टकाः परिचिनोति । स एष परिचाय्यो ग्रामकामस्य परिक्षयः ॥ २९ ॥

---

१ °मवान्तरदिश° M Be, °मवान्तर्दिश° B Be 7 UD.

२ °मरानिवेमिमिवेष्टका MSS. exc M, which has °मरानिवनेमिमिवेष्टका; perhaps an allusion to R V. I. 32, 15, TBr. II. 8 4. 3

३ सर्वं । s. o. सव all exc M.

४ Thus M Be; निम्निव the other MSS

५ °तक्षण° M.

६ पुरुष° M

७ Thus M, °थांततोयासन B Be; °थान्ततोऽसार Be 7 D, °थांततो-योतयासन U

८ Thus M, एवमेव the other MSS

श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति । षट् प्राञ्चः पुरुषास्त्रयः पुरस्तात्तिर्यञ्चौ[1] द्वौ पश्चात्तिर्यञ्चौ स आत्मा । तस्य मात्रा । यदि ग्रीवदघ्नं पुरस्तान्नाभिदघ्नं पश्चाद्यदि नाभिदघ्नं पुरस्ताज्जानुदघ्नं पश्चाद्यदि जानुदघ्नं पुरस्ताद्गुल्फदघ्नं पश्चाद्यदि गुल्फदघ्नं पुरस्तात्समं भूमेः पश्चात् । एष श्मशानचित्पितृलोककामस्याथ हैष कूर्मचिद्ब्राह्मणो मध्य उत्पृष्ठः[2] परिश्रय्य । एतस्यैव मतो ऽरत्निमात्रेण प्राक् शिर इव निरूहति । तस्यावान्तरदिशं पादानिवेष्टका आयातयति । स एष कूर्मचिद्ब्राह्मणो मध्य उत्पृष्ठः परिश्रय्यः । ॥ ३० ॥ दशमः ॥

सौत्रामण्या यक्ष्यमाणो भवति । स उपकल्पयते रोहितं चर्मानडुहꣳ सीसं च क्लीबं च शष्पाणि च तोक्मानि[3] च मौश्चीनग्नहू[4] चूर्णहता[5] त्रीणि नानावृक्ष्याणि पात्राणि वयाघ्रवृकसिंहाणि लोमानि यूपं च क्षौमपत्रं च गर्भिणीं वडवामासन्दीमिपद्मं कुम्भं कारोतरं विषाख्यौ दीर्घवंशꣳ शिक्यꣳ शतातृण्णꣳ शतमानꣳ हिरण्यꣳ यतं च बालं च ब्राह्मणमाहृत्या उच्छेषणस्य पातारं यदि ब्राह्मणं न विन्दति

---

1 °तिर्यञ्चौ all, but cp J As. Soc of Bengal, 1875, p 265

2 Thus M Be BU ; उत्पृष्ठः Be 7, उत्पृष्ठ D

3 तोक्मानि M and thus also all the MSS. of the gṛhyasutra 8 ; तोक्कानि the other MSS

4 नग्नहू° M

5 °हता all exc. MT

वल्मीकवपामथासावाग्नेन वा हविर्वेद्या नचेचे वायेण श्रोणाऽ रोहिते चर्मणि सुरासोमः सम्भवः[१] शेते । तं दक्षिणतः क्लीब उपास्ते । सीसेन क्लीबाच्छष्पाणि क्रीणातीदं तवेदं ममेति । क्रीतः सुरासोम इत्यथैनमादाय पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमुपसादयत्यथैतेषां व्रीहीणामर्धानवघ्नन्त्यथे-तराञ्गार्हपत्य[२] एककपालमधिश्रित्य[२] भर्जन्ति[३] । तेषां ये फलन्ति लाजास्ते[४] भवन्त्यथ ये[५] ऽपि[५] न फलन्ति तास्तर्यौ । गार्हपत्ये नवां कुम्भीमधिश्रित्य प्रोदकमिवौदनं[६] श्रपयन्त्य-थैनं विस्राव्य कठिने[७] वा पात्रे वा विपर्यस्यन्त्यथैनाञ्क्षुरेणान-वघ्नन्ति[८] । तेषां यानि च क्षुद्राणि याश्च तर्यस्ता उत्तेषी संप्रकिरन्ति । तं मासर इत्याचक्षते । ऽथ मानमादाय विमिमीत[९] एकं शष्पाणां द्वे तोक्मानां[१०] त्रीणि लाजानां

१ Thus (संभवः or संभव:) MT Bo U (pr. m.), संभवः Bo Tr U (sec. m.), समम H, Bhav. periphr शादिन. ।

२ Thus Bo Tr; ॰पत्येककपाल॰ U; ॰पत्य एककपाल॰ T; MHB om. एक॰, but cp. supra XIII. 25 (p. 136 2).

३ Thus M, as supra l. c., भर्जयति the other MSS.

४ ते लाजाः MT Tr.

५ Thus MT Tr, ये (omitting ऽपि) the other MSS

६ ॰मिवौदन MH Be, ॰मिवोदनं Tr TBU

७ Thus T Tr H, कठिने MB Be, U corrupt

८ Thus M, क्षुरवान Tr, क्षुरान् or क्षुराम् the other MSS; Bhav. once, क्षुरवान्, once क्षुरान् ।

९ वि om. M Tr T.

१० Thus Be, तोक्मानां the other MSS

चत्वारि नग्नहोरथैतमोदनं चूर्णैरनुप्रकिरन्मासरेणावोक्षन्संपादयति[1] ॥ ३१ ॥

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेनेत्यथैतामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधात्यथासन्द्यामिण्वमिण्वे कुम्भं कुम्भे कारोतरमवदधात्यथैतमोदनमभितः कारोतरं परिचिनोत्यथैनमपिधायाभिमृशति सोमो ऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति । तिस्रः सꣳसृष्टा वसति । तिस्रो हि रात्रीः क्रीतः सोमो वसतीति ब्राह्मणमथ तिसृषु व्युष्टासु तायते त्रिपशुर्वा चतुष्पशुर्वा पशुबन्धो । ऽथाप्येषा पूर्वेद्युरेव सौत्रामणिकी, वेदिर्विमिता भवति । तां परिस्तीर्य स्तम्बयजुर्हरति ॥ ३२ ॥

एतदेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथ चात्वालस्याहृता चात्वालं परिलिखत्युत्तरवेदेराहृतोत्तरवेदिं निवपत्युत्तरनाभिमुन्नीय यूपावटं[2] चात्वालाग्नेराहृता[2] द्वावग्नी प्रणयत आहवनीयादेवाध्वर्युरन्वाहार्यपचनात्प्रतिप्रस्थाताग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादये-

---

१ ॰नुप्रकारं IBO ॰नुप्रकिरन् M T. संपादयति M (pr m), संपाचयति M (sec m)

२ यूपा॰ चात्वा om. M Tr

भावर्हिरुपसाद्य स्रुवं स्वधितिं स्रुचश्च संसृज्य तूष्णीं पृषदाज्यधान्यौ पशौ संगृह्याज्येन च दध्ना चोदेहि प्रतिप्रस्थातः सुरासोमस्य विहीत्यध्वर्युरेव प्रसिद्धं पाशुबन्धिकं कर्म चेष्टत्यथ प्रतिप्रस्थाता सुराः[1] संपचय्य[1] सग्रहामादाय पूर्वया द्वारोपनिष्क्रम्यान्तर्वेद्यासादयति ॥ ३३ ॥

यावदेवाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता सत उदीचीनदशेन वालेन सुरां पुनाति पुनातु ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तनेति वायुः पूतः पवित्रेणेति यदि सोमातिपवितो भवत्यथादत्ते पर्णमयं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति बर्हिषी अन्तर्धाय कुवलसक्तुभिश्च[2] वृकलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी ग्रहपात्रेण परिमृज्य सादयत्येष ते योनिरश्विभ्यां त्वेत्यथादत्ते नैयग्रोधं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामीति बर्हिषी अन्तर्धाय बदरसक्तुभिश्च व्याघ्रलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी ग्रहपात्रेण परिमृज्य सादयत्येष ते योनिः सरस्वत्यै त्वेत्यथादत्त आश्वत्थं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति

---

१ सुरासोमसंपचय्य M

२ च om. here and every time *infra* H Be H

बर्हिषी अन्तर्धाय कर्कन्धुसक्तुभिश्च वृकलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी श्येनपत्त्रेण परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा सुत्राम्ण इति । ॥ ३४ ॥

ताश्छदनेन स्रुग्दण्डाभ्यां वोदीचो वायातयत्यथैताꣳ सुराꣳ सप्रैकामादाय दक्षिणमग्निमुपसꣳसर्पति[१] । तमभितो[२] गर्तौ[२] खानयति । तदुपसादयति विशाखौ[३] दीर्घवꣳशꣳ शिक्यꣳ शतातृण्णाꣳ शतमानꣳ हिरण्यꣳ सतं च वालं चाथ दक्षिणमग्निमपरेण पुराणभस्मनः[४] खरं करोति । तदुपसादयति ब्राह्मणमाहृत्या उच्छेषणस्य पातारं । यदि ब्राह्मणं न विन्दति वल्मीकवपामवधाय उपसृज्य यूपस्याहता यूपमुच्छ्रयति । सर्वेमं यूपमुत्सृज्याथैतान्पशूनुपाकरोत्याश्विनं धूम्रꣳ सारस्वतं मेषमैन्द्रमृषभं । बार्हस्पत्यं पशुं चतुर्थं यदि सोमातिपवितो भवति । तेषां प्रसिद्ध वपाभिश्चरित्वाश्विनसारस्वतावध्वर्युरादत्त । ऐन्द्रं प्रतिप्रस्थाता । ग्रहावादायोपोत्तिष्ठन्नाहाश्विभ्याꣳ[५] सरस्वत्या इन्द्राय सुत्राम्णे सुराम्णाꣳ[६] सोमानामनुब्रूहीति । युवꣳ सुराममश्विनेत्येतामन्वाहेत्याक्रम्याश्रा-

---

१ Thus M Tr TBH सर्पति Be U

२ Thus (with म) B Be (pr. m) H, °भितः ख° MT Tr, °भितो ख° Be (sec. m)

३ विशाखे M

४ Thus MT Tr, भस्मना B Be UH

५ Thus M Tr, उपतिष्ठन् I S O उपोत्तिष्ठन् the other MSS.

६ Thus (cp Āp. XIX. 2. 18) M Tr, सुराम्ण BH Be U. T def.

व्याघ्राश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सुराम्णः सोमान्प्र-स्थितान्प्रेष्येति । मैत्रावरुणो होता यक्षदश्विना सरस्वतीमिन्द्रꣳ सुत्रामाणमिति । पुत्रमिव पितरावश्विनोभेति यजत्यध्वर्यो हविराद्ये स इति वषट्कृते जुहोति । ॥ २५ ॥

यस्मिन्नश्वास ऋषभास उक्षण इत्यनुवषट्कृते हुत्वाश्विनस्य मध्यमावꣳ सारस्वते ऽवनयति । सारस्वतस्य मध्यमावमैन्द्रे । तं ब्राह्मणो भक्षयति नाना हि वां देवहितं यदचेति द्वाभ्यां । [1]यदि ब्राह्मणं न विन्दति वल्मीकवपायामवनयत्येतेनैव मन्त्रेणाथैतानि पात्राणि वल्कामस्य[2] पूरयित्वा पर्णमये श्येनपत्रमवगूहति । तदिमाष्ठावुच्छ्रित्य दक्षिणार्धं वꣳशं प्रोहति वꣳशे शिक्यꣳ सजति[3] शिक्ये शतातृण्णाꣳ शतातृण्णायां वालं वाले शतमानꣳ हिरण्मयमेताꣳ सुराꣳ सप्रैकामादाय शतातृण्णायाꣳ समवनयति सोमप्रतीकाः पितरस्तृप्णुतेति । हरति[4] शतातृण्णेष्वुपतिष्ठन्ते[5] पवमानः सुवर्जन इत्येतेनाष्टर्चेनाथ यदि सोमातिपवितो भवति पित्र्या याज्यानुवाक्याभिरुपतिष्ठन्त उदीरतामवर उत्पराम आहं पितॄन्सुविद-

१ अथ ins. MT Tr.

२ Thus H ; वल्कमस्य MTB Be U ; विल्वमस्य Tr

३ Thus M Tr ; सज्जयति T, सचति B Be U, सचयति H.

४ Thus Tr Be HU (sec. m.) ; चति (sic) B, चरति U (pr. m.) ; हरति MT

५ Plural T Tr U (pr. m.), sing. the other MSS

चाꣳ स्वपित्वीदं पितृभ्यो नमो अस्त्वित्यध्वर्युर्होता ब्रह्मा त उपतिष्ठन्ते यथैव शताहृणां धारयति तस्मिन्दधाति प्रतिष्ठित्या इति ब्राह्मणं तदेवैनां निधाय दक्षिणतो निदधात्यथैतानि पात्राणि पुराणभस्मनः खरे सादयति ॥ ३६ ॥

पितृभ्यः स्वधाविभ्यः स्वधा नमः पितामहेभ्यः स्वधाविभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नम इत्यथ गर्भिणीं वडवां ददात्यथाप उपस्पृश्य बार्हस्पत्यस्य पशुपुरोडाशं याचति तेन प्रचरति[1] देवताप्रभृतिनेडान्तेनाथ पशुभिश्चरति मनोताप्रभृतिभिरिडान्तैरथैतान्पुरोडाशान्याचत्यैन्द्रमेकादशकपालꣳ सावित्रं द्वादशकपालं वारुणं दशकपालमिति तैश्चरति देवताप्रभृतिभिरिडान्तैरनूयाजैश्चरित्वा प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोति यज्ञ यज्ञं गच्छैव ते यज्ञो यज्ञपते देवा गातुविद इत्यथैतमवभृथꣳ मꣳसादयन्ति[2] यत्किंचित्पुराणलिप्तं भवति तत्सर्व हृदयशूलानि भवन्त्यौतस्मादाधायान्तरेण[3] चात्वालोत्करावुदङ्ङुपनिष्क्रामन्ति ॥ ३७ ॥

द्वे सृती अशृणवं पितृणामह देवानामुत मर्त्यानाम्।
ताभ्यामिदं विश्वं भुवनꣳ समेत्यन्तरा पूर्वमपरं च केतुमिति

१ चरति M Tr

२ Thus M Tr Be, ॰सादयति HBU, संप्रकिरंति T

३ भवंत्ये॰ HU, भवंतौत्ये॰ M, भवतौत्ये॰ T भवत्ये॰ B Be

प्रविद्धं हृदयशूलैस्सरिलाथैतानि पाशानुदकान्ते पराचि सादयति यस्ते देव वरुण गायत्रच्छन्दाः पाशो ब्रह्मन्प्रतिष्ठितः । तं त एतेनावयज इति पर्णमयं । यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः क्षत्रे प्रतिष्ठितः । तं त एतेनावयज इति नैयग्रोधं । यस्ते देव वरुण जगतीछन्दाः पाशो विक्षु प्रतिष्ठितः । तं त एतेनावयज इत्याश्वत्थं । यस्ते देव वरुणानुष्टुप्छन्दाः पाशः पशुषु प्रतिष्ठितः । तं त एतेनावयज इति प्रताह्वं । तूष्णीं सक्तं वासं च । प्रविद्धो ऽवभृथः । साम चैव नाह देवीराप एष वो गर्भ इति यथाप्रतीचमायन्ति वरुणस्यान्तर्हित्यै । प्रपद्ये समिधः कृत्वा एधो ऽस्येधिषीमहीत्याहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्याहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषं रसेन समसृक्ष्महि । पयस्वाँ अग्न आगमं तं मा संसृज वर्चसेत्यथ कुसीदेन ऋतुयाजेन परस्यै देवता उपस्थाय यूपमुपतिष्ठते । संतिष्ठते सौत्रामणी[1] ॥ ३८ ॥ एकादशः ॥

[2]वेदमधीत्य स्वाध्यायमुपकल्पयत एरकां चोपबर्हणं च

---

1 सौत्रामणि all exc M, at the close of this adhyāya T adds इति चरकसूत्रम् ।

2 The text of adhyāya [illegible] is based on M(ackenzie), cp. Preface, p II, and on the following MSS of the Gṛhyasūtra. Ma(dras), on the whole a very good copy in grantha, E(gmore), nāgarī copy of grantha original, T(anjore), grantha, breaking off after the words यथाशो स्रोतुकारण in kh. 41 H(aug), B(enares), these two closely related and on the whole rather bad. I made

नापितं च क्षुरं च दारूणि चोपस्तरणं च स्कन्धाऽऽस्य दन्तधावनमुष्णाश्चापः शीताश्च सर्वसुरभिपिष्टं[1] चाञ्जनं च स्रजं चादर्शं चाहतं च[2] वासः प्रावरणं[3] च वसनान्तरं चाद्रं मणिं सुवर्णोपधानं सूत्रं च[4] प्रवर्तौ च दण्डं चोपानहौ च[5] छत्त्रमानडुहं चर्म सर्वरोहितमित्येते ऽथ संभारा उपकॢप्ता भवन्ति । स्नानस्य मीमांसा । रोहिण्यां स्नायादित्येकं । प्राजापत्यं वा एतन्नक्षत्रं । तदस्य प्राजापत्य एव नक्षत्रे स्नातं भवत्यथो सर्वान्रोहानारोहाणीति[6] । तिष्ये स्नायादित्येकं । बार्हस्पत्यं वा एतन्नक्षत्रं । तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवत्यथो बृहस्पतिप्रसूतो ऽसानीत्युत्तरयोः फल्गुन्योः स्नायादित्येकं । भाग्यं वा एतन्नक्षत्रं । तदस्य भाग्य[7] एव

---

also use of G (gṛhyaprayoga MS Burnell cvii, which cites often literally passages of the Gṛhya), Prm (Prayogamālā printed at Bombay), Pś (Prayogasikhāmaṇi, No 3108 of the Leiden collection), Ks (Kanakasabhapati's Kārikā, Burnell cix) and Pc (Prayogacūḍāmaṇi, Telugu MS, collection Mackenzie No 21). Adhyāya 13 is contained only in M and E The two adhyāyas 12 and 13 are now also printed in the Grantha Edition of the Baudhāyana smārtasūtra, designed by me as "Ed"

1 सार्व॰ EG

2 only in Ed. TE.

3 Thus EHG, प्रावारं MT, प्रपार Ma प्रवारण Ed

4 om HBM (see m)

5 om. THB Ma

6 Thus B, रोहतीति i.s o. रोहाणीति the other MSS. and Ed

7 भाग्य TM Ma

नक्षत्रे स्नातं भवत्यथो भाग्यो ऽस्मानीति । हस्ते स्नायादित्येकऽ । सावित्रं वा एतन्नक्षत्रं । तदस्य सावित्र एव नक्षत्रे स्नातं भवत्यथो सवितृप्रसूतो ऽस्मानीति । चित्रायाऽ स्नायादित्येकमैन्द्रं वा एतन्नक्षत्रं । तदस्यैन्द्र एव नक्षत्रे स्नातं भवत्यथो चित्रो ऽस्मानीति । विशाखयोः स्नायादित्येकमैन्द्राग्नं वा एतन्नक्षत्रं । तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवत्यथो विशाखो ऽस्मानि[१] प्रजया पशुभिरित्यथैतेषामेकस्मिन्नापूर्यमाणपक्षे[२] पुरादित्यस्योदयाद्व्रजमभि प्रपद्यते । नैनमेतदहरादित्यो ऽभितपेत्तदह[३] स्नातानाम्[३] ऋ[४] वा[३] एष एतत्तेजसा यशसा तपत्यन्तर्लोम्ना चर्मणा व्रजमभिविशन्ति[५] । पूर्वार्धमध्ये व्रजस्याग्निमुपसमाधाय संपरिस्तीर्याहरत्यथैतान्संभारान्सकृदेव सर्वान्संस्पृश्य[६] सर्वाणि मानुषाणीत्यथैतस्माद्ब्राह्मणाद्दक्षिणतो[७] ब्राह्मणा[८] उपविशन्त्युत्तरत[८] उदपात्रं पालाशीं च समिधं निदधात्य-

---

१ Thus HB, ॰स्मानीति the other MSS. and Ed.

२ Thus MB, ॰स्मिन्नापेक्षमाण॰ H, ॰स्मिन्नापूर्यमाण॰ Ma TE and Ed

३ Thus all exc. Ma and Ed, which have तदह्नः i.s.o. तदह and E॰ ॰तदैनमादित्यस्तदह्नः स्नाता॰; Bhāradvāja also has the reading accepted by me on the authority of the best MSS (=तदहः-स्नातानाम् as a compositum?)

४ ॰मृ च वा only MT, ॰मुच्यते वा Ma, ॰मुच्यते the other MSS., मुच्यते वा Ed

५ ॰भिविशन्ति MSS (and Ed) exc E, which om. the second prepos., sp. supra XI 10 (p. 79, 4), XVI. 20 (p. 267, 1), XVIII. 18.

६ Thus MT, सर्वाणि i.s.o. सर्वान् HB; संभरति i.s.o. सर्वान् E Ma., Ed.

७ Before दक्षिणतो Ma ET and Ed. ins. इत्येषु ।

८ Thus M Ma HB; ब्राह्मणमुपरेमयन्तु॰ E; ब्राह्मणमुपविशन्तु॰ T.

परेणाग्निमुदीचीनप्रतिषेवणामेरकाꣳ साधीवासामास्तीर्य[1] तस्यां प्राङ्मुख उपविशत्युत्तरतो नापित उत्तरत उपसर्पणमामध्यंदिनं भिक्षां दद्यादपीह[2] गां पचेदथा पेदस्य[3] स्यादेता[3] पालाशीꣳ समिधमाज्येनाक्त्वा मध्यंदिने ऽभ्यादधाति ॥ ३९ ॥

इमꣳ स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया। भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहेत्यथैरकायामुदीचीनशिरा निपद्यते त्र्यायुषं[4] जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य[4] त्र्यायुषमृषीणां[4] त्र्यायुषं[4] यद्देवानां त्र्यायुषं[4] तन्नो अस्तु त्र्यायुषमित्युह्यमानमनुमन्त्रयते[4] शिवा मे भवथ संस्पृश इति क्षुरमभिमन्त्रयते क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीरित्युह्यमानमनुमन्त्रयते येन क्षुरेण वर्धयसि[5] वप्ता वपसि केशश्मश्रु वर्धय मे मुखं मा म आयुः प्रमोषीरिति मन्त्रवेवाथे वपते ऽथोपपक्षावथ केशान्यथोपपादमितराण्यङ्गान्यैतस्माद्ध्या[6] जरमा[6] पूर्वे आयुषि प्रयान्ति पूर्वं चायुष्मतां भवन्ति

---

१ Thus Ma TE, Ed., ॰मुपकृषोते M, HB om. this passage

२ ॰दपीह Ed.

३ Thus E Ma, वेदस्य स्याद॰ TH, वेदस्य स्याद॰ B; वेस्याद॰ M, वेदस्यस्याद॰ Ed.

४ Thus EM Ma G, Ed., त्रियायुष॰ THB Prm

५ Thus all exc. E॰ वर्धयसि and T वर्धसि।

६ Or should we write ॰जरमा? What may be the sense of these words?

य एवं विद्वाꣳसो लोमानि वापयन्ते । स यदि लोमानि वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीतार्थैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छता-द्इमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्तादिति । तानि स तत्र निदधात्यपरेणाग्निं प्राङ्मुख उपविश्य मेखलां विसृꣳसयत इमां विष्यामि वरुणपाशमिति । यो ऽस्य तत्र[1] राते: पुत्रो ऽन्तेवासी वा भवति तस्मै प्रयच्छतादिमाꣳ हृत्वा न्यग्रोधे वोदुम्बरमूले वा निधत्तादिति । तासु[2] स तत्र निदधातीदमहममुष्यामुष्यायणस्य शुचा पाप्मानमवगूहा-म्युत्तरस्य[3] द्विषन्त इति । वृक्कैः प्रधाव्य दन्तान्निधावयते[4] ऽन्नाद्याय व्यूहध्वं सोमो राजायमागमत् । स मे मुखं प्रमार्क्ष्यते यशसे च भगाय चेत्यथैनमपः संनिषिञ्चत्युपस्पृश्य शीता भावयति दैवमानुषस्य[5] व्याहृत्या इति । तामभ्यञ्जिनोपह-त्याभिषिञ्चत्यापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति तिसृभिः । षोढाविहितो वै पुरुष इत्येतस्माद्ब्राह्मणादर्थैतस्य[6] सर्वैसुरभिपिष्टैः समुद्राग्नत्य चि: प्रभिसृति ॥ ४० ॥

१ नखानीः T Ma.

२ Thus TM Ma., तासु EHB, Ed

३ Thus (अवगूहामि) MHB Prm Pám., अपगू० T Ma EG Pe Ed

४ Thus M Prm., ०धावयते all the other MSS and G, Ed.

५ देव० ET and Bhāradvāja, दैव० the other MSS., Ed. and the Prayogas.

६ ०चैतस्य Ma E, Ed., ०चैनस्य MHB T indistinct

नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभियाचिणीरित्यनुलिम्पते[१] ऽप्सरासु[२] च[३] यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धः स मामाविशताद्दित्यथाहृतं परिधत्ते सा मा तनूराविश शिवा मा तनूराविशेत्येवमेवोत्तरामन्यमेवमेवात[४] ऊर्ध्वमथैनं बादरं मणिꣳ सुवर्णोपधानꣳ सूत्रे प्रोत्य दर्भामाधाय दर्विदण्डे[५] स्रुवेण पर्यस्य जुहोतीयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चसिनमस्माद[६] करोतु स्वाहेत्यथैनमुदपात्रे[६] ऽनुपरिस्रावयति[६] विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विष इत्यपामार्गो ऽप्रोत्युक्तास्त्वया परिहरति वध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्याहृत्या इत्येतस्माद्ब्राह्मणादथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्भामाधाय दर्विदण्डे[७] स्रुवेण पर्यस्य जुहोत्यायुष्यं वर्चस्यꣳ सुवीर्यꣳ रायस्पोषमौद्भिद्यम्[८] । इदꣳ हिरण्यं वर्चसे [९]जैत्रायाविशतादिमꣳ[१०]

१ Thus Ma, Ed. ॰नुलिम्पेत्यप्स॰ E ॰नुलिम्पतेऽप्स॰ T ॰नुलिम्पेतप्स॰ M. ॰नुलिम्पेतप्स॰ HB

२ MTE and Ed om.

३ Thus (उत्तरांन्यम्) ET, Ed ॰मेवमत्यमेवे॰ M Ma HB corr

४ Thus M Ma दर्भो॰ ET Prm, and Ed , HB om

५ ॰स्विनम॰ HM Ma B ॰स्विनम॰ T, Ed F indistinct

६ Thus M , ॰दपात्रे परि॰ T Ma E Prm, Ed पात्रेणानुपरि॰ HB Pt.

७ Thus M Ma HB, दर्भो॰ EG and Ed.

८ ॰मौद्भिद्यम् M Ma G and Ed ॰मौद्भिदम् EHB Prm Pt

९ Thus MG, Ed जैत्राय॰ the other MSS and Prm Pt.

१० इमꣳ M Ma EG and Ed. इमाꣳ H इमा B

रयिꣳ स्वाहेति । द्वितीयां जुहोति शुनिमिवाहꣳ[1] हिरण्यस्य पितुरिव नामाग्रभैषम्[2] । तन्मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं[3] करोतु स्वाहेति । तृतीयां जुहोत्युच्चैर्वाजि[4] पृतनाषहꣳ[5] सभासाहं धनंजयम् । सर्वाः समग्रा ऋद्धयो हिरण्ये याः समाहिताः स्वाहेति । चतुर्थीं जुहोति विराजं च स्वराजं चाभिष्टिर्या[6] च मो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि स्वाहेति । पञ्चमीं जुहोति यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मि यशस्तव[7] स्वाहेत्यथैनामुदपात्रे[8] ऽनुपरिप्लावयति[8] विश्वा उत त्वया वयमित्येतया । तयोरन्यतरमादाय दक्षिणे कर्णे आबध्नीत[9] आयुष्यं वर्चस्यमित्येताभिः

---

१ Thus (शुनिम्) M Ma Prm Pś and Ed , शुनीम् EG ; शुनिम् HB ; शुनम् only Ks

२ Thus Pś ; नामाग्रभैषं Prm , नामाग्रहीषमथवं E ; नामग्रह M Ma BHG ; नामाथवं, Ed.

३ ॰स्विनम॰ M Ma HB ; ॰सिनम॰ EG and Ed

४ ॰र्वाजि all exc. G, which has rightly ॰र्वाजि ।

५ Thus the MSS. ; ॰षहम् the Prayogas

६ Thus Prm , चाभिष्टीया G चाभिश्रीया Ps चाभिष्टीर्या Pc , चाभिष्टीर्या M Ma and Ed. ; चाभिष्टीर्या E ; चाभिस्तार्या BH.

७ Thus M Prm Pc G , यशस्तव Ma E, Ed. , यशस्तव Pś , यशत HB.

८ Thus M , ॰पात्रेऽनुपरि॰ Ma E Prm, Ed. , ॰पात्रेणानुपरि॰ B ; ॰पात्रेणुपरि॰ H.

९ Thus HB ; आबध्नाति M Ma E Prayogas

मधुपर्कं प्रोक्षमभिमन्त्रयते स मावतु स मा पातु स मा जुषतामित्युभाभ्याꣳ हस्ताभ्यां प्रतिगृह्णाति ॥ ४३ ॥

आ[1] मा गन्वर्चसा यशसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति ब्राह्मणः । प्रियं पशूनां कुर्वधिपतिं प्रजानामिति राजन्यस्तस्मिꣳश्चेत्किंचिद्दापतितꣳ[2] स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति नेष्टाविद्धं हन्मामि या ते घोरा तनूस्तया तमाविश यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य समुदायुत्य त्रिः प्राश्नाति प्राण[3] दद्[3] ते वसिष्ठ हरामि श्रेष्ठं माधिपतिं कुर्विति । सोमो ऽसि सोमपं मा कुर्विति द्वितीयमन्नमन्नादं मा कुर्विति तृतीयं । त्रिः पीत्वोच्छिष्टं ददाति[4] । यथाकामः श्रेयाꣳसमभिध्यायेत्तस्मै शेषं दद्यादुपनीतां[5] गामनुमन्त्रयते[1] जहि मे पाप्मानमुपनेतुर्येति[6] । तां कुर्वन्ति वोत्सृजन्ति वा । स यदि करिष्यन्भवति कुरुतेत्याहाथ यद्युत्स्रक्ष्यन्भवति तामनुमन्त्रयते गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनाꣳ स्वसादित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागाम-

1 The mantras are abbreviated in the MSS
2 °तस्मिꣳश्चित्किं° MSS
3 प्राश्य MSS, probably read प्राश्येद् ।
4 om. M
5 Thus E °[illegible]° M
6 °मुपवेतुर्येति MSS

दिति वधिष्ट ॥ पिबन्तूदकं तृणान्यत्तोमुत्सृजतेत्यथास्मा ओदनमाहारयति । तमश्नाति मह्यं त्वाश्नातु मह्यं त्वाश्नात्विति । तच्चतुष्टयो ऽर्घो दधि मधु घृतमाप इति । पञ्चतय इत्येके दधि पयो मधु घृतमाप इति ॥ ४४ ॥ त्रयोदशः ॥

ब्राह्मणो ह सोमार्थः शुक्लेन पिङ्गाक्षेण मूर्धभिन्नेन[1] विश्ववता पथि समाजगाम । तं ह होवाच क्वया[2] विद्यां भगवन्तमिति । सोमो राजास्मीति हैनं प्रत्युवाच । तं मा कद्ध्वर्युरनैक्षायनविद्भ्यधीषीदचो[3] मा कद्ध्वर्युरनैक्षायनविदभिषुणोतीत्यमह[4] तत्र विश्ववाण्यंशावर्षौ ब्राह्मणो नैक्षायनानि वेद । तं गमिष्यामि । स मे[5] इमाम्वर्णाम्यङ्गरोपयिष्यतीति[6] । ते यथावभृथमवयन्ति[7] तदौदुम्बर्या शाखया पलाशशाखया वा स्रुवेण वामाज्यमिश्रेण दध्ना पयसा वा मधुमिश्रेण नैक्षायनेष्वंशोषमभिषुकृति । यत्ते ग्राव्णा चिच्छिदुः सोम राजन्नित्येतेनानुवाकेनाभिर्गाभिर्यद्दत्तो न जागमित्येतया

[1] मूर्धभिन्नेन M Be, मूर्धभिपिन्नेन the other MSS

[2] Thus M क्वं the other MSS.

[3] The reading कद्ध्व॰ is my conjecture M reads कहद्ध्व॰, but a horizontal stroke has been put above the ह, cancelling this akṣara कुद्ध्व॰ Be 7, कुद्ध्व॰ the other MSS —॰भ्यधीषीद् my conjecture ॰अधीषीद् M, ॰भ्यशीषीद् the other MSS.

[4] कद्ध्व॰ M कद्ध्व॰ Be 7, क्वध्व॰ or कुद्ध्व॰ the other MSS.

[5] om. M

[6] ब्राह्मणाः s o स्वाम् M, ॰रोपयिष्यामीति M.

[7] ॰यथावभृथ॰ M.

य चतुर्दशभिर्ऋजीषमभिजुह्वति । ते यथावभृथं संसिञ्चेयुस्तान्ब्रूयाद्ये[1] नु राज्ञस्त्वचं भित्त्वा क्रूरं कृत्वेह ग्रावभिः । ॥ ४५ ॥

अश्रमयित्वा नैष्ठायनैर्यन्त्येवैवं[2] कृतागसः ॥ ये सोममसंस्थाप्यापः संयान्ति सोमिनः[3] । संस्थितो न हत्वायन्त्यसुवैनाञ्छिनत्ति सः ॥ यथिद्यूलैरनुदन्ति यमस्य प्रतिषादने । यो ऽश्रमयित्वा नैष्ठायनैरथ नाकमधिरोहति ॥ वायुर्भूत्वा पवते त्रिदिवं नाकमुत्तमम् । यः श्रमयित्वा नैष्ठायनैरथ नाकमधिरोहति ॥ अध्वर्योर्यजमानस्य प्रतिप्रस्थातुराग्नीध्र[4] । ब्रह्मणो होतुरुद्गातु राजैषां लोकमादत्ते न चाहौयुश्चतुर्दश ॥ ये चतुर्दश जुह्वति दश[5] एताः स्वाहाकृतीः । नैषां राजा लोकमादत्ते न प्रजां नोत[6] वाजिनम् ॥ आप्याययन्तो राजानं ग्रावभिः क्रूरकृत्विजः । पयसा श्रमयन्तो ऽस्य जुह्वतैव चतुर्दशेति । ॥ ४६ ॥ चतुर्दशः ॥

अथ वै भवति ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति । वैमृधः पूर्णमासे ऽनुनिर्वाप्यो

---

१ यो । ० ये M

२ My conjecture, °नैर्यन्त्येवैव M, °नैष्ठान्येवं, आन्वेवं, आन्येवं the other MSS.

३ सौमिनः M

४ Thus Be 7, °स्थातुराग्नीध° D Be, thus also but °अ° Be, °स्थातेनैताग्नीधः M

५ दश Be 7, दशा the other MSS

६ सोम M, नोह the other MSS

भवति । तेन पूर्णमासः सेन्द्र । ऐन्द्रं दध्यमावास्यायां । तेनामावास्या सेन्द्रेति । केनो खिल्वौजानस्य सेन्द्रौ भवत इत्यैन्द्राग्नेन पुरोडाशेनेत्येव ब्रूयादित्यथ वै भवति देवा वै यज्ञमकुर्वत तदसुरा अकुर्वत । ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं । तां पौर्णमासꣳ संस्थाप्यानुनिरवपंस्ततो देवा अभवन्परासुरा । यो भ्रातृव्यवान्स्यात्स पौर्णमासꣳ संस्थाप्यैतामिष्टिमनुनिर्वपेत्पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्त इति ब्राह्मणꣳ । स एष भ्रातृव्यवतो यथाकामप्रयोगो[1] । मिथुनाभ्यामृक्सामाभ्यां । यावदेवास्यास्ति तत्सर्वं वृङ्क्त इति ब्राह्मणमथ वै भवति ॥ ४७ ॥

पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्यामिति । स[2] पौर्णमासीं पौर्णमासीमेव यजेत भ्रातृव्यवानमावास्याꣳ । हत्वा भ्रातृव्यं नाप्याययतीति ब्राह्मणं । तदेतस्त्वरणावगर्धं वापरोध्यावगर्धं[3] वेत्यथ वै भवति साकंप्रस्थायीयेन यजेत पशुकाम इत्येतयेष्ट्या यक्ष्यमाण उपकल्पयत औदुम्बरं महत्पात्रं प्रभूतमाज्यमित्यथ देवस्य त्वा सवितुः प्रसव इति[4] प्रतिपदं कृत्वाग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालमैन्द्रꣳ

---

१ यथाकामप्र॰ M

२ om. M.

३ परोध्यावगर्ध M, omitting वा, वापरोध्यावगर्धं all the other MSS.

४ इत्येवमेव M

सांनाय्यं । प्रसिद्धमाग्नेयेन चरित्वाथेतरयोर्हविषोरौदुम्बरे महति पात्रे समवद्यन्नाहेन्द्रायानुब्रूहीति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति । महता पूर्णꣳ होतव्यमित्यथाक्रम्याथाश्राव्याहेन्द्रं यजेति महेन्द्रमिति वा यदि महेन्द्रयाजी भवति । वषट्कृते सहैव पात्रेण जुहोति । रस एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति ब्राह्मणमथ वै भवति दारुपात्रेण जुहोति । [illegible] हि मृन्मयमाहुतिमानश । औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव । ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणं । तदेतच्छ्रावगर्धं[1] वा निर्विद्यावगर्धं[2] वेत्यथ वै भवति ॥ ४८ ॥

नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति । स[3] यो[3] ऽन्य[3] एतेभ्यो महेन्द्रमियक्षेत[4] स संवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ यामावास्यामच्छति तस्यां महेन्द्रं यजते । यो ऽत ऊर्ध्वं महेन्द्रयाज्येव भवत्यथ वै भवति संवत्सरमिन्द्रं यजेत । संवत्सरꣳ हि व्रतं नाति । सैवैनं देवतेज्यमाना भूत्या इन्धे वसीयान्भवतीति ब्राह्मणमथ वै भवति संवत्सरस्य परस्तादग्नये व्रतपतये

---

1 Thus M, ॰श्रावगमतो Be ॰श्चावगमतो Be 7 T D ॰श्चोवगमतो B

2 Thus M Be U, ॰गर्धं B Be 7 D

3 M सतपान्य L. स ऽ यो ऽन्य ।

4 Thus, ॰क्षेत, all

पुरोडाशमष्टाकपालं निर्वपेत्संवत्सरमेवैनं वृत्रं जघ्निवाꣳसमग्नि-र्व्रतपतिर्व्रतमालम्भयति । ततो ऽधि कामं यजेतेति ब्राह्मणमेव वै भवति ॥ ४९ ॥

नासोमयाजी संनयेदनागतं वा एतस्य पयो यो ऽसोमयाजी । यदसोमयाजी संनयेत्परिमोष एव सो ऽनृतं करोत्यथो परैव सिच्यते । सोमयाज्येव संनयेत्पयो वै सोमः पयः सांनाय्यं । पयसैव पय आत्मन्धत्त इति ब्राह्मणमेव वै भवति वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधꣳश्चरुं । ये ऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति । तस्या एता भवन्त्यग्ने दा दाशुषे रयिं दा नो अग्ने प्रदातारꣳ हवामहे प्रदाता वज्री प्र तत्ते अद्य किमित्ते विष्णो परिचक्ष्यं [1]भूदितीन्वौजानस्यायामीजानस्य[1] । व्यापन्नयैव[2] पूर्वया यजते[2] ऽव्यापन्नयोत्तरया[3] । न द्वे यजेत । यत्पूर्वया संप्रति यजेतोत्तरया छम्बट् कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट् कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुग्धोपगल्भो जायत । एकामेव यजेत

---

१ भूदितोन्वौजान° all

२ Thus MDU Be 7, °व्यापन्या° Bc.

३ Thus M, यजेताव्यापन्नयैवोत्तरया BU यजेताव्यापन्नयोत्तरया Be, thus also but यजेत D. The avagraha added by me

प्रगल्भो ऽस्य जायते ' ऽनादृत्य तद्द्वे एव यजेत ' यज्ञमुखमेव पूर्वयालभते ' यजत उत्तरया ' देवता एव पूर्वयावरुन्द्ध इन्द्रियमुत्तरया ' देवलोकमेव पूर्वयाभिजयति मनुष्यलोकमुत्तरया ' भूयसो यज्ञक्रतूनुपैतीति ब्राह्मणमथ वै भवत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके ऽर्धुकं भवतीति ब्राह्मणमथ वै भवति ॥ ५० ॥

दाक्षायणयज्ञेन सुवर्गकामो यजेत ' पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेतैतयेष्ट्वा यक्ष्यमाण उपकल्पयते ऽहतं वासो ' ऽथ पौर्णमास्या उपवसथे ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति ' सा प्रसिद्धेष्टिः संतिष्ठते ' ऽथास्यैतदहरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वाहृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रꣳ सांनाय्यꣳ ' सा दिष्टविरिष्टिः संतिष्ठते ' ऽथैतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्त्यथाहतं वासः परिधायापरपक्षं व्रतं चरति ' तस्यैतद्व्रतं नानृतं वदति न माꣳसमश्नाति [redacted] स्त्रियमुपैति नास्य पल्पूलनेन वासः पल्पूलयन्त्यथ यामावास्यागच्छति[1] तस्या उपवसथे ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति ' सा प्रसिद्धेष्टिः संतिष्ठते ' ऽथास्यैतदहर्मित्रावरुणाभ्यां वत्सा अपाकृता भवन्ति ' मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वाहृता तूष्णीं वाथ प्रातराग्नेय-

---

1 All the MSS exc. M om. the relative pronoun

मष्टाकपालं निर्वपति मैत्रावरुणीमामिक्षाꣳ । सा द्विहविरिष्टिः संतिष्ठते । वाजिनस्य काले वाजिनेन चरति । निधत्ते वासो । विसृजते व्रतं । विसृष्टव्रत एतं[1] पूर्वपक्षं भवत्यथ पौर्णमास्यागच्छत्युत्सीदति व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते । तदेतत्संवत्सरावरार्ध्यꣳ[2] सोमसꣳस्थम्[3] । ॥ ५१ ॥

अथैडादध इत्यापद्यते । समानं वासस्य व्रतपतेश्च । तथैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वाहृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यग्नीषोमीयमेकादशकपालमैन्द्रꣳ सांनाय्यꣳ । सा त्रिहविरिष्टिः संतिष्ठते । ऐतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्ति । तथाहृतं वासः परिधायापरपक्षं व्रतं चरत्यागच्छत्यमावास्या । [4]तस्या उपवसथे यजते । तथा मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वाहृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालं मैत्रावरुणीमामिक्षाꣳ । सा त्रिहविरिष्टिः संतिष्ठते[4] । वाजिनस्य काले वाजिनेन चरति । निधत्ते वासो । विसृजते व्रतं । विसृष्टव्रत एतं[5] पूर्वपक्षं भवत्यथ पौर्णमास्यागच्छत्युत्सीदति

1 एवं M.

२ Thus M ; °रावरार्ध Be, °रावरार्ध्ये Be 7 BDU

३ °सꣳस्था M

४...४ Thus M only, the other MSS are partly defective, partly corrupt

५ एवं M

व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते । तद्धैतत्संवत्सरावगधꣳ[1] सोमसꣳस्थम्[2] । ॥ ५२ ॥

अथ चतुश्चक्रो भ्रातृव्यवतो यज्ञः । समानं वाससश्चैव व्रतपतेश्च । तथैवैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वाहृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपति सरस्वत उपांꣳशुयाजमग्नीषोमीयमेकादशकपालमैन्द्रꣳ सांनाय्यꣳ । सा चतुर्हविरिष्टिः संतिष्ठते । उच्चैतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्ति । तथैवाहतं वासः परिधायापरपक्षं व्रतं चरत्या गच्छत्यमावास्या । नैवोपवसथे यजते । तथैव मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वाहृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपति सरस्वत्या उपांꣳशुयाजमैन्द्रमेकादशकपालं मैत्रावरुणीमामिक्षाꣳ । सा चतुर्हविरिष्टिः संतिष्ठते । वाजिनस्य काले वाजिनेन चरति । निधत्ते वासो । विसृजते व्रतं । विसृष्टव्रत एतं[3] पूर्वपक्षं भक्षयन्थ पौर्णमास्यागच्छत्युत्सीदति व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते । तद्धैतत्संवत्सरावगधꣳ[1] सोमसꣳस्थम्[2] । ॥ ५३ ॥

स एष चतुश्चक्रो भ्रातृव्यवतो यज्ञः । स यथा ह वा इदमनश्चतुश्चक्रं व्यवघ्नानमेत्येवꣳ[4] ह वा एष एतेन यज्ञक्रतु॰

१ Thus M ॰संवत्सरावगंधं Be ॰संवत्सरावराधं the other MSS

२ ॰संꣳस्थां M

३ एवं M

४ Thus M व्यवघ्नानं यत्ये॰ Be Bl व्यवघ्नान यत्ये॰ Be 7 D

नेष्टा पाप्मानं भ्रातृव्यं व्यवधान इति । स एष वसिष्ठयज्ञः केशियज्ञः सार्वसेनियज्ञो । वसिष्ठो ह यत्र सौदासानभिचचारैवꣳ हैनानभिचचार । केशी ह यत्र खाण्डिकमभिचचारैवꣳ हैनमभिचचार । सार्वसेनिर्ह यत्र भ्रातृव्यमभिचचारैवꣳ हैनमभिचचार । ॥ ५४ ॥ पञ्चदशः ॥

चातुर्मास्यैः सोमैर्यक्ष्यमाणो भवति । स द्वयान्त्संभारानुपकल्पयत आग्निष्टोमिकाꣳश्च वैश्वदेवसंभाराꣳश्च[1] । स[2] पुरस्तात्फाल्गुन्यै[2] वा चैत्र्यै वा पौर्णमास्या आमावास्येन हविषेष्ट्वा दीक्षते । तस्यापरिमिता[3] दीक्षास्तिस्र उपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यक्ष्ये[4] ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति । वैश्वदेवं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विमिथ्योपवसथ्यं प्रातस्तिष्ठन्हिंसंदिकवदेव[5] सूपाल्थ्यायाग्नेयं पशुमुपाकरोति । तस्य वैश्वदेव उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवीꣳषि । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरे-

---

1 Thus MD Be 7, वैश्वदेवसंभा॰ Be BU.
2 Thus M स om. B Be, पुरस्तात् om. B Be 7 DU.
3 Thus M Be 7 तस्या अपरि॰ Be BUD.
4 Thus MDI यक्ष्ये the other MSS.
5 भवति Be BU ins. after ॰वदेव।

त्र्यंबकैरेतद्हर्वरुणाय वत्सा अपाकृता भवन्ति । वारुणं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयांसि विग्रिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य वारुण उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तते वारुणी च काय्य[1] । प्रैषवन्तः सवनीयाः । अनुबन्धिह यजतीतरयोर्हविषोर्ऽग्जुधा सप्तदश उक्थ्यः संतिष्ठते । पुरस्ताद्धुतानां सोमानां वाजिनाभ्यां चरन्ति । समानं कर्मावभृथादयैतमिश्रमवभृथ उपादद्ते वारुणं निष्काम तुषानिति । वारुणस्य वारुणामिचाध्ववदानीया भवत्यृजीषेण सह तुषानंप्रकिरन्ति । प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै कायोपालम्भ्या[2] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । संतिष्ठते यथा द्विपशुः पशुबन्धस्तस्याथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्क्रमेतदेतानवसृतुं मासेषु ॥ ५६ ॥

साकमेधैः सोमेर्यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्यमहः संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथाद्दित्याथ वसतीवरीः परिहृत्य पयांसि विग्रिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति ।

---

१ काय्य च M

२ Thus M Be 7 काय उपालंभ्यौ or कायोपालंभ्यौ the other MSS.

तस्यानीकवत उपालम्भ्यो भवति। तस्य प्रातःसवनीयाननुवर्तत आनीकवतः। प्रैषवन्तः सवनीयाः। अनुब्रूहि यजेत्यानीकवतस्य। माध्यंदिनीयाननुवर्तते सांतपनः। प्रैषवन्तः सवनीयाः। अनुब्रूहि यजेति सांतपनस्यर्तुधैकविꣳश उक्थ्यः संतिष्ठते। ऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिष्योपवसत्यथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्व्येण[१] चरत्यथ प्रातराग्नेयं पशुमुपाकरोति। तस्य कैडिन उपालम्भ्यो भवति। तस्य प्रातःसवनीयाननुवर्तते कैडिनः। प्रैषवन्तः सवनीयाः। अनुब्रूहि यजेति कैडिनस्यर्तुधा त्रिणव उक्थ्यः संतिष्ठते। ऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिष्योपवसत्यथ प्रातराग्नेयं पशुमुपाकरोति। तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति। तस्य प्रातःसवनीयाननुवर्तन्ते महाहवीꣳषि। प्रैषवन्तः सवनीयाः। अनुब्रूहि यजेतीतरेषाꣳ हविषां। तृतीयसवनीयाननुवर्तन्ते महापितृयज्ञहवीꣳषि। स यत्र तृतीयसवने धिष्ण्यानभिहरति तदजग्रं मार्जालीयं करोति। समारूढेषु हविःषु गार्हपत्ये महापितृयज्ञहवीꣳषि श्रपयित्वा तैर्मार्जालीये प्रचरति। प्रैषवन्तः सवनीयाः। अनुब्रूहि यजेतीतरेषाꣳ हविषार्तुधा त्रयस्त्रिꣳश उक्थ्यः संतिष्ठते। पुरस्तादाग्रानामोमानां दैयमक्षैश्चरति। समाप्तं कर्मावभृथात्संसिद्धो ऽध्वर्य। उदय-

१ Thus Bc L., ०र्धेन M Bc 7 D

43

नीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै वैश्वकर्मण्युपालम्भ्या[1] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । तावनुवर्तन्त आदित्याः । प्रैषवन्तौ पशुपुरोडाशावनुब्रूहि यजेत्यादित्यस्य । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथायं पौर्णमासवैमृधाभ्यामिष्ट्वागमेनैतद्यातश्चतुर्षु मासेषु ॥ ५७ ॥

शुनासीरीयेण सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षास्तिस्र उपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञियेऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यैव वसतीवरीः परिहृत्य पयांसि विविच्योपवसथ्ययास्तेनाꣳ रात्रिं वायवे वत्सा अपाकृता भवन्ति । प्रातर्वायव्यं पयो दोहयति सांनाय्यस्यावृता तूष्णीं वायव्यं पशुमुपाकरोति । तस्यैन्द्र ऋषभ उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते शुनासीरीयहवींषि । प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाꣳ हविषामंशुधा ज्योतिरग्निष्टोमः संतिष्ठते । समानं कर्मावभृथात्प्रसिद्धो ऽवभृथः । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै[2] सौर्युपालम्भ्या[3] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ

1 Thus Bo 7; °कर्मण्योपा° Be, °कर्मण उपालम्भ्यो M.

2 तस्यै MU Be, तस्याः Bo 7 D; B om

3 Thus Be 7, सौर्योपालम्भ्या M, सौर्य उपालम्भ्यो Be U.

निर्वपति । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाय पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतत् । ॥ ५८ ॥ षोडशः ॥

अथातो ज्योतिरयनमित्याचक्षते । वैश्वदेवेन सोमेन यक्ष्यमाणो भवतीति समानौ प्रतिपदेतावदेव नाना । त्रिवृदसुचाग्निष्टोमो । ज्योतिरिहायानश्चतुर्षु मासेषु वरुणप्रघासेन सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे पश्चिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रचिह्नेन कर्मणोपवसथादित्यंधास्तैतदहर्दैया यस्या अपाकृता भवन्ति मरुद्भ्यो वरुणायेति । इयं पयो दोहयति सांनाय्यस्य वात्सता तूष्णीं वाय वसतीवरीः परिहृत्य यथाऽपि विशिष्योपवसन्त्यं प्रातराग्नेयं पशुमुपाकरोति । तस्य मारुतो वारुण इत्युपालम्भ्यौ भवतस्तस्य प्रातःसवनीयाननुवर्तन्ते यत्र वरुणप्रघासहवींष्यपि । स यत्र प्रातःसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेतीतरेषां हविषां । माध्यंदिनीयामनुवर्तते[1] वारुणी च कायश्च । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेतीतरयोर्हविषोर्जुधा ज्योतिरुक्थ्यः संतिष्ठते । समानमुत्तरं कर्म यथा द्विरात्रे तथायातश्चतुर्षु मासेषु ॥ ५९ ॥

१ Thus MDU, °वर्तेते the other MSS

साकमेधेन सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञियेऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्याथ वसतीवरीः परिहृत्य पयांसि विसृज्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्याग्नीकवतः क्रैडिनः प्राजापत्यस्तूपर इत्युपालम्भ्या भवन्ति । तस्य प्रातःसवनीयाननुवर्तत आग्नीकवतः । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेत्याग्नीकवतस्य । माध्यंदिनीयाननुवर्तते सांतपनः । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेति सांतपनस्य । तृतीयसवनीयाननुवर्तन्ते[1] गृहमेधीयप्रभृतीनि महाहवींषि । स यत्र तृतीयसवने धिष्णियान्विहरति तद्गार्हपत्यं मार्जालीयं करोति । महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरति[2] । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेतीतरेषां हविषामनुब्रूया ज्योतिरन्त्याः संतिष्ठते । समानमुत्तरं कर्म यथा त्रिरात्रे तथा । स एष[3] शुनासीरीयः । ॥ ६० ॥ सप्तदशः ॥

अथातो गर्गायत्र[4] इत्याचक्षते । ज्योतिरतिरात्र इत्येक आदीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा

1 Thus MD, °वर्तते the other MSS.
2 °रति Be Be 7 DU
3 Thus M, चंशेन Be 7, चर्षेण Be BDU
4 Thus M Be BC Kr5, महापितृयज्ञ Be 7 D

राजानं क्रीणाति यथा मन्यते पौर्णमासे मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथा-द्वेत्यथास्यैतदहस्तया वत्सा अपाकृता भवन्ति विश्वेभ्यो देवेभ्यो मरुद्भ्यो वरुणायेति । अयं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयांसि विग्रथ्योपवसथ्यं [1]प्रातस्त्रिवृद्बर्हिरेकवदेव[2] कृत्वाथाग्नेयं पशुमुपाकरोति । तस्य वैश्वदेवो मारुतो वारुण आनीकवतः क्रैडिनः प्राजापत्यस्तूपर ऐन्द्र ऋषभ इत्युपालम्भ्या भवन्ति । तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवींषि[1] प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषां । माध्यंदिनीयाननुवर्तन्ते सर्वाणि वरुणप्रघासहवींषि । ॥ ६१ ॥

स यत्र माध्यंदिनीये सवने धिष्णियान्विहरति तदञ्जसं मार्जालीयं करोति । समारूढेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषां । तृतीयसवनीयाननुवर्तन्त आनीकवतप्रभृतीनि महाहवींषि । स यत्र तृतीयसवने धिष्णियान्विहरति तदञ्जसं मार्जालीयं करोति ।

---

१ Between प्रातस् and त्रिवृद् Be 7 has the following words (प्रात)-राग्नेयं पशुमुपाकरोति तस्यानीकवतः क्रैडिनः प्राजापत्यस्तूपर इत्युपालम्भ्या भवंति तस्य प्रातःसवनीयाननुवर्तंत आनीकवत ऐन्द्रवतः सवनीया अनुब्रूहि यजेत्यानीकवत-(त्रिवृद्)।

२ Thus (एकवदेव) M Be 7, एकधैव Be U, एकवेव B, [illegible] om.

महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञस्थालीऽपि श्रपयित्वा नैमांशालीये प्रचरति । प्रैषवन्तः भवन्तीया । अनुब्रूहि यजेतीतरेयाह्न हविषामृद्धा ज्योतिरनिराचः संतिष्ठते । पुरस्ताद्वाग्नावोमाभ्यां वाजिनैश्चरित्वा चैयम्बकैश्चरति[1] । समानं कर्मावभृथादेतस्मिन्नवसरे उपाददते वारुण्ये निष्कासं तुषांस्मिति । वारुणस्य वारुण्यामिचायावदानीया भवन्त्यृजीषेण सह तुषान्संप्रकिरन्ति[2] । प्रविष्टो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै द्यावापृथिव्या काया वैश्वकर्मणी गौरीत्युपालम्भ्या भवन्ति । तस्यां प्रविष्टं पशाभिश्चरित्वा पशुपुरोडाशमिर्वपति । तामनुवर्तन्त आदित्यप्रभृतीनि शुनासीरीयपर्यन्तानि । प्रैषवन्तः पशुपुरोडाशा । अनुब्रूहि यजेतीतरेयाह्न हविषाह्न । संतिष्ठते यथा पशुपशुः पशुमन्वायतयथ पौर्णमासेनेष्ट्वाध्यामिदा यजमानायतन उपविश्य केशश्मश्रूणि लोमानि नखानि च क्षुरेण शीर्षाणि च वर्तयते परि च वपते पुरस्ताद्दक्षिणे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते चातुर्मास्याः सोमाः संतिष्ठन्ते चातुर्मास्याः सोमाः । ॥ ६२ ॥ अष्टादशः ॥

॥ इति सप्तदशः प्रश्नः[3] ॥

---

1 चैदै॰ MSS

2 ॰स्किरन्ति M

3 अथ ( = इति ) बौधायन चातुर्मास्यसूत्रे पञ्चमः प्रश्नः C

बृहस्पतिसवेन यक्ष्यमाणो भवति । स उपकल्पयते ऽश्वचतुस्त्रिंशा दक्षिणाः कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रमाज्यमभिषेचनार्थाय वै ब्राह्मणं भवति परिस्कन्नी होता भवत्यरुणो मिर्मिरस्त्रिशुक्ल इत्येष ह वै परिस्कन्नी यः खलतिः परिक्लेश्यो[1] । ऽय[1] हैव मिर्मिरो यः शुक्रो विक्लिधशिपिविष्टकवान्पिङ्गाक्षो[2] । ऽय हैव त्रिशुक्रो यस्त्रिवेदो[3] । दीक्षते । तस्यैकरात्रीणस्य सोमं क्रीणन्ति । तिस्र उपसदस्तायते त्रिवृदग्निष्टोमो रथंतरसामा प्रवर्ग्यवान्गायत्रीष्वेक स्तोमः । प्रज्ञातं देवसूनाꣳ हविषां करणं । तस्य बार्हस्पत्यो[4] ऽतिग्राह्यो[4] । बार्हस्पत्यः पशुरुपालभ्यः । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्र आज्यमानीयाभिषिञ्चति बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमाꣳसि ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण बृहस्पतिसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति[5] समानमा मुखस्य विमार्जनात् । ॥ १ ॥

---

१ Thus MB Be, परिक्लेश्य the other MSS

२ Thus D, तिलकावा० M Be 7 U, नीलकवा० Be, नीलकावा० B

३ Thus M, त्रिवेदो the other MSS

४ Thus M Be 7 D, ०पत्यग्राहिया० Bo BU

५ M reads समुत्क्रोशन्त्यथयजमानो + बृहस्पतिसवेनेति ।

तस्य प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा नीयन्ते । एकादश माध्यंदिने सवने सन्नेषु नाराशंसेष्वेवं द्वादशास्तृतीयसवने सन्नेषु नाराशंसेषु । माध्यंदिन एव सवने ऽयं दद्यादिति ह स्माह मौद्गल्यः । स वा एष[1] वैमार्जनो[1] यज्ञः । स यथा ह वा इयं गैरेयी[2] नदी[3] निम्नजघ्नीवष्[3] ह वा एष एतेन यज्ञक्रतुनेष्ट्वा पाप्मानं भ्रातृव्यं निम्नजघ्नीति[4] । स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भेदाच्छकाभ्यो । राजा राजसूयेनेष्यमाण इच्छति बृहस्पतिसवेनाभिषिच्येयेति[5] । तद्वा आहुर्न वै राजसूयाभिषिक्तो ऽन्येन यज्ञक्रतुनाभिषिच्येतामृत्यवरोधी ह[6] भवतीत्युभाभ्यां ब्रह्मसवाभ्यामभिषिच्या[7] इत्यभिषिच्येतैवेति[7] । दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः । समानमाभिषेचनीयस्य कालादभिषेचनीयस्य काले माध्यंदिनीया एवैनं यथा निम्नजघ्नी यन्ति । चतुर्विंश एव भवति ।

---

१ Thus M Be 7 D, स्वयमवैमार्जनो BU, स्व सयोविमार्जनो Be

२ Thus M; गैरेयी the other MSS ( U गोरेयोर् )।

३ नदी निम्नजघ्नीवष् M, नदीनिम्नघ्नेत्येवष् B, नदीनिम्नघ्नीत्येवष् Be 7 D; नदीनिम्नघ्नोत्येव U, नदी नीला धावन्निम्नघ्नीवष् Be Read perhaps: नदी निम्नजघ्नीत्येवष् i.e. निम्नजघ्नी इति, cp. infra निम्नजघ्नीति ।

४ निम्नघ्नीति Be 7.

५ Thus MD Be 7, °भिषिच्येति Be U, °भिषिच्येयेति B.

६ om M

७ Thus M only. °भिषिच्याथ इत्यभिषिच्येतैवेति U Be 7 D, °भिषिच्य'न इत्यभिषिच्येतेति B, °भिषिच्याभिषिच्येतैवेति Be

राजा राजसूयेन यक्ष्यमाण आख्यायति[1] त्रिषु वर्णेष्वभिषिक्तेष्वभिषिच्येय[2] पुरोहिते स्थपतौ सूत इति । पुरोहितो दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः । समानमाभिषेकस्य कालादभिषेकस्य काले शुक्रामन्थिनोः संस्रावेणाभिषिञ्चति । चतुष्टोम एष भवति ॥ २ ॥

स्थपति[3] स्थपतिसवेन यक्ष्यमाणो भवति स उपकल्पयत आर्षभं चर्म सुवर्णरजतौ च रुक्मावौदुम्बरं पात्रं दध्यभिषेचनाय । दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसद । आग्नेयस्य मारुती पृश्निः पष्ठौह्युपालम्भ्या भवति । सप्त हवींषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्यग्निमुखा ह्यृद्धिरित्येतानि । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतन आर्षभं चर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राङ्मुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यौदुम्बरे पात्रे दध्नाग्नीध्राभिषिञ्चति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण स्थपतिसवेनाभिषिञ्चामीति । समुन्मृष्टे समुन्मोगक्तीति समानमा मुखस्य विमार्जनात् एष स्थपतिसवः सप्तदशो ऽग्निष्टोम । एष एव स्थपतिसव । एष वैश्यसव[4] । एष मासमवो । मांमा हैनेनातः[5] पूर्वमीजिरे ॥ ३ ॥

---

१ ०आख्यायतीति M
२ Thus MD Be 7, ०षिच्येत् Be BU
३ om Be BU
४ वैश्यस्य सव Be 7
५ ६. ८ ० चत Be 7 चाम, D चर्म ।

सूतः[1] सूतसवेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रꣳ हिरण्यं घृतमभिषेचनाय। दीयते। तस्य तिस्रो दीक्षास्तिस्र उपसदो। ऽष्टौ हवीꣳषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्याग्नेयो वै ब्राह्मण इत्येतानि। समानमाभिषेकस्य। आगादेभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे घृतमानीय हिरण्येनोत्पूयाभिषिञ्चति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सूतसवेनाभिषिञ्चामीति। अनुसृष्टे समुत्क्रोशन्तीति। समानमा सुखस्य विमार्जनात्। एष सूतसवः सप्तदशोऽग्निष्टोमः। एष एव सूतसवः। एष ग्रामणीसवः[2]। एष क्षत्तृसवः। ऋतवो ह्येतेनातः पूर्वमीजिरे। ॥ ४ ॥ प्रथमः ॥

सोमसवेन यक्ष्यमाणो भवति स उपकल्पयते सौमीꣳ सूतवशां कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं पयो ऽभिषेचनायेति वै ब्राह्मणं भवति यत्किंच राजसूयमृते सोमं तत्सर्वं भवतीति। स आमावास्येन हविषेष्ट्वाथान्यानुमतप्रभृतिभिरेति संवत्सरं चातुर्मास्यैः सप्तेन्द्रतुरीयप्रभृतिभिरथ रत्निनाꣳ हविर्भिर्यजते। ऽथ देवसुवाꣳ हविर्भिर्यजते।

१ om. M.

२ ग्रामणि- M Bc.

ऽथैताꣳ सौमीꣳ सूतवशामालभते[1] । तस्या अवसुदिते यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राङ्मुखमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे पय आनीयाभिषिञ्चत्यषाढं[2] युत्सु पृतनासु पप्रिꣳ सुवर्षामप्सां वृजनस्य गोपाम् । भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सोमसवेनाभिषिञ्चामीति । समुन्मृष्टे समुन्मोक्ष्यामीति समानमा मुखस्य विमार्जनाद्य सꣳस्थाप्य हविर्भिर्यजते । ऽथ पञ्चहविषा दिशामवेष्ट्या यजते । ऽथ त्रिषंयुक्ता पशुबन्धेन यजते । ऽथ सात्यदूतानाꣳ हविर्भिर्यजते । ऽथ पूर्वैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ पैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते सोमसवो ऽर्धचतुर्दशैर्मासैः । ॥ ५ ॥

पृथिसवेन[3] यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहꣳ सुवर्णरजतौ च रुक्मावौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृता[4] । अथ वै ब्राह्मणं भवति

---

१ ॰भते MD Be UB, ॰भेत Be 7

२ The mantra is abbreviated in all the MSS.

३ पृथिवि॰ M, पृथिवी Be every time in this kh.

४ Thus M Be, समाहृता the other MSS

यत्किंच राजसूयमनुत्तरवेदीकं तत्सर्वं भवतीति । स आमावास्येन हविषेष्ट्वाष्टावन्यान्यनुमतप्रभृतिभिरेति सतोऽन्तुरीयप्रभृतिभिरेव रत्निनां हविर्भिर्यजते । ऽथ देवसुवां हविर्भिर्यजते । ऽथैतां चतुर्हविषमिष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुमिति । तस्या[1] मघवसुदिते[1] यजमानायतने रोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राङ्मुखमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे चतुष्टयीरपः समवनीयाभिषिञ्चति[2] ये ते पञ्चाशतं ददुरश्वानां सधस्तुतिः । द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम् ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै वाचो यन्तुर्यन्त्रेण प्रथिमवेनाभिषिञ्चामीति । सम्मृष्टे समुत्क्रामतीति समानमा सुखस्य विमार्जनादेव संसृपां हविर्भिर्यजते । ऽथ पञ्चहविषा दिशामवेष्ट्या यजते । ऽथोपातीत्य दिवसं पञ्चबिल्वं सात्यदूतानां हविर्भिर्यजते । ऽथ पूर्वैः प्रयुजां हविर्भिर्यजते । ऽथ पौर्णमासवैमृधाभ्यामितरोत्तरैः प्रयुजां हविर्भिर्यजते । ऽथ दैविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते पृथिसवो ऽध्यर्धेन[3] मासेन[3] । ॥ ६ ॥

---

१ Thus M, Be 7 DUB, मघावसु° Be.

२ Thus Be 7 DU; समानीय M Be B, but cp XII. 8 (p. 98, 5).

३ Thus M, अर्ध, र्धे, आसेन the other MSS.

गोसवेन यक्ष्यमाणो भवति स उपकल्पयतेऽयुतं दक्षिणाः सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं प्रतिधुगभिषेचनाय[१] । दीक्षते । तस्य षड् दीक्षाः षडुपसदः । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनमास्तृतं वेदेरनुद्धृतं भवति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्य पर्णमये पात्रे प्रतिधुगानीय[२] हरत सोमं प्रत्यभिषिञ्चति देवस्रातः सहसा दृढः क्षत्राणां क्षत्रपतमो वयोधाः । महाक्रमिले तत्सभागः क्षत्रे राष्ट्रे च जागृहि । प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामि ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण गोसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात् । एष गोसवः षट्त्रिꣳशः सर्व उक्थ्य उभयसामायुतदक्षिणः[३] । पवमाने कण्वरथंतरं कुर्वन्ति[४] । ॥ ७ ॥ द्वितीयः ॥

ओदनसवेन यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहꣳ सुवर्णरजतौ च रुक्मौ शतमानं च प्रवर्तं चतुरो वर्णान्ब्राह्मणꣳ राजन्यं वैश्यꣳ शूद्रं चतुरो रसांश्च घरी

१ Thus M Be 7 D, प्रतिधुग- the other MSS.

२ Thus M; प्रतिधुक्सामीय all the other MSS., but cp. Maitr. S. II. 2. 7, where the word is also used as a neuter (sc. पयः)

३ Thus Be 7 D, °सामायुतदक्षिणा M, °सामायुतदक्षिण° the other MSS.

४ Thus M, भवति the other MSS.

अथ चत्वारि[1] पात्राणि सौवर्णं राजतं कांस्यं मृन्मयं चतस्रो दक्षिणाः शतमानं हिरण्यं तिसृधन्वमष्टौ माषाः पूर्णं कमण्डलुं चतुष्टयीः शलाकाः पर्णमय्यौ मैत्रयोश्चावाम्नाय्यौ फाल्गुनपाण्यौ[2] चत्वारि नानारूपाणि पात्राणि चमूष्मतीनि दर्भपुञ्जीलान्यौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो द्विगवः संभृताः ग्रतं[3] च[3] एवं चैतेनोपक्रमेण रोहिणीमायतीमुपरमर्यथ[4] रोहिण्येति पूर्वाग्निमभ्यवव्युत्तपणीयम्[5] प्राचीनोऽस्याहार्यपचनमाहिताग्निरंपाध्वर्युरपरराव आवृत्य चत्वारस्येकौदनम्[6] श्रपयतीति । तं तथा श्रपयन्ति यथा पुरादित्यस्योदयाच्छृतो[7] भवत्युदिता सूर्येण कार्यं इति आज्यमन्वैतमोदनम् श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य नवनीतेनमसंस्थितोद्धरति । अथैरावेषणं हत्वा प्रभूतमाज्यमानीयाथैताश्चतस्रो वशान्वदिषिण उदच्चासुपवेगपत्यपाप्यारभ्ये यजमाने जुहोति [illegible] स्वाहा एत या

---

१ चतु॰ all.

२ Thus M; फाल्गुनपाण्यौ Be B; फाल्गुनपाणी DU; फाल्गुन्यौ पाणी Be.

३ Uncertain, ग्रतं च M, घर्तं च Be 7 D; घर्तं च BU; [illegible] (omitting च) Be

४ Read perhaps [illegible] i.s.o [illegible], cp. XIII. 36 (p. 145, 3), XV. 2 (p. 205, 10) and XVIII. 16.

५ ॰भ्यवधान्तु॰ M Be 7, ॰भ्यवधानु॰ Be BUD.

६ Thus Be BU; स्योदनम् M, ॰ओदनं Be BU.

७ Thus M Be 7 D, पुरस्तादादित्य॰ Be BU.

दृंहकाविति चतसः सुवाङ्गतीर्भाङ्गल्वैव मङ्गलानैः प्रवर्तमभिधारयति राडसि विराडसि सम्राडसि स्वराडसीत्यथैनां[1] प्रवर्तमपेणाहवनीयं[2] पर्याहृत्य दक्षिणतो निदधाति । ॥ ८ ॥

अथैतत्सौवर्णं पात्रं याचति । तस्मिञ्छिरः पवित्रं मध्वासीय सक्तूनोप्य पर्णमयीभ्याꣳ शलाकाभ्यामुपमन्थतीन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामीति । तेजो ऽसीति ब्राह्मणाय प्रयच्छति । तत्ते प्रयच्छामीति ब्राह्मणः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे तेजस्वदस्तु मे मुखं तेजस्वच्छिरो ऽस्तु मे । तेजसाभिषिक्तः प्रत्यङ् तेजसा संपिपृग्धि मेति । विराजस्य प्रमृशति । तस्मा एतस्यैव पात्रं ददाति यजमानं च हिरण्यमथैतद्राजतं पात्रं याचति । तस्मिञ्छिरः पवित्रꣳ सुरामासीय सक्तूनोप्य नैयग्रोधीभ्याꣳ शलाकाभ्यामुपमन्थतीन्द्राय त्वौजस्वत ओजस्वन्तꣳ श्रीणामीत्योजो ऽसीति राजन्याय प्रयच्छति । तत्ते प्रयच्छामीति राजन्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट ओजस्वदस्तु मे मुखमोजस्वच्छिरो ऽस्तु मे । ओजसाभिषिक्तः प्रत्यङ्ङोजसा संपिपृग्धि मेति । विराजस्य प्रमृशति । तस्मा एतस्यैव पात्रं ददाति तिरश्चीनं चाथैतत्कांस्यं पात्रं याचति । तस्मिञ्छिरः पवित्रं पय आसीय सक्तूनोप्याश्वत्थीभ्याꣳ शलाकाभ्यामुपमन्थतीन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामीति । पयो ऽसीति वैश्याय

१ ॰नैनं all exc. M

२ ॰मेवार्चि M.

प्रयच्छति तं प्रयच्छामीति वैश्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे पयस्वदस्तु मे मुखं पयस्वच्छिरो अस्तु मे। पयसाभिवृतः प्रत्यङ् पयसा संपिपृग्धि मेति चिराचम्य प्रशृष्णति तस्मा एतस्यैव पात्रं ददात्यथैतन्मृन्मयं पात्रं धावति सक्थिनरस्तिरः पवित्रमप आनीय भक्ष्योप्य फाल्गुनपात्रीभ्याम्[1] अक्ताकाम्यानुपमन्थतीन्द्राय त्वायुष्मत आयुष्मन्तं श्रीणामीत्यायुरसीति शूद्राय प्रयच्छति तं प्रयच्छामीति शूद्रः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट आयुष्मदस्तु मे मुखमायुष्मच्छिरो अस्तु मे। आयुषाभिवृतः प्रत्यङ्ङायुषा संपिपृग्धि मेति चिराचम्य प्रशृष्णति तस्मा एतस्यैव पात्रं ददाति माषैः पूर्णं कमण्डलुमथैतमोदनमभ्युत्सृज्य प्राश्नाति तस्य यत्र वहते तदप्सु प्रवेशयत्यथ हिरण्याहूतं निष्पिबति निष्पिबन्तमनुमन्त्रयत इममग्न आयुषे वर्चसे कृधि प्रियं रेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासदित्यथैतं प्रवर्तमद्भिः प्रक्षाल्य दक्षिणे कर्ण आबध्नीत आयुष्टे विश्वतो दधदित्यथैनमनुपरिवर्तयत्[2] आयुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसीत्यथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति यतो वातो मनोजवा यतः क्षरन्ति सिन्धवः। तासां त्वा सर्वासाम्

---

१ फल्गुनपात्रिभ्या M., फाल्गुनपात्रीभ्याम् Be 7 BUD. फल्गुनीभ्याम् Be.
२ Thus M., एतं i.s.o. एनं the other MSS.

ब्रह्मवर्चसायाभिषिञ्चामि वर्चसेत्यथास्य दक्षिणमक्षिकटं[1] न्यनक्ति[1] समुद्र इवासि गह्मना सोम इवास्यदाभ्यः। अग्निरिव विश्वतः प्रत्यङ् सूर्य इव ज्योतिषा विभूरिति ॥ ९ ॥

यावदेवाध्वर्युस्तिष्ठति तावदेव प्रतिप्रस्थातौदुम्बरे द्रोणे चतुष्टयीरपः समवनीय चतुरो ग्रहान्गृह्णात्यपां यो द्रवणे रसस्तमहमस्मा आमुष्यायणाय तेजसे ब्रह्मवर्चसाय गृह्णामीति पर्णमयेनापां य ऊर्मौ रसस्तमहमस्मा आमुष्यायणायौजसे वीर्याय गृह्णामीति नैयग्रोधेनापां यो मध्यतो रसस्तमहमस्मा आमुष्यायणाय पुष्ट्यै प्रजननाय गृह्णामीत्याश्वत्थेनापां यो यज्ञियो रसस्तमहमस्मा आमुष्यायणायायुषे दीर्घायुत्वाय गृह्णामीत्यौदुम्बरेणाथैनद्रोहितं चर्मानडुहं[2] प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्याभिषिञ्चत्यपां यो द्रवणे रसस्तेनाहमिममामुष्यायणं तेजसे[3] ब्रह्मवर्चसायाभिषिञ्चामीति पर्णमयेनापां य ऊर्मौ रसस्तेनाहमिममामुष्यायणमोजसे वीर्यायाभिषिञ्चामीति नैयग्रोधेनापां यो मध्यतो रसस्तेनाहमिममामुष्यायणं पुष्ट्यै प्रजननायाभिषिञ्चामीत्याश्वत्थेनापां यो

१ Thus Bc, दक्षिणमक्षिकटमुपाचनि M, दक्षिणे चाक्षिकटे न्यचनि BU, दक्षिणे चाक्षिकौटे न्यचनि Bo 7 D

२ All MSS. exc. M ins अथनेनाग्नि।

३ In Bo here and infra all the Datives (॰वर्चसाय, ओजसे, वीर्याय etc) are changed into Instrumentals H has everywhere las trum

45

यज्ञियो रथस्तेनाहमिममामुष्यायणमायुषे दीर्घायुत्वायाभिषिञ्चामीत्यौदुम्बरेण । समुन्मृष्टे समुन्मोयन्तीति समानमा मुखस्य विमार्जनादुत्तरत एतद्रूपायितऽ यतं[1] तिष्ठति रथश्च[1] तदभिप्रैत्यभिप्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा । आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रुवन्नित्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं याविति । रथमातिष्ठत्यातिष्ठ वृत्रहन्निति प्रतिपद्यायं पृणक्तु रजसी उपस्थमित्यातो ऽयैतच्छतं[2] त्रिः प्रदक्षिणं परियाय[3] पुरस्तात्प्रायाति । तदध्वर्यवे ददाति । स एष ओदनसवो राज्ञो वा ब्राह्मणस्य वा वैश्यस्य वा पुष्टिकामस्य यज्ञः । ॥ १० ॥ तृतीयः ॥

पञ्चशारदीयेन यक्ष्यमाणो भवति । स उपकल्पयते सप्तदश निरष्टान्वत्सतरानेकहायनान्स्त्पुरस्तान्मार्गशीर्ष्यै[4] पौर्णमास्या आमावास्येन हविषेष्ट्वा सप्तदश मारुतीः पृश्नीर्वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिः सꣳस्थां कुर्वन्ति । संवत्सरे पर्यवेते मरुद्भ्यः सांतपनेभ्यः सप्तदश पृषतीर्वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सꣳस्थां कुर्वन्ति । द्वितीये संवत्सरे

---

१ Uncertain again, cp p. 350, [illegible], सतं नि॰ रथं च M; सतं नि॰ र॰ च Be 7 D, सतं नि॰ रथस्य (omitting च) UB; विततिष्ठ॰ रथम् Be.

२ Thus M sec m, ॰संश्रित pr m, ॰सहस्र' Be 7 BDU; ॰तदृशं Be.

३ पर्याय M, परियाय B, परीयाय the other MSS.

४ Thus M Be; ॰शीर्ष्या॰ Be 7, ॰शीर्ष्ये DU; ॰शीर्ष्ये B.

पर्यवेते मरुद्भ्यो गृहमेधिभ्यः सप्तदश कल्माषीर्वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव संस्थां कुर्वन्ति । तृतीये संवत्सरे पर्यवेते मरुद्भ्यः क्रीडिभ्यः सप्तदशावलिप्ता वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव संस्थां कुर्वन्ति । चतुर्थे संवत्सरे पर्यवेते मरुद्भ्यः स्वतवद्भ्यः सप्तदश राजीवा[1] वत्सतरीरालभते[1] । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव संस्थां कुर्वन्त्यतदेवाहर्दीक्षते । संवत्सरमुख्यं[2] बिभर्ति । द्वादशोपसत्कस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदश उक्थ्यः सप्तदशो ऽतिरात्रसंस्थ मारुत स्तोमो भवत्यथैतेषां पशूनां त्रयः प्रथमे ऽहन्यैन्द्रामारुता उक्षाणः सवनीया आलभ्यन्ते । एवं द्वितीय एवं तृतीय एवं चतुर्थे । पञ्चोत्तमे ऽहन्यालभ्यन्ते । वर्षिष्ठमिव ह्येतदहर्मन्यन्ते वर्षिष्ठः समानानां भवतीति ब्राह्मणमथैतेषां पशूनां यदि नश्यति म्रियते वा याश्वमेधे प्रायश्चित्तिस्तां कृत्वान्यं तद्देवत्यं[3] तद्वर्णं तद्वयसं तद्रूपं[4] तज्जातीयं[4] पशुमालभन्ते । स एष पञ्चशारदीयो राज्ञो वा ब्राह्मणस्य वा । यः कामयेत

---

१ Thus Be 7, राजीवा D, राजीवं U, राजीवंस॰ Be, राजीवस॰ B, उक्थ्यो राजीवंस॰ M

२ ॰मुख्यं M.

३ तद्देवत्यं MSS

४ om. M

वर्चो भूयान्स्यामिति स एतेन यज्ञक्रतुना यजेत वर्चो हैव भूयान्भवति ॥ ११ ॥

अग्निष्टुता यक्ष्यमाणो भवति तस्य सर्वमेव समानं पुरोरुच एवान्याः अस्याजरासो दम आयूंषि पवस इत्यैन्द्रवायवस्य यज्ञा नो मित्रावरुणेति मैत्रावरुणस्याश्विना पिबतं सुतमित्याश्विनस्य द्वे विरूपे चरतः पूर्वापरं चरतो माययैताविति शुक्रामन्थिनोः स्तौषि सता यो यज्ञस्याग्निमित्याग्रयणस्य मिथुनस्तुवस्यास्य त्वया भुवस्याग्निनाग्निः समिध्यत इत्यैन्द्राग्नस्याग्निर्देवानां जठरमिति वैश्वदेवस्याग्निर्नियो यद्धुतम् ईडे अग्निं स्ववसमिति तिस्रो मरुत्वतीयानाम् शुचिं शुक्रार्थे वह्निभिरिति माहेन्द्रस्य विश्वपानदितिर्नियायां त्वे अग्ने त्वामग्न इति तिस्र आदित्यस्य[1] यज्ञस्य[1] त्रि सा यज्ञस्य साधनमिति सावित्रस्य त्वया पात्नीवतस्य नित्युग्मन्ति हारियोजनस्य स एष त्रिवृदग्निष्टुत्पवित्रं यथा ह वा इदं[2] दावादभिद्रुता[2] अभिदग्धाः[2] पुनर्णवा[3] ओषधयो सम्भु-त्तिष्ठन्त्येवं ह वा एष एतेन यज्ञक्रतुनेष्ट्वा शुचिः पूतो मेध्यो भवति स यदि सुखेन पापकमात्मने चिह्नं कुर्वीतेद ह वै

---

१ आदित्यवतस्य M

२ My conjecture, इदं हवादभिद्रुतादभिहता M, इदमभिद्रुताद्भिया B Bo 7 (pr. m.) D (pr. m.) U Bo (pr. m.); इदं दावादभिद्रुपोदं I 7 D in margin; इदं दैवा अभिद्रुतादभिहता Bo (sec. m.).

३ Thus Bo 7 BDU, पुनर्णवा Bo M.

मुखेन पापं करोति यो ऽनूचानस्य वा सुनेर्वा दुरवगतमवगच्छति । यदि बाहुभ्यां पञ्चदशं कुर्वीतैव ह वै बाहुभ्यां पापं करोति यो ब्राह्मणायोद्यच्छते । यद्युदरेण सप्तदशं कुर्वीतैव ह वा उदरेण पापं करोति यो ऽनाश्यास्यान्नमश्नाति । यदि पद्भ्यामेकविंशं कुर्वीतैव ह वै पद्भ्यां पापं करोति ॥ १२ ॥

य[1] आरट्टान्वा[1] गान्धारान्वा[2] सौवीरान्वा करस्करान्वा[3] कलिङ्गान्वा गच्छति । स यदि सर्वेण एव पापकल्मन्येन चतुष्टोमेनाग्निष्टोमेन यजेत । तेन हैतेनर्तुपर्णो भाङ्गाश्विन[4] ईजे[4] शफालानाम्[4] राजा । तेन हेन्द्र उपगयामभिप्रययौ । तम् ह इन्द्रो ऽनुख्यायैवेचां[5] चक्रे ऽहमु त्वा तथा तये[6] यन्मा[7] यज्ञक्रतोरन्तराय[7] इति । स ह क्षिप्र उदकमभ्यवेयाय[8] । तम् ह तथैव स्त्रियं चकार । सा सुदेवला नामास । सा हैतदेव राष्ट्रमभ्यवरोह । सा स्त्री सती पुत्राञ्जनयां चकार । तेभ्यो हेन्द्रः समदं दधौ । ते हता विद्रुताः शिश्यिरे[9] । तानुभया-

---

१ Thus Bo 7 D, धोराट्टान्वा M Be, धोराट्टान्वा B, धोरा न्वा U
२ कश्मा॰ M
३ Thus M Be 7 D, कार॰ Bo BU
४ ॰आश्विनष्ट रंजनीयानाष्ट M
५ ॰चां M Bo 7 U; ॰चां Be B
६ तथाज्ञातयेव M
७ i.e. यन्मा यज्ञ॰ Bo D  या संस्थायाना यज्ञ॰ ।
८ Thus M Be 7 D; ॰अभ्युपेयाय Bo B
९ Corrected, शि (or शि?) शिरे M  शिशिरे the other MSS

न्तरेण रुद्रक्ष्यायां चक्रे । उषो हैन्द्र आजगाम । तामु[1] हाभ्युपेयाय[1] । ताऽ होवाच सुदेवता३[2] इति[2] । भगव इति । प्रियं तवैतदिति[3] । किं मे भगवः प्रियं भविष्यतीत्येवं वै मम तदप्रियमासीद्यस्मा यज्ञक्रतोरन्तरायो वृणीष्व नु यतरे ते पुत्रा जीवेयुरिति । यानेव भगव स्त्री सत्यधर्ममभिति होवाच । तस्माद्राज्ञः स्त्रियाः पुत्राः प्रेथाश्वयो भवन्तीति । स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा श्रेषात्काल्ये । ॥ १३ ॥

इन्द्रस्तुता यक्ष्यमाणो भवति । तस्य सर्वमेव समानं पुरोरुच एवान्यास्तिष्ठा हरी यस्य रूपा सुते सचेतैन्द्रवायवस्यैन्द्रं वयं महाधन इति मैत्रावरुणस्य । द्विता यो वृत्रहन्तम इत्याश्विनस्य । स सूर आजमयज्ज्योतिरिन्द्रस्तुत त्यदाश्वश्वियमिति शुक्रामर्म्यिनोर्भरेष्विन्द्रमित्यायवस्य । मित्योक्थ्यस्य । मिथुनकि[4] भुवस्य । महि त्रेधं पुरु चन्द्रमित्यैन्द्राग्नस्यैतं गो लोकमसुनेषि विद्यामिति वैश्वदेवस्य । मित्रा मरुत्वतीयानां । नित्या

---

१ My conjecture; तामयोऽभ्युपेयाय B Bo, तामभ्युपेयाय M; ताम्पुपेयाय Bo 7 D; ताम्भ्युपेयाय U

२ सुदेवताऽ इति (this is the way in which Nandinâgarî expresses the pluti) M, सुदेवता इति Be Bo 7 D; सुदेवतेति BU. Properly speaking we expect सुदेवताऽ३ इति, pluti from सुदेवते ।

३ तवैतदिति all the MSS exc M, which reads तवैतात्त्वदिति, is pluti contained again in तवैतात् ?

४ नित्या M only

माहेन्द्रस्या नो विश्वाभिरूतिभिः कदाचन स्तरीरसीन्द्राय गाव आशिरमिति तिस्र आदित्यस्य[1] महश्चैमां[2] ते धियमिति सावित्रस्य नियुनक्ति पात्नीवतस्य नित्या हारियोजनस्य स एष पञ्चदश इन्द्रस्तदिन्द्रियकामस्य यो वा ज्येष्ठबन्धुरपभूतः स्यात्स एतेन यज्ञक्रतुना यजेताश्नुते हैव ज्यैष्ठताम् ॥ १४ ॥

अग्नीषोमीयेण यक्ष्यमाणो भवति दीक्षते तस्यापरिमिता दीक्षा द्वादशोपसदस्त्रिवृद्बहिष्पवमानः पञ्चदशꣳ होतुराज्यꣳ सप्तदशं मैत्रावरुणस्यैकविꣳशं ब्राह्मणाच्छꣳसिनस्त्रिणवमच्छावाकस्य त्रयस्त्रिꣳशो माध्यंदिनः पवमानश्चतुर्विꣳशꣳ होतुः पृष्ठꣳ रथंतरं च वैराजं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति चतुश्चत्वारिꣳशं मैत्रावरुणस्य वामदेव्यं च शाक्वरं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्यष्टाचत्वारिꣳशं ब्राह्मणाच्छꣳसिनो नौधसं च वैरूपं[3] च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्येकविꣳशमच्छावाकस्य कालेयं च रैवतं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति तमेतमष्टाष्ट इति छन्दोगा आचक्षते त्रिणव आर्भवः पवमानस्त्रयस्त्रिꣳशमग्निष्टोमसामैकविꣳशान्युक्थानि[4] षोडशिकानि पञ्चदशानीतराणि

---

१ आदित्यस्य॰ M Bo

२ om Bo 7 DU

३ Thus (and cp Sānkh. XV 7 4) M Tr U Bo Kes ; वैराज॰ वैराजं or वैरजं the other MSS

४ ॰न्युक्थानि M Tr ॰न्युक्थ्यानि all the other MSS

त्र्यवदशऽ[1] सप्तदशमेकविंशमथैतेषां देवता अग्निरिन्द्रो विश्वे देवा विष्णुरिति ॥ १५ ॥ चतुर्थः ॥

मृत्युसवेन यक्ष्यमाणो भवति स उपकल्पयते शार्दूलचर्म सुवर्णरजतौ च रुक्मौ वैयाघ्र्यावुपानहौ[2] वार्मपद्यावुपानहौ तार्प्यवाससं च क्षौमं च तिसृधन्वमासन्दीं साधीवासौ दुन्दुभिं विमितमौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृताः शंतं[3] च[3] रथं[3] चैतेनोपक्रमेण चिचामायती-सुपरमत्यय[4] चिनयेति पूर्वाग्निमन्वत्युत्तपतीवत् प्राचीनो ऽन्वाहार्यपचनमाहिताग्निर्यथान्वारब्धे यजमाने जुहोति यामो ऽयमग्नौ चरति प्रविष्ट इति षट् स्रुवाहुतीरथ यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु। यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन्राजानमधिविश्रयेममित्यथ वैयाघ्र्यावुपानहावुपमुञ्चते[5] वीरवीति दक्षिणे पादे पृथिव्यसीत्युत्तरे।

---

१ ॰दशं and the following, neutra HTr, पंचदश अष्टदश सप्तविंशतम॰ M, nominatives masc. the other MSS., cp also Rudr° on Āp l. c.

२ वैयाघ्रीयावु॰ M

३ Uncertain again, cp supra p 354, 3, शतं च रथं चै॰ M, सतं च रथ चै॰ Be 7 D, कचं च रथं चै॰ BU, सित च रथमे(तेनो॰) Be.

४ Probably M reads चय, perhaps rightly, i s o चय, cp supra p. 350, 7

५ वैयाघ्राव॰ Be U, वैयाघ्रियावु॰ M Be 7, वैयाघियावु॰ D, वैयाघ्रावु॰ B

ऽय दक्षिणं जान्वाच्याभिसर्पति व्याघ्रो वैयाघ्रे ऽधि विश्रयस्व दिशो महीः। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशदित्यथास्मै धनुः प्रयच्छति यथा राजसूये तथा ' तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे चतुष्टयीरपः समवनीयाभिषिञ्चति ॥ १६ ॥

या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष उत पार्थिवीर्याः। तासां त्वा सर्वासाꣳ रुचाभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसासिचं दिव्येन पयसा सह। यथासा राष्ट्रवर्धनस्तथा त्वा सविता करत् ॥ इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरः। रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥ वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसेति पुरस्तादेता एव तिस्रो ऽनुद्रुत्य रुद्रास्त्वा दक्षिणतो ऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसेति दक्षिणत ' एता एव तिस्रो ऽनुद्रुत्यादित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसेति पश्चादेता एव तिस्रो ऽनुद्रुत्य विश्वे त्वा देवा उत्तरतो ऽभिषिञ्चन्त्वानुष्टुभेन छन्दसेत्युत्तरत ' एता एव तिस्रो ऽनुद्रुत्य बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसेत्युपरिष्टादथास्योर ऊर्ध्वमुन्मृष्टे ऽरुणं त्वा वृकमुग्रं खजंकरमित्यथास्य बाहू अनुमार्ष्टि प्र बाहवा सिसृतं जीवसे न इत्यथैनमुपावहरतीन्द्रस्य[1] ते वीर्यकृतो बाहू उपावहरामीत्यथास्मै धनुः प्रयच्छति यदि पुरस्तादप्रत्तं भवति ' समुन्मृष्टे समुत्क्रोशन्तीति समामसा मुखस्य विमा-

१ °द्युपावहरतो° B, °रुपावहरतौ Bc Bc 7 UD, °रुपावहरतोऽस्य° M

आसन्द्यां निदधाति । तां तथा प्रत्यवरोहति यथा राजसूये तथा ॥ १७ ॥

यावदेवाचाध्वर्युर्येष्टति तावदेष प्रतिप्रस्थाता वारुणेन शृतेनोपरमति । वारुणस्य वारुणौ भवतः स्विष्टकृतः स्विष्टकृत्यावर्धमाना[2] एतच्छतं[3] ददात्यथैनं विमितेनाभिविघ्नन्ति[4] । तस्योत्तरार्धे दुन्दुभिमाघ्नयति । तमभ्युयात्यादित्य आघ्नन्त्यथैनम् यद्ग्रास्ति यजमान ग्रावं यच्च राष्ट्रे च जागृहीति[6] । सो ऽत ऊर्ध्वं वाचंयमो भवति । स यत्किंच व्याहरति ददामीत्येव व्याहरत्युपसंगच्छन्त एनमेते राजन्वहाः सूतग्रामण्यः[7] क्षत्तसंग्रहीतारः कारुविधा इति । तेभ्यः षष्ठौहीं वेहतं ददाति । तां ते पचमाना रमयन्तो जागरयन्त आसते । ऽपाध्वर्युरपररात्र आहुत्य चतुष्टयीनामपां प्रत्येकं मन्त्रमुपमथ्यावघ्राय[8] वामवघ्राय वा प्रयच्छति । तद् वद भक्षयति तूष्णीमथैनं भवनीतेनाभ्यनक्त्येना व्याघ्रं परिषस्वजाना इत्यथादित्यमुपचन्त-

---

१ मद॰ all MSS. exc M.

२ स्विष्टत्या॰ all exc. M.

३ Uncertain again; यतच्छं Be 7 BUD; यतच्छिं Be, M has a blank of two akṣaras.

४ Thus M, ॰विमिघ्नन्ति the other MSS.

५ Thus M; चराजस्ट॰ Be BU; चर्मास्ट॰ Be 7 D.

६ ॰किंचिद् M.

७ ॰ग्रामण्यः M.

८ उपमथ्य i.e. उपमथ्य all MSS.

९ Thus M Be; वद the other MSS.

सुपतिष्ठत उदपावेतु सूर्य उदिदं मामकं वचः। उदिहि देव सूर्य सह वग्नुना मम। अहं वाचो विवाचनं मयि वागस्तु धर्मसिरिति। राजगृहान्निष्क्रमतो ऽनुमन्त्रयते यन्तु नद्यो वर्षन्तु पर्जन्याः सुपिप्पला ओषधयो भवन्तु। अन्नवता-मोदनवतामामिक्षवतामेषाꣳ राजा भूयासमिति ॥ १८ ॥

अथैतद्द्वादशाहं[1] व्रतं चरति। स यदि प्राङ् वोदङ् वोच्चरति सार्षपचीर्भ्यां क्षौमं वसानो ऽथ यदि दक्षिणतः पश्चाद्वा वैयाघ्रीभ्यां कृष्णिवासं वसानो ऽथ द्वादशस्य व्युष्टायां द्वे स्रुवाहुती जुहोति ये केशिनो मर्त इति ताभ्यामेव प्रोष्ठमा-रोहयत्यारोह प्रोष्ठं विषहस्व शत्रूनित्यथास्य शिरः प्रमन्दयति[2] यत्सीमन्तं कङ्कतस्ते लिलेखेत्यथास्य केशान्वपति येनावपत्सविता क्षुरेणेति। प्रवपतो ऽनुमन्त्रयते मा ते केशाननुगाद्वर्च एतदित्यथैनान्समुचित्य दर्भस्तम्बे निदधाति तेभ्यो निधानं बहुधा व्यैच्छन्नित्यथैनमुष्णोदकेनाप्लावयति वर्चं ते चाडवोः सविता दधात्विति। तेन हैतेन मृत्युरीजे प्रजानामैश्वर्य-माधिपत्यꣳ राज्यं परीयामिति। ततो वै स प्रजानामैश्वर्य-माधिपत्यꣳ राज्यं पर्यैद्यः कामयेत समानानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत। समाना-नामैश्वर्यमाधिपत्यꣳ राज्यं पर्येत्यथ हैतेन सरथः ग्रैव्य[3] ईज

१ अथैतद्द्वा॰ M.

२ प्रमन्दयति M

३ [illegible]

ऽङ्गिरस आदित्यानभिप्रजग्मुरग्निना[1] सूतेन श्वःसुत्या न इत्यंयाज्याकमयस्त्वेति ॥ २२ ॥

आदित्याः प्रोचुस्तेषां नस्त्वꣳ होतेति । ते ऽमुमादित्यमश्वꣳ श्वेतं भूतं दक्षिणां निन्यिरे[2] हिरण्याभिभूतरश्मिं[3] । तस्मादेतस्मिन्क्रतौ श्वेताश्वो दक्षिणा हिरण्याभिभूतरश्मिः । यच्छ्वेताश्व आदित्यस्य तद्रूपमथ यद्धिरण्याभिभूतरश्मी रश्मीनां तत्तस्य त्रिवृतः शतश्चतुर्विंशौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिꣳशꣳ होतुः पृष्ठं । चतुर्विंशममग्निष्टोमसाम । त्रिवृदन्यत्सर्वꣳ । श्वेतमश्वं ददात्यनुक्रिया यक्ष्यमाणो[4] व्रीहिषु दीयते । स द्व्यहेन संतिष्ठत औपवसथ्यादेकमहः[5] सुत्यमेकमहस्तस्य त्रिवृत एव शतश्चत्वारिꣳशौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिꣳशꣳ होतुः पृष्ठं । चतुश्चत्वारिꣳशममग्निष्टोमसाम । त्रिवृदेवान्यत्सर्वꣳ । श्वेतां वडवां ददाति । परिक्रिया यक्ष्यमाणो माषेषु दीयते । स द्व्यहेन संतिष्ठत आ क्रयादेकमहरौपवसथ्यादेकमहः[6] सुत्यमेकमहस्तस्य त्रिवृत एव शतो ऽष्टाचत्वारिꣳशौ माध्यंदिनार्भवौ भवतो । ऽष्टाचत्वारिꣳशꣳ होतुः पृष्ठमष्टाचत्वारिꣳ-

---

१ ०श्व० found in M only.

२ Thus M; all the other MSS more or less corrupt.

३ Thus here and infra all the MSS.; are we to read अभिहित० i.e. अभिभूत० ?

४ All MSS. exc. M ins. यजति ।

५ औपवसथ्याद० or औपवसथाद० MSS

६ Thus M., औपवसथाद० the other MSS

ग्रमग्निष्टोमसाम । चित्रदेवान्यजते । यथाश्रद्धं ददात्यतिक्रिया यक्ष्यमाणस्तिलेषु दीयते । स चतुरहेण संतिष्ठत आ कथादेकमहरोत्तरवेदेरेकमहरौपवसथ्यादेकमहः[1] सुत्यमेकमहर्यसुष्टोम एव भवति । ॥ २३ ॥ षष्ठः ॥

व्रात्यस्तोमेन यक्ष्यमाणो भवति । ते राजनि वा ब्राह्मणे वा प्रतिपदमिच्छन्त आसाय वर्तन्ते वा । ते यमभिषंजानते तम्ᳲ स्थपतिं कुर्वन्ति । स एषां व्रतानि चरति । सो ऽधःसंवेश्यमाᳲसाश्यस्त्र्युपायी भवति । तद्धि दीक्षितव्रतमेव यत्कृष्णं वासः कृष्णदूषं परिधत्ते दीक्षितवसनस्य[2] तद्रूपमेव यत्कृष्णवसस्त्वाजिने धारयति कृष्णाजिनयोस्तद्रूपमेव यत्सुवर्णरजतौ रुक्मौ बिभर्ति परिचर्म्ययोस्तद्रूपमेव यत्कृष्णमुष्णीषं धारयति दीक्षितोष्णीषस्य तद्रूपमेव यच्चर्ममयैर्बाणवद्भिर्विस्फुरधन्वं धारयति दीक्षितदण्डस्य तद्रूपमेव यद्व्रात्यवादं वदति दीक्षितवादस्य तद्रूपमेव यत्कुर्यावुपानहौ[3] धारयति नेद्दीक्षितः स्वमेध्यमधितिष्ठानीति[4] तर्त्तस्य ह वा एतद्रूपस्य यद्यस्य प्रतोददण्ड एव यूपः । प्रतोदपरिषेवण[5] यथासह् । रथमुखमा-

---

१ Thus M, •दौपवसथाद• the other MSS.

२ Thus M, •वसनीयस्य D, •वसनीयस्य Be 7; the other MSS. still more corrupt

३ Thus M; यत्सुर्यांगावुपानहौ Be 7 D, यत्सुपावुपानहौ B Be U

४ Thus Be 7, •तिष्ठानीति M.

हवनीय । ईषे[१] वेदिर्युगमुत्तरवेदिरुत्तरयुगमुत्तरनाभिर्धुर्यौ[२] हविर्धाने । पक्षसी आग्नीध्रीयमार्जालीयौ । कूबरꣳ सदः । किंकरावताना[३] धिष्णिया । बन्धुरं[४] पत्नीशालꣳ । रथोपस्थौ गार्हपत्यो । ऽधिष्ठानं पुराणगार्हपत्यस्त्वसजं प्रमार्यं[५] पचन्ने स एवां पशुर्यमपूपꣳ स्थालीपाकꣳ स चरुपशुपुरोडाशौ । यां परिष्कन्दꣳ[६] कथयति सा पुरोनुवाक्या । यदाहरति सा याज्या । यदश्नाति स वषट्कारो । यां कुम्बां[७] विमते सा पुरोनुवाक्या । यामधीवाक्याꣳ[८] सा याज्या । यां विगणꣳ[९] कथयति स प्रस्तरः[१०] प्रतिगरो[१०] । यदभिक्रोशन्ति स उद्गीथस्तं य एवमेतं यज्ञक्रतुं परोक्षमुपेत्य[११] प्रत्यक्षं नोपेयुः ॥ २४ ॥

यथा दीक्षिताश्वकीर्णा विच्छिन्नसोमपीथा अनाध्याता एवꣳ स्तुसंस्थाद्व्रात्यावस्थितस्य[१२] व्रात्यस्तोमेनाभीजानस्य भाग्य ।

१ Thus corrected; ईषो M, ईषा the other MSS
२ Thus M, धमुषो the other MSS.
३ Thus M, किंक (or कु)रावता the other MSS.
४ बंधुरं M; बधुरं Be
५ Thus M, प्रमार्य Be, प्रमाय Be 7 BUD
६ परुकंदं MSS exc M
७ कुंभ्यां MSS exc M.
८ °मधिवाक्यं MSS exc M.
९ प्रवं MSS exc M.
१० प्रस्तरप्रतिगरो MSS exc M
११ परोक्षमुपेत्य Be BU, परोक्षामुपेत्य Be 7, पुरोक्षमुपेत्य M.
१२ °स्थाद्व्रात्या° I 80 °स्थाव्रात्या° M.

विच्छिन्नसोमपीथ इव ह्येषो ऽनाश्यात्संस्तेषां ये ऽनाहिताग्नयस्ते यथागृहं विपरेत्याग्नीनाधाय त्रयस्त्रिꣳशतावयस्त्रिꣳशता दक्षिणाभि स्थपतिमुपसमायन्ति । तेषां ब्रह्मबन्धुर्मागधो मागधवाक्यो ब्रह्मबन्धुरपुꣳश्चलू पुꣳश्चलूवाक्या जरत्कूटथो जरत्प्रयोग्याभ्यां[1] युक्तो । वृद्धो वा एष यो ब्रह्मबन्धुर्मागधो मागधवाक्यो । वृद्धा ब्रह्मबन्धुरपुꣳश्चलू पुꣳश्चलूवाक्या । वृद्धो जरत्कूटथो जरत्प्रयोग्याभ्यां[1] युक्तो । वृद्धेनैव वृद्धं निरवदयते तदेनद्व्रात्यधनꣳ समवयान्तं दण्डोपानहꣳ ग्रामूत्ताजिनꣳ[2] । रथे तिष्ठन्सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति । दक्षिणानां भाग एतदेवास्य भवत्यृत्विजो दक्षिणा विभजन्ते । तस्य प्रातःसवनीयाननुवर्तन्ते संग्राम्यै हवीꣳष्यसंग्रातमिव वा एते चरन्ति ये व्रात्यं चरन्ति । समेवैनान्ग्रापयन्ति । माध्यंदिनीयाननुवर्तन[3] ऐन्द्रामारुत[4] एकादशकपाल[5] । ऐन्द्रो वै व्रात्यो मारुतो ग्रामो । ग्रामेणैवैनान्त्समीचो दधाति । तृतीयसवनीयाननुवर्तन आदित्येभ्यो भुवद्वद्भ्यश्चरुंभृता इव वा एते चरन्ति ये व्रात्यं चरन्ति । भूतिमेवैनान्गमयन्त्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तन्त आदित्य-

---

१ ॰प्रयोभाभ्यां MSS exc M.

२ ग्राम्लूकारिनं M , ग्राद्धूखाजिनं the other MSS, but cp Karmānta.

३ ॰वर्तन all

४ ॰मारुता all

५ ॰कपाल M , ॰कपाला the other MSS , this passage is missing in Bc 7 D

अप्रतिष्ठिता इव वा एते चरन्ति ये सत्त्रं चरन्तीयं वा अदितिरस्यामेव प्रतितिष्ठन्ति । ॥ २५ ॥

स एष ज्येष्ठानामग्निष्टोमसंस्थ चत्वारि षोडशानि द्वौ पवमानावुभे चाच्छावाकस्य स्तोत्रे । एष एव[1] सक्रुनीयमामुक्थ्यसंस्थः षट् षोडशानि सर्वे पवमानाः सर्वाण्यच्छावाकस्य स्तोत्राणि । तेन हैतेन मरुत ईजिरे । तेषां विष्णु स्थपतिरासीद्यो[2] हैतेन दैक्षा सात्या ईजिरे । तेषां बुधः सौम्य स्थपतिरासीद्यो हैतेन कुरुपञ्चालानां पुत्रा ईजिरे । तेषामौपोदितिर्गौपालायनो वैयाघ्रपद्य स्थपतिरास । तेन हैषा पञ्चाशन्मात्या अभिप्रययुस्तांश्च पितर ऊचुर्मा पुत्रकाः पञ्चाशान्यासिष्टोपवादिनो वै पञ्चाशा उप वो वदिष्यन्तीति । नाद्रियमाणा इत्यैव प्रययुस्ते ह केशिनो दार्भ्यस्योपवसथमाजग्मुस्तांश्च श्वो भूते यक्ष्यमाणान्त्सर्पतो[3] ऽभ्यावेभिरे पवित्रं वै यक्ष्यमाणा आत्मानं पवयिष्यामह इति वदन्तो । ऽथ ह पञ्चालेषु गन्धर्वायणो बालेय आग्निवेश्यो ऽनूचान आस । तान्ह[4] सह[4] सर्पतः पप्रच्छ के सर्पन्तीति[5] । वयं मरुत इति । तेषां वः क स्थपतिरित्ययं विष्णुरित्यौपोदितिर्गौपालायनो वैयाघ्रपद्यः प्रत्युवाच । यस्मिंश्च कार्यं कस्तस्यारेतीति ह परोक्षामतमनु-

१ om M

२ स्थपतिरास तेषां Be.

३ सर्पन्तो MSS exc M

४ तान्हाप्य एव M. तान्हव UB Be, त्रयाद Be 7 D.

५ Thus M, सर्पन्तीति the other MSS Read perhaps सर्पथेति ?

निर्दिदेशेति[1] । तान्होवाचाविदुषो व उपावादिषाप वो क्रुमह इति । पिता वै[2] तत्पुत्रानुपावादीदिति हैनमूचुः पापीयसी ते प्रजा भविष्यतीति । तथा[3] हैवास[3] । ततो[4] ह वा एतत्पञ्चालेषु गन्धर्वायणा वालेया आग्निवेश्याः पापायिता इव[4] मन्त्राकुर्वंश्च ह[4] तत्पुरा[4] बभूव । स यो भ्रातृव्यमुपवदेदेवमेवैनमुपवदेदथ यो भ्रातृव्यो ऽलं प्रतिवचनाय स्यादेवमेवैनं प्रतिब्रूयात् । ॥ २६ ॥

अथातो भाक्तविलोमा इत्याचक्षते । त्रिवृदभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । पञ्चदशमभ्यावर्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । सप्तदशमभ्यावर्त्येकविंशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । एकविंशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रिणवमभ्यावर्ति त्रयस्त्रिंशमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रयस्त्रिंशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रिणवमभ्यावर्त्येकविंशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । एकविंशमभ्यावर्त्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । सप्तदशमभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । पञ्चदशमभ्यावर्ति त्रिवृदग्निष्टोमसाम सर्वे षोडशाः पवमानाः । ॥ २७ ॥ सप्तमः ॥

---

१ Conjecturally, परोक्षात्स्वमनुदिनिदेशेति M, परोक्षादस्वमनुनिर्देशेति Be 7 DU, परोक्षादस्वमनुदिदिशेतिने B, परोक्षाद् स्वमनुदिदिशेति Be

२ All MSS exc M ins the aksara क्षा ।

३ तथाचैवसासतो MSS.

४ Th M चैतत्परा the other MSS

अथ वै भवति देवा वै यज्ञे ऽकुर्वत तदसुरा अकुर्वतेति । स ईक्षां चक्रे प्रजापतिः कथं[1] न्वहमसुरैर्देवान्व्यावर्तयेयमिति । स एतं यज्ञक्रतुमनिरुक्तमुपहव्यमपश्यत्तं छिद्रेणानुपाक्रयतेति । स यदाह प्रातर्यावभ्यो देवेभ्य इति महद्भ्यः प्रातर्यावभ्यो देवेभ्य इति तदाहाय यदाह सोमः पवत इतीन्दुः पवत इति तदाहाय यदाहेन्द्राय पुरोडाशानामिति शक्राय पुरोडाशानामिति तदाहाय यदाह वायव इन्द्रावायुभ्यामिति नियुत्वते शक्रनियुद्भ्यामिति तदाहाय यदाह मित्रावरुणाभ्यामित्यृतायुभ्यामिति तदाहाय यदाहाश्विभ्यामिति नासत्याभ्यामिति तदाहाय यदाहेन्द्राय सोमानिति शक्रायेन्दूनिति तदाहाय यदाहेन्द्राग्निभ्यामिति शक्रजातवेदोभ्यामिति तदाहाय यदाह विश्वेभ्यो देवेभ्य इति महद्भ्यो विश्वेभ्यो देवेभ्य इति तदाहाय यदाहेन्द्राय मरुत्वत इति शक्राय गणवत इति तदाहाय यदाह महेन्द्रायेति महते शक्रायेति तदाहाय यदाहादित्येभ्य इति महद्भ्य आदित्येभ्य इति तदाहाय यदाह वनस्पतय इति वनर्नृपायेति[2] तदाहाय यदाह देवाय सवित्र इति महते[3] देवाय सवित्र इति तदाहाय यदाह विश्वेभ्यो देवेभ्य इति महद्भ्यो विश्वेभ्यो देवेभ्य

---

१ कथन्न्वहमसु॰ M, कथमन्वहमसु॰ Be 7 D, कथयन्कथमसु॰ Be BU.

२ Conjecturally, वनेर्षपायेति M, वनेनक्षवयेति Be 7 D, वनेनक्षवयेति B U वनेनर्षपायेति Be

३ Thus M, महचे Be 7 Bo D, महद्ते BU.

यश्यो वा[१] यज्ञः[१] । प्रजापतेरुदक्रमत्ताय । यः पाप्मना भ्रातृव्येण व्याविवत्सेत[२] स एतेन यज्ञक्रतुना यजेत । व्येव पाप्मना भ्रातृव्येणावर्तते । इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवा यज्ञेनान्वैषुस्[३] प्रसमाभिर्[४] दुद्रुवं[४] वक्रिरे[४] भूयो भागधेयं भूयसीं प्रीतिमभ्युपावर्त्स्यतीति[५] वदन्तः । स ह प्रातःसवने माजगाम । ते[६] सर्व एव प्रातःसवनस्य भक्षयां[७] चक्रुः[७] । को ह्यपेन्द्रस्य[८] सोमस्य भक्षयिष्यतीति । तद् संतिष्ठमाने प्रातःसवने उच्छावाकस्य शस्त्रं प्रति[९] जग्मुस्[१०] सर्व एव समसाध्वर्येव मामन्दिनो

---

१ Thus M; वाचः the other MSS

२ Thus corrected (cp. Sat Br XII. 4 4 2), व्याविवत्सेति all exc. M, which has व्याविवर्त्सेद् ।

३ यज्ञेनैषुस्ते M; यज्ञेनैषुस्ते the other MSS.

४ प्रसमाभिरं दुद्रुवं वक्रिरे Be 7 Be D; प्रसमाभिरं दुद्रुवे वक्रिरे B; प्रसमाभीदुंवा वक्रिरे M; cp on this passage Pañc Br. XVIII. 5. 12

५ ०पावर्तिंस्यतीति M.

६ I.s.o. ते (thus M Be B), ततः Be 7 D.

७ Thus M; भक्षयां चक्रुः or भक्षयांचक्रुः the other MSS. (in Be 7 the passage is missing). Probably the negation has fallen out somewhere

८ ह्यपेन्द्रस्य M

९ प्रतिपति M.

१० Thus my conjecture, जग्मुस्ते M, जग्मुस्ते or जग्मुस्ते the other MSS.; cp Āp. śrs XXII 10. 13.

ऽच्छावाकस्य शस्त्रं प्रत्यागरितुं[1] दध्रिरे[2] । सेन्द्रा इव ह्यमन्यन्त । तस्मात्तीव्रसोमे सर्व एव चमसाध्वर्यव आनन्दिनो ऽच्छावाकस्य शस्त्रं प्रत्यागृणन्ति[3] । सेन्द्रा इव हि मन्यन्ते । तर्हि वाव तदासीत्तद्वा आहुः सर्व एवैतर्हि यज्ञः सेन्द्र इति । तमु हाभिपुपुवुः[4] ॥ २९ ॥

इहा इहा इहेतौहेहोहेहोहेहीति[5] स वा एवं तदूचुरीह-हूयहूयदितीदं[6] ते एच्छदथाधं तदभ्युपावर्तस्वेति स वा एवं तदूचुर्यदेतन्माध्यंदिनस्य सवनस्यान्यचापि भिद्रामहे । स॰ ष्टुतकलशमेकधनानां[7] प्रातःसवने ऽवनयेद्दधि माध्यंदिने सवने । विमथितं तृतीयसवने । साक्षं तीव्रता । सप्तदश स्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । गर्भिणी वडवा सशामी दक्षिणेन्द्रियं वै गर्भ । इन्द्रियं सशामः । सेन्द्रियत्वाय[8] । यो ज्यान्या वोपतपता वाभिमानी गीतः स्यात्स एतेन यज्ञक्रतुना यजेताप्नुते हैव तीव्रतामिन्द्रो ऽकामयत वि पाप्मानं हनीय

---

१ Thus M only, प्रत्यावर्दं or ॰वर्तुं the other MSS.

२ M ins. च before दध्रिरे ।

३ प्रतिगृ॰ MSS. exc. M

४ Thus M, स वा अभि॰ U, सवाभि॰ Be B, सवाभि॰ Be 7 D

५ Thus M Be B, इहे वौहे इहे इहेहीति U, Be 7 D (which write only once इहा) : इहेहिहेहिहेहिहेहीति ।

६ Before इदं M has once more हूयद् ।

७ Uncertain, M reads as above given, धन्तितकलशं Be 7 UDB, स्त्वितकलशं Be.

८ Thus M Be BU, सेन्द्रत्वाय Be 7, सेन्द्राय D.

श्रैष्ठ्यं देवानां गच्छेयमिति ' स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत ' ततो वै स वि पाप्मानमहत श्रैष्ठ्यं देवानामगच्छद्यः कामयेत वि पाप्मानꣳ हनीय श्रैष्ठ्यꣳ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेत ' व्येव पाप्मानꣳ हते श्रैष्ठ्यꣳ समानानां गच्छति ' तस्यातियाह्यो वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधस्पदं तमीं कृधि यो अस्माꣳ अभिदासत्युपयामगृहीतो ऽसीन्द्राय त्वा विमृधाय जुष्टं गृह्णामीति ' परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा विमृधायेति ' तस्य त्रिवृत्पञ्चदशौ विपर्यासꣳ स्तोमौ भवतस्तेः षट् गायत्र्यो ' गायत्री[1] वै[2] छन्दसां[1] वि पाप्मानमहत ' गायत्र्यैव तद्यजमानो वि पाप्मानꣳ हते ' ॥ १० ॥

इन्द्रो ऽकामयतौद्भिद्यꣳ[2] श्रैष्ठ्यं दवानां गच्छेयमिति ' स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत ' ततो वै स औद्भिद्यꣳ श्रैष्ठ्यं देवानामगच्छद्यः कामयेतौद्भिद्यꣳ श्रैष्ठ्यꣳ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेतौद्भिद्यꣳ हैव[3] श्रैष्ठ्यꣳ समानानां गच्छति ' तस्यातियाह्यो ऽयं कलुरगृभीतो[4] विश्वजिदुद्भिदग्निष्टोमः। ऋषिर्विप्रः काव्येनोपयामगृहीतो ऽसीन्द्राय त्वोद्भिदे जुष्टं गृह्णामीति ' परिमृज्य सादयत्येष

---

१ Thus M only, गायत्र्येव वै छन्दांसि all the other MSS.

२ All MSS. ins च वै exc. M

३ एवै MB.

४ M ins. (against Taitt. Br.) अथोषाः।

ते योनिरिन्द्राय त्वोद्भिद इति ' तस्य पञ्चदशैकविंशौ विपर्यासꣳ स्तोमौ भवतस्ताः षड् बृहत्यो ' बृहती वै छन्दसामुदभिनद्बृहत्यैव[1] तद्यजमान उद्भिनत्तीन्द्रो ऽकामयत वलं[2] भित्त्वा पशून्सृजेयेति ' स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत ' ततो वै स वलं[2] भित्त्वा पशूनसृजत ' यः कामयेत वलं[2] भित्त्वा पशून्सृजेयेति स एतेन यज्ञक्रतुना यजेत ' वलमेव[2] भित्त्वा पशून्सृजते ' तस्यातियाज्य इन्द्र ओषधीरसनोदहानि वनस्पतीꣳरसनोदन्तरिक्षम् । बिभेद वलं नुनुदे विवाचो ऽथा-भवद्दमिताभिक्रतूनामुपयामगृहीतो ऽसीन्द्राय त्वा वलभिदे जुष्टं गृह्णामीति ' परिसृज्य सादयत्येष ते योनिरिन्द्राय त्वा वलभिद इति ' तस्य सप्तदशैकविंशौ विपर्यासꣳ स्तोमौ भव-तस्ताः पङ्क्तयो ' गायत्री[3] वै[3] छन्दसां[3] वलमभिनद्गायत्र्यैव[3] तद्यजमानो वलं भित्त्वा पशून्सृजते ' ॥ ३१ ॥ अष्टमः ॥

ऋतपेयेन यक्ष्यमाणो भवति ' स यद्ग्रामणीं कामयते तस्याग्नितो भूत्वा दीक्षते यदा[4] लभते[4] तस्य ' स एकाहं नाश्नात्यथाश्नाति ' द्व्यहं नाश्नात्यथाश्नाति ' त्र्यहं नाश्नात्यथा-श्नाति ' सो ऽत्रैव विराजमाप्नोति[5] ' राजानं क्रीत्वोपवसथ्यं

---

१ बृहत्येव M.

२ वलं most of the MSS

३ Thus M, गायत्र्येव छन्दसां वलमभिनद्गायत्र्येव the other MSS

४ यद्दलभते M

५ Thus my conjecture, विराजाप्नोति M विराजा यजतेति the other MSS

निर्वपति । यद्यु वा एतदुपात्येति चतुरहं नाश्नात्यथाश्नाति । पञ्चाहं नाश्नात्यथाश्नाति । षडहं नाश्नात्यथाश्नाति । तिस्र उपसदस्त्रिंशतमुपयन्ति[1] । त्रिंशदक्षरा विराडेवं विराड्वि-राजैवान्नाद्यमवरुन्द्धे । ऽथ य एकादश स्तन एवास्यै स । दुह एवैनां तेनाथ ■ एकविंशः स्तन एवास्यै स । दुह एवैनां तेन । स उपसत्स्वाज्यव्रतो भवति । शीतस्य[2] सर्पिषस्तिसृभि-रङ्गुलीभिरुपहन्त्यथ द्वाभ्यामथैकया । शीतस्य[3] नैव[3] सर्पिष-स्त्रिभिः पर्वभिरुपहन्त्यथ द्वाभ्यामथैकेन । विलीने वा सर्पिषि षीपि पञ्चदशवद्धात्यथ द्वे अथैकं त्रिस्तनद्विस्तनैकस्तनव्रतस्य रूपाणि कुर्वन्नादित्यादिवा पर्यावर्तेत नाग्नेरधि नक्तमौ-दुम्बरः सोमचमसश्चतुःस्रक्तिर्मेध्या[4] त्रिवेदाः[5] सगोषः । ॥ ३२ ॥

सप्तदश स्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापति-मन्नाद्यं नोपानमत्तं देवा व्रतव्रताभ्यामन्वैषुः[6] । स यदश्नाति यदेवास्यानेनावरुद्धं तस्यावरुद्धा इति तदेव यन्नाश्नाति यदेवानस्यानेनावरुद्धं तस्यावरुद्धा इति तदेव यदुपसत्स्वाज्यव्रतो भवत्येतद्वै देवानां प्रियं धाम यदाज्यं । देवानामेव प्रियं धामावरुन्द्ध इति तदेव यन्नादित्यादिवा पर्यावर्तेत नाग्नेरधि

---

१ ॰पद्यते Be 7 BD, ॰पद्यते M Be U.

२ Thus M, विलीनस्य the other MSS.

३ Thus M, विलीनस्य नैव Be U, विलीनस्यैव Be 7 D; विलीनस्य नै ■

४ मध्या M.

५ Thus M B U, त्रिवेदा Be Ba 7 D.

६ ॰मन्वैषुः all the MSS exc. Be which has ॰मन्वैषः ।

नक्षेते वै देवानामृतयत्ये । नेद्देवानामृतयत्ये ध्रुतः करवाणीति तदंथ यदौदुम्बरो भवत्यूर्ग्वा अन्नाद्यमुदुम्बर । ऊर्ज एवान्नाद्यस्यावरुद्ध्या इति तदंथ यत्सोमचमसो भवत्येतद्वै देवानां परममन्नं यत्सोमः । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्द्ध इति तदंथ यच्चतुःस्रक्तिर्भवति यदेव दिशो ऽन्नाद्यं प्राविशस्तस्यावरुद्ध्या इति तदंथ यन्निवेदा[1] भवति न ह्येतामेकवेदा दक्षिणामुपन्तुमर्हतीति तदंथ यत्सगोत्रो भवत्यात्मा वै सगोत्र आत्मन्येव यज्ञस्य यशो ऽन्नाद्यं प्रतिष्ठापयामीति तत् । ॥ ३३ ॥

तं माध्यंदिनीयैश्चमसैः सहोन्नीय जुह्वति । तस्मिन्निशो हुतं दक्षिणानां काले ब्रह्मण उपानिदधन्ति । तं ब्रह्मणः सन्तं[2] पर्युपविश्य भक्षयन्ति यद्धुतं सन्तन्नो तेन । यद्धुतेन भक्षयन्ति तद्धुतपेयस्यंतपेयत्वं ॥ दिशो ऽकामयन्तान्नाद्यः स्यामान्नाद्यमवरुन्धीमह्यन्नाद्यमस्मासु प्रतितिष्ठेदिति । ता एतं यज्ञक्रतुमपश्यंस्तमाहरंस्तेनायजन्त । ततो वै ता अन्नादो ऽभवन्नन्नाद्यमवारुन्धतान्नाद्यमासु प्रत्यतिष्ठंत् स कामयेतान्नादो मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेतान्नाद्यैवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धे ऽन्नाद्यमस्यां प्रतितिष्ठति । तस्य यत्सत्सु वक्ष्यमाणो ऽष्टाकष्टाम्यान्द्यानि[3]

---

१ निवेदो M

२ Thus corrected according to the Karmânta, सन्तं all the MSS.

३ ०ताक्षोपाद्यात्स्यानि M ०तत्रैवाद्यात्स्यानि Bc, ०ताक्षद्यात्यानि B Bc 7 CD, cp. supra XV. 18 (p. 222. 12)

# BIBLIOTHECA INDICA:

## A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No 1322

# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA SRAUTA SŪTRAM




EDITED BY

DR W CALAND OF UTRECHT

VOL II FASCICULUS V

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1 PARK STREET

1912

समानलोकौ स्याव समानं लोकमियावेति तावेतेन यज्ञक्रतुना यजेयाताꣳ[1] समानलोकावेव भवतः समानं लोकमितो । ऽवरयो यज्ञायुधः प्रासङ्गस्समसः सा ब्राह्मणस्य दक्षिणाश्वतरीरथः सर्वायुधो ऽप्रासङ्गः काꣳस्यस्त्रणीबन्धः[2] सा राजन्यस्य दक्षिणा । तस्य त्रिवृत्पञ्चदशौ विपर्यासꣳ स्तोमौ भवतस्त्रिवृदेव ब्राह्मणस्य पञ्चदशो राजन्यस्य । तमेतमिन्द्राग्नियोः कुलाय इत्याचक्षत । एष एव सम्मितापुचीय एष सख्योर्यज्ञ एष भ्रात्रोः ॥ ॥ ३५ ॥ नवमः ॥

अभिचरणीयैः सोमैर्यक्ष्यमाणो भवति । स इयान्ति यज्ञायुधान्युपकल्पयते बाधकानि च तैल्वकानि च प्रवालसो[3] ऽधिषवणे फलके पुरुषास्स्य[4] हवनी । स यथाध्वर्युरुपाꣳशुं गृहीत्वाजानमभिषुणोति तस्य यो ऽꣳशुः परापतति तमेतस्मिन्नाप आधायोपसंस्थाप्याहांसुं जम्भय ता दोष्यामीत्यां तमितोऽरास्ते । ऽथैतं भस्माहवनीये ऽनुप्रहरतीदमहममुमामुष्यायणं परिस्तुना[5] भङ्गेन[4] विध्यामीत्यथ यं यजमानो द्वेष्टि

---

१ यजेतां all exc M

२ °तूणीबंध Be, °तूणिबध° U, तूष्णीबंध M, °तूणिबधः B, मौविबंधः Be 7 D

३ Thus M Be, प्रवमध्ये Be 7 D (cp Āp XXII 4 17, Śānkh XIV 22. 18, Ṣaḍv br III 8), प्रवालमध्ये U, प्रवालमभोग्यो B, cp the Dvaidhasūtra

४ Thus M, all the other MSS. corrupt

५ Thus M, परिस्तुनायमेन Be U B, परिपानाभयेन Be 7 D

प्रायणीयायां चतुर्विंशतिमानं ददात्यातिथ्यायां द्वे[1] चतुर्विंशतिमाने[1] ददाति। प्रथमायामुपसदि चत्वारि ददाति। द्वितीयस्यामुपसद्यष्टौ ददाति। तृतीयस्यामुपसदि षोडश ददाति। चतुर्थ्यामुपसदि द्वात्रिंशतं[2] ददाति। पञ्चम्यामुपसदि चतुःषष्टिं ददाति। षष्ठ्यामुपसद्यष्टाविंशं शतं चतुर्विंशतिमानानां[3] ददात्यथातः पशुसंस्थैवाग्नीषोमीयस्य हुतायां वपायां द्वे शते ददात्याग्नेयस्य हुतायां वपायां चत्वारि ददाति। प्रातःसवनीयेष्वष्टौ[4] ददाति। माध्यंदिनीयेषु षोडश ददाति। दक्षिणानां काले द्वात्रिंशतं ददाति। तृतीयसवनीयेषु चतुःषष्टिं ददात्यनूबन्ध्यस्य हुतायां वपायामष्टाविंशं शतानां[5] ददाति। स यदेताभ्यामिष्टिभ्यामहरहर्यजते सूर्याचन्द्रमसोरेव तत्सायुज्यं सलोकतामाप्नोति। ॥ ३७ ॥

[6]अथ यद्यहिरण्यदक्षिणो[7] भवति हिरण्मयमेव तद्यजमान

---

[1] Thus M, ˚विंशतिमानं ददात्यथ Be B; in the other MSS this passage is missing

[2] Thus M U, ˚विंशत Be, in the other MSS. this passage is missing

[3] Thus M, ˚शतिमानं the other MSS.

[4] ˚सवनीयेष्वौ Be 7 D.

[5] Thus M Be 7, ˚शतमानानां Be B U

[6] During the printing I was so happy as to obtain, for the remaining part of this praśna, from Mr Muthu Dikshitar of Lalgudi (Manakkāl, Madras) a copy (designed by me as L) from a MS. in his possession This MS is in Grantha and independent from my MSS., but, on the whole, not much better.

[7] Thus M, ˚हिरण्यं दक्षिणा the other MSS.

दुर्णामस्तंदुर्णामस्य[1] दुर्णामत्वं[2] ॥ केशी ह दाल्भ्यो ऽपचितिकामो ऽपचितिनेजेन[3] नो[3] नामानि[3] परिहरन्ता[4] इति । ततो ह वा एतत्पञ्चालराजानां[5] नामानि परिहरन्ते[6] ॥ ३८ ॥

शीर्षण्या इति केशानाचष्टे । कुशा इति दर्भान्नद्याविति[7] गैरेयकविमत्यौ[8] । ततो वै सो ऽपचितिमानभवत्सः कामयेतापचितिमान्स्यामिति स एतेन यज्ञक्रतुना यजेतापचितिमानेव[9] भवति । तस्य चतुर्विंशो बहिष्पवमानस्त्रिवृत्पञ्चदशान्याज्यानि । तास्तिस्रो गायत्र्यश्चतुर्विंशो माध्यंदिनः पवमानः पञ्चदशसप्तदशानि[10] पृष्ठानि । ते द्वे त्रिष्टुभौ । त्रिणव आर्भवः पवमान एकविंशमग्निष्टोमसाम । सैका जगत्येतानि वै छन्दसामपचिततमान्यपचितिमानेव भवति य एवं वेदासावादित्यो ऽकामयत त्विषिमान्स्यामिति । स एतं यज्ञक्रतु-

---

१ दुर्णम० Be, दूर्णाम० M L, the other MSS om.

२ Most of the MSS दुर्णम० or दूर्णाम० (both times)

३ Thus M, L om नो ; नंननामानि Be, नमोनामानो Be 7 U D, नंनोनामनो B

४ Thus M Be 7 D, ०हरन Be B U L.

५ Thus M ; ०पाचाल० the other MSS.

६ Thus M Be L, ०हरंत्या Be 7 D U, ०हरत्या B.

७ Uncertain, दर्भानद्याविति M, दर्भान्नद्याविति L, दर्भानिद्याविति Be B

८ Uncertain reading, गैरेयकविमंचो (or मेचो?) M, गेरैयकविमत्यो Be 7, गोरेयकविमत्यो Be B, जरेय० D, गैरयकचितिमत्यो L

९ Thus M L, एषु instead of एव all the other MSS.

१० Thus M Be U, पचदशःसप्त० B L, Be 7 om. पंचदश ।

इति[1] वदन्तो । वनिष्ठुसवेन यक्ष्यमाणो भवति । स चर्यंकल्पयते शतमुपवेहतः[2] शतं दार्वाचितानि शतꣳ सर्पिष्पात्राञ्छतं पयः-पात्राञ्छतं दधिपात्राञ्छतं वसापात्राणामौदुम्बरीं नावमुभयतो-ऽभिपतनां[3] परिगृह्णीतामथ प्रणेह्नैतेनोपकॢप्तेन चित्रामा-यतीमुपरमत्यंघ चित्रयेति पूर्वाग्निमन्ववस्यत्युत्तपनीयꣳ प्राचीनो ऽन्वाहार्यपचनमाहिताग्निरेतानि दार्वाचितानि प्रदीप एवाग्नावादधाति[4] । तेषु[5] प्रज्योतिषूपवेहतो[5] भिन्नन्त्येषामभ्य-र्धान्वनिष्ठुमेदाꣳसीति[5] अपयन्त्यथोदित आदित्य आयात-यत्यौदुम्बरीं[6] नावमुभयतोऽभिपतनां[7] परिगृह्णीतां प्रणेक्ष्णभि-संख्यायोपकृणीते पञ्चाशता सर्पिष्पात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता दधिपात्रैः पञ्चाशता वसापात्रैस्तस्यां वनिष्ठुमेदाꣳ-सीति संप्रकीर्यायाभिघारयति पञ्चाशता वसापात्रैः पञ्चाशता दधिपात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता सर्पिष्पात्रैरथ पुरोऽनुवाक्यामन्वाह ॥ ४० ॥

---

१ Thus Be L, वदन्तीति Be 7 B U D

२ Thus L, ॰मुपवेतत Be 7 D, ॰मुपवेविवतान् Be B U.

३ Uncertain reading, उभयतोपतना Be 7 B, उभयतोभिपतना Be U; उभयतोयतानां (or ॰वतारं) D; उभयतोभिपतथार्ं L

४ ॰दधति L.

५ तेन प्रज्योतिषू स्वयतोनिभ्रन्ति L, तेषु प्रत्योतिषं(or ष)पवेहतो भ्रंत्य॰ Be 7 D, तेन प्रज्योतिषुपवेहतोनिभ्रन्त्य Be B U अभ्यर्धान् 1 s. o अभ्यर्धान् L

६ Uncertain r, अथायतयत्य॰ U B अथापयत्य॰ D, अथापयत्य॰ Be 7, अथाभीमयत्य॰ B आथातयति L

७ ॰पतानां B, ॰वतानां Be 7, ॰भिपतानां Be U ॰मुभयतस्त्वभिपतनां L.

इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः । सेदु राजा क्षयति[1] चर्षणीनामरान्न नेमिः परि ता बभूवेति । यज्ञतोऽन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विश्वरूपं यदस्य । ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् स्वाहेति । स एवास्मा इन्द्र आविर्भवति । तस्मै[2] कामान्दुहते॥ कामान्धू[3] ह[4] वाध्वर्यं बृहस्पतिराङ्गिरसो याजयां चकार । तस्य चोपवसथीये ऽपच्छद्वा[5] बोधाय[6] । स बोधायाध्वर्यो[5] वि[5] वे[5] से अद्भुतागतं मे यज्ञं स्थापयेति । तं ह बोधायान्यदे तदुपवसथः[6] स्वस्ते यज्ञः सप्स्यातेति[7] । स बोधाय समेव मे स्थापयेति । तस्य[8] ह तावदिदित्वापेया[9] ह विधर्मे

---

१ चेति (as TBr. II 8 4. 3) Be B D U ; क्षयति (as RV. I 32. 15) Be 7.

२ तस्मिन् Be L

३ Corrected ; कामानाव B U Be (pr. m.) ; कावानावेंब Be 7 ; काला- नावंवं D ; कामीवनाव Be (sec. m ), कवीयवाच्च L.

४ My conjecture ; चमूषदाभिधाय B U L ; चमूषदाभिधाय Be ; चम- पंचाद्यपिधाय Be 7 D.

५ Thus Be , all the other MSS. corrupt

६ Uncertain r , बोधायान्यदैवदु॰ Be 7 D , बोधायाध्वर्यवेदु॰ Be B U ; बोधाय अर्ध्वयवेत उप॰ L

७ ॰स्थापयेति Be B U , ॰स्थापयेति Be 7 D , ॰स्थापयेति L

८ तस्मा MSS exc. L

९ तावद् only in Be (sec m ), अवद् L , instead of विदित्वा (thus L Be) विविंत्वा the other MSS

यस्मिन्नुलूखलमुसले निधायाऽऽशूद्रमवचुदां[१] चकार[१] यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिरित्यथ होदचमसे वसतीवरीभ्यो ऽध्यपो[२] निःपिष्य समुदायुत्य जुहवां चकार यथा जना मरुस्थे मतानि[३] कोप्रतिनां[४] मतमालोभयाति[५] । कानान्धस्य[६] प्रस्थितं[७] वाभ्रवस्य[८] तीव्रसुतङ्[८] मवदिन्द्र[९] जुषस्व स्वाहेति । स एष उन्मत्तस्य वा वीतयद्रुस्य वा[१०] कीतस्य[१०] वा यज्ञः । सा[११] यदागता[१२] स्यादथ पशुं सोमेनाग्निष्टोमेन यजेत पुरा संवत्सरान्ये[१] ॥ ४१ ॥

मनुर्वैवस्वतो ऽकामयत प्रजाः सृजेय प्रजामवरुन्धीय प्रजां विन्देय[१३] मा[१३] प्रजया यजीरन्निति[१३] । स एतं

---

१ ०समवसूपारचकार L.

२ यपो only in Be L

३ हतानि MSS exc L मतानि ।—जनामरुस्थे L

४ प्रतिनां Be, प्रतीनूं L, हतीनां the other MSS.

५ मतमालोभयाति Be, ०यति L, मममामालोभयति the other MSS

६ Thus Be L; the other MSS corrupt.

७ प्रस्थितं all exc. Be which has प्रस्थितं ।

८ वाभ्रवसीमसुतं Be B; वाभ्रव-सौम्सुतं U, वाभ्रवेदीसुत Be 7; वाभ्रवेदीस्सुत D, वाभ्रंप्रवाविनसुतं L

९ मवदिंद्रा Be 7 D, मिद्रवदिंद्रा Be, निवपतींद्रा B, निवपंतींद्रा U, निवदिन्द्रो L.

१० Thus Be L, वनितस्य BUD, वलानस्य Be 7.

११ स MSS.

१२ यदागत Be L, यदागमा B Be 7 DU.

१३ *Conjecturally*, विन्देय मा प्रजयायजीरन्निति BU, विदेय मावजनाय० Be, विदेय माप्रजयायजर्तीति Be 7 D, विन्देयप्रजयायजी० L

यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स प्रजामसृजत प्रजामवारुन्द्ध प्रजामविन्दतैनं प्रजयापचत[1] । यः कामयेत प्रजाꣳ सृजेय प्रजामवरुन्धीय प्रजां विन्देयाभि[2] मा प्रजया पचीरन्निति[2] स एतेन यज्ञक्रतुना यजेत । प्रजामेव सृजते प्रजामवरुन्द्धे प्रजां विन्दत[3] एनं[3] प्रजया पचते । तस्य[4] प्राचीन-स्तोमास्त्रयस्त्रिवृतस्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविꣳशाः ॥ को ऽकामयतान्नादी मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै तस्यान्नादी प्रजाभवदन्नाद्यमवारुन्द्धान्नाद्यमस्यां प्रत्यतिष्ठद्यः कामयेतान्नादी मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेतान्नाद्येवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धे ऽन्नाद्यमस्यां प्रतितिष्ठति । तस्य दश स्तोमा । दशदशैव स्तुवते विराजो रूपं ॥ वागाम्भृण्यकामयतापरिमितं यशो ऽश्नुवीयेति । सैतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै सापरिमितं यश आश्नुत । यः कामयेतापरिमितं यशो ऽश्नुवीयेति स एतेन यज्ञक्रतुना यजेतापरिमितमेव यशो

---

१ ०यजते all exc. Be L.

२ विदेय मा प्रजायापचर्निति Be D; विदेय प्रजयापचरंतीति B Be 7 U विन्देय मा प्रजायापचीरन्निति L

३ Thus corrected; विंदत एवं Be L, विदैनं the other MSS.

४ Only in Be L.

ऽश्रुते । तस्य दशसु बहिष्पवमानः शते सहस्रे ऽयुते प्रयुते ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे ॥ ४२ ॥

यमो वैवस्वतो ऽकामयत पितॄणामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स पितॄणामैश्वर्यमाधिपत्यꣳ राज्यं पर्यैत् । यः कामयेत समानानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत । समानानामैश्वर्यमाधिपत्यꣳ राज्यं पर्येति । तस्य शते बहिष्पवमानः सहस्रे ऽयुते नियुते प्रयुते ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पदे पद्मे । नित्यमुक्ता मनसैव स्तुवानो मन्यत एतावति[1] से[1] स्तुतमित्यथ[1] सद्यःप्रवर्ग्यं । आतिथ्येन प्रचर्य गार्हपत्ये प्रवर्ग्यं प्रवृणक्ति । तेनाहवनीये प्रचरति । तं काल उद्वासयति । शिरो वा एतद्यज्ञस्य यदा-तिथ्यं । यज्ञः प्रवर्ग्यः । शीर्षन्नेव यज्ञस्य यज्ञो दधातीति नु सद्यःप्रवर्ग्यो । ऽथ सुते प्रवर्ग्यः । पवमानेन परित्वाग्नीभे[2] प्रवर्ग्यं प्रवृणक्ति । तेनाहवनीय एव प्रचरति । तं तदानीमेवोद्वासयति । शिरो वा एतद्यज्ञस्य यत्पवमानो । यज्ञः प्रवर्ग्यः । शीर्षन्नेव यज्ञस्य यज्ञो दधातीति नु सुत्याप्रवर्ग्यो । ऽथ सद्यःप्रवर्ग्यो । ऽथ सुते प्रवर्ग्यो । ऽथ सुत्याप्रवर्ग्यः[3] ॥ ४३ ॥ एकादशः ॥

---

१ Uncertain r.; एतावतीमेस्तुतमित्यथ Be, एतावति मे स्तुत॰ L; एतावती (ति) मेत्यथ the other MSS.

२ MSS exc L ins. वै ।

३ The close of this chapter must contain several corruptions

[1]पुरूरवा ह पुरा ऐडो राजा कल्याण आस । तं ह उर्वश्यप्सराभिदध्यौ । तं ह संवत्सरं कामयमानानुचचार । तं ह स्म वै[2] पूर्वं ऽभियायन्ति । तद्धातिचिरं मेने । तस्य ह धावतः पुरो रथं कर्णे दर्शयामास । तं ह दृष्ट्वा राजावतस्थौ । तं हावस्थाय न ददर्शाथो ह पुनरातस्थौ । तं हास्थायैव ददर्श । स ह सारथिं पप्रच्छ सारथे किं पश्यसीति । स्त्रीं भगव इति होवाच रथमस्यान्यस्यामिति । स हैवां चक्रे कृत्यामि वै किलेति । तं ह वागभ्युवाच न वै कृत्याहं वै लोकेत[3] कतमदीदृशमित्यथ कस्त्वमित्यहमुर्वश्यप्सरेति होवाच । सा त्वा संवत्सरं कामयमानान्वचारिषं । तां मा जायां विन्दस्वेति[4] । दुरुपचारा ह वै भवति[5] देवा[5] इति[5] होवाच । का त[6] उपचर्येति[6] । मत्[7] ममोपसदः[7] स्युः[7] । मतं स्थतं मा सर्पिष्कुम्भा

---

१ This and the following adhyāyas are found also in a badly corrupted tradition. I did not note all the various readings nor all my emendations; the list of them would fill more space than the text itself

२ Thus L only, चैव or हैव the other MSS.

३ अर्थिनं or अर्थिनम॰ MSS.

४ L Be sec m. किस्रेति ।

५ Thus L U Be 7; भवंति देवा इति B Be (pr.m.), भवतो देवीति Be (sec m.).

६ Thus L Be (sec. m), मचाचार्येति the other MSS.

७ Instead of these three words given thus by Be and L (which only gives म instead of मम), the other MSS. मं कामौम-पदण्ड or मंकामौप इति पदस्य ।

अहरहरागच्छेयुरुद्दायता स्यां । न त्वा नग्नं पश्येयमिति । सर्वमेवैतद्भगवति सुकरमिति होवाच । कथा त्वपि[1] जाया पतिं नग्नं न पश्यतीत्यन्तर्वासं वसीथा[2] इति होवाचानग्नो भवेति[3] । तया सहोवासान्तर्वासं वसानः । सा ह स्म जाताञ्जातानेव पुत्रानपविध्यति । सा ह राजोवाच पुत्रकामा ह वै भगवति वयं मनुष्याः स्मो जाताञ्जातांस्तु त्वमपविध्यसीति । सा होवाच पर्यवेतरा वयो भवन्ति क्षीणायुषो ऽन्ये । भूयः प्रियं करवावहा इति । आयुं[4] चामावसुं च जनयां चकार । सा होवाचेमौ बिभृतेमौ[5] सर्वमायुरेष्यत इति । प्राङायुः प्रवव्राज । तस्यैते कुरुपञ्चालाः[6] काशिविदेहा इत्येतदायवं प्रव्राजं । प्रत्यङमावसुस्तस्यैते गान्धारय[7] स्पर्शवो ऽराट्टा इत्येतदामावसवम्[8] । ॥ ४४ ॥

अथो ह्यस्या एषा पूर्वचित्तिरप्सरा स्वसा बभूव । सा हैनां चक्रे ज्योग् वै मे स्वसा मनुष्येष्ववात्सीद्धन्तैनामच्छाया-

---

१ त्वपि L, त्वयि the other MSS

२ वसीथा L Be (sec. m.) वासीत्याथ the other MSS

३ भवति MSS. exc. L, which has नेम ह वामनो भवसीति ।

४ आयुं Be (sec. m.).

५ बिभृते॰ Be L, the other MSS om. these words

६ ॰पांचालाः L B.

७ The proper names given acc. to Be (sec. m.), the other MSS. गान्धारा (or री) पर्शवोऽराटा (or ट्टा) आ (or वा) ।

८ इत्येतन्मावसवम् or इत्येतन्मामावसवम् or इत्येतदामावसवम् MSS

मीति। तथा सहागत्यैव संगमं न लेभे। उर्वो हास्या अविद्यूयमुपस्थापदासीवह्[१] स ह वै पूर्वोषां मनिषीणाह्[२] रूपं[३] भवति। तद्दुकरूपं हत्वा प्रमायं[४] चिकायायो[४] हास्या उरणः घोरप आसन्दीपादे बद्ध आस। तह् सा प्रममाथ। तमिन्द्र-यमाणे रुरुवे[५] उयमवीरजः[६] इति। तच्छ्रुत्वा राजोत्पपात। तामभ्यानय[७] तामभ्युपेयाय। तह्[८] सा[८] नकुली[८] भूत्वा प्रत्युपेयाय। तस्य हान्तर्वासमवलुप्योपाय स सा विद्युतं जनयां चकार[९]। [१०]तह् सा विद्युति नग्नमनुचख्यावेयो ह राजानगामास्थावदं सा चक्रमजीत उद्यमत्यपादहंदि मूमभिति[११] प्रत्यहं प्रजविष्यामीति। किं अभूदिति। नद्यं लादर्ममिति[१२] होवाच। तथा प्रव्रजितायामभियद्विः

---

१ Thus (only अवि॰ or अवा॰) MSS.

२ Only in Be (sec. m)

३ Thus Be L (sec. m.); रूपं the other MSS.

४ चिक्षायायो Be (sec. m.), चिकायायो or चिवयायायो or चिक्षायायो the other MSS.

५ रुवेवे Be (sec. m); रुपेवे L; रुवे the other MSS.

६ Corrupt, उयमवीरजा Be (sec. m.) L; उयमविरजा the other MSS.

७ ॰भ्यानय MSS

८ Conj.; संकुली Be (sec. m); नसंवेकुली the other MSS.

९ Thus L Be (sec. m.), जनयांमास the other MSS.

१० Be ? ins चाक्षे चकार, B Be (orig) ins चोदोचकार।

११ These corrupted words without any var. r. in all MSS.

१२ लादर्मेमिति MSS.

मोघꣳ चकार[१] तꣳ होवाच बृहस्पतिराङ्गिरसो यन्न त्वा प्रदेन[२] याजयिष्याम्यपयि त्वा पुनर्जिन्विष्यामीति[३] तꣳ प्रदेन[४] बृहस्पतिराङ्गिरसो याजयां चकार तꣳ हावभृथादेवोदेत्य प्रतिददर्श तꣳ ह पुत्रौ प्रतीत्योचतुरिह नौ नय यत्र ते गतिर्वक्षिनौ[५] वां[६] पितरमशूशुच[५] इति सा[६] होवाच यं वां[७] पुत्रकौ जनेय यावमिह तिष्ठ एव रात्रीर्वत्स्यामि मो ब्राह्मणस्य वचो मोघमभूदिति तथा सह तिष्ठ[८] एव[८] रात्रीरुवासान्तर्वासं वसानस्तस्याꣳ रेतः सिषिचे सा होवाच[९] कथमिदꣳ स्यादिति कथꣳ हि नूनाहमिति[१०] राजा प्रत्युवाच सा होवाच मर्वा कुम्भीमाहरेति तस्यामेनत्सिषिचेयाय[११] ह कुरुक्षेत्रे विसवत्यो[१२] नाम पुष्करिण्यस्तासामुत्तराध्यां सुवर्ण-

---

१ Conj.; मोघं चकार or चकार MSS.

२ प्रदेने MSS.

३ •जिन्विषा• MSS

४ प्रदेन MSS.

५ Thus Be (sec m., only •शूशुच), •वक्षिनैवाशिपतरं शूशुच or •वक्षिनैनामपित• the other MSS

६ From सा unto होवाच (p 399 8) only in Be L.

७ वा Be.

८ om Be.

९ cp p. 399, n. 6.

१० नूनाचमिति L, नूनामिति the other MSS

११ Thus L, तस्यामेनं• Be (sec m), तस्यामेनं the other MSS.

१२ विसवत्यो Be (sec m.), विवस्वत्यो the other MSS

दशसु बहिष्पवमान । एकैकोपश्रीयत[1] ऐकविंशत्यै[2] सुनोतीहैवाय[3] यो ऽप्रियं विनिनीषेत्तमौपशदेन[4] याजयेत्तस्यैकविंशत्यां बहिष्पवमान । एकैकावश्रीयत आ दशभ्यो ॥ ऽथ प्राजापत्यौ नाम शदौपशदौ । तस्य तिसृषु बहिष्पवमानस्तिस्रस्तिस्र उपश्रीयन्त आ षट्त्रिंशतः । षट्त्रिंशत्सु बहिष्पवमानस्तिस्रस्तिस्रो ऽवश्रीयन्त आ तिसृभ्यो ॥ ऽथ नैध्रुवस्य[5] काश्यपस्य शदौपशदौ । तस्य चतसृषु बहिष्पवमानश्चतस्रश्चतस्र उपश्रीयन्त आष्टाचत्वारिंशतो । ऽष्टाचत्वारिंशत्सु बहिष्पवमानश्चतस्रश्चतस्रो ऽवश्रीयन्त आ चतसृभ्यः ॥ ॥ ४५ ॥

द्वादशः ॥

देवासुरा ह यत्र महासंग्रामं[6] संयेतिरे[7] तद्धेमानि[8] भूतानि द्वेधैव[9] व्यपचक्रुर्देवानेवान्यान्यसुरानेवान्यानि[10] ।

---

१ Thus L, एकैक उप॰ Be (sec m), एकैकोप॰ the other MSS

२ Corrected, एकविंशत्यौ L, एकविंशत्यै Be (sec m.), एकविंशते (or ॰से)त्य the other MSS

३ सुनोति इहैवाय L, सुनोतीहैवाय Be (sec m), सुनोति एवाय the other MSS

४ Thus L, विनीर्निषे॰ Be (sec m); विनीनिषे॰ or विनिनिषे॰ the other MSS

५ ॰ध्रुव L Be

६ महा॰ only in L and Be (sec m).

७ स only in Be (sec m), स॰ L

८ तद्धेमानि L and Be (sec m), त धुमानि the other MSS

९ Thus L, द्वेधै Be, द्वेद्वेधै the other MSS

१० व्यपच॰ L Be, व्यवच॰ the other MSS

बृहस्पतिर्देवानां पुरोहित आसीदुशना[१] काव्यो ऽसुराणां । ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तो ऽसुरास्ते ब्रह्मसंयामान-विजयमाना आसां चक्रिरे । तेषां न कतरे चन भविष्यद्राजज्ञुर्गन्धर्वो हैव सूर्यवर्चा भविष्यद्राजज्ञे । तस्यो हेन्द्रो जायायाः[२] उपहास्य[२] चास । ताꣳ होवाचासुदितान्नि[३] त्वमिदं गन्धर्वं पृच्छ किमर्थमिदं देवासुरा न विजयन्तीति । तं तथेति होवाच त्वमपि त्व आगच्छतादिति । स हान्तः समुद्रे हिरण्मय्या[४] नावया सहजामि कुमार्यौ[५] चक्रे । ऽथो हेन्द्र आजगाम । स ह सौवर्णः पतत्री भूत्वा सौमण्डे[६] उपनिषेद[७] । तꣳ हागतमेव विदित्वा[८] पप्रच्छासुदितान्न[९] त्वमिदं ब्रूहि किमर्थमिदं देवासुरा न विजयन्तीति । मोचैरिति होवाच कर्णिनो वै मौराप[१०] इति । ब्रह्मण्वन्तो देवा इति होवाच ब्रह्मण्वन्तो ऽसुरा इति । तच्छ्रुत्वेन्द्रो हरिशुकरूपं[११] कृत्वोत्पपात ।

---

१ Thus MSS.

२ Thus L and Be (sec. m.), which has, however, ॰चाक्षमाच, चाजयहाय उपहास्य चाच the other MSS

३ ॰अदितान्नि or ॰तान्नि MSS

४ हिरण्मया MSS. exc. B

५ Uncertain, सहजानिकुमार्यौ L, r. सहजामि॰? cp. TS III.2.8 5.

६ सौमंच L, सौमेंडप Be (sec. m.); जैमंधे the other MSS.

७ ॰निषेद MSS exc Be which has ॰निषे।

८ त्विदा L

९ ॰च्छान्न L Be (rightly?), ॰सुदितान्नि the other MSS.

१० Thus L, मौरुप Be (sec. m.), मौराप the other MSS

११ Emended, हरिं शुकोरूप L, हरि शुकरूपं the other MSS

तऽँ ह दृष्ट्वोवाह[1] मघवन्नो[2] इति यतरेषाऽँ[3] हरिष्ये जेष्यन्तीति । [redacted] ह गत्वैवोमनमं[4] काव्यमुपमन्त्रयां चक्रे अयन्त्याय[5] दुहिता चतसृभिश्च कामदुघाभिः । स हाजग्मो ऽसुरेभ्यो ऽधि देवानुपधमियाय[6] । ततो ह वा एतद्देवा असुरानभ्यासयामं जिग्युः । ॥ ४६ ॥

स ह गुरुरिव मेने गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य । स होवाच गुरुरिवास्मि गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य हन्त मा याजयेति । तं द्वादशस्तोमेनाग्निष्टोमेन इदन्तमितराङ्गिरसो याजयां चकार । तेन हेद्धोर्ध्वंऽ हिरण्यमुज्जगार । तद्ध[7] दृष्ट्वा[7] चक्रे हन्ताहमिदमसुरेभ्यो निर्हराणीति । तद्धेन्द्र[8] आग्रायैव गिला[9] चकार । ते ह वा एत[10] चौशमधा नाम कुरुक्षेत्रे पर्वतगाः[11] ॥

---

१ Uncertain, इदृष्वज्जो L, इदृवाचो Be, इदृवचम the other MSS

२ Thus Be, मघवर्येष्मघवन्निति L, मघवान्मूमयवचा the other MSS.

३ Thus L, यतर एषां Be, यद्दतरेषां the other MSS

४ Thus MSS exc Be which has स याज॰ and L स यागस्यो॰ ।

[redacted] *My conjecture*, आयंतय Be, अयन्ताय L, आयन्त्याय or यत्याय the other MSS

६ Thus L, ॰धमीयाय Be, ॰धभीपथ or ॰समोयाय the other MSS

७ संदृष्ट॰ Be, तदृष्ट्वो॰ L, तद्वेदृष्ट॰ the other MSS

८ Thus L, तचेद Be, तधेद्दे or मदर्येंद्रे the other MSS.

९ मिलोम् L

१० *Only in L and Be*

११ पर्वतेशाः L.

स ह लघुरिवावरद्प्रतिष्ठितः[1] स होवाच लघुरिव वा अस्म्यप्रतिष्ठितो[2] हन्त मा याजयेति तमेकविंशप्रतिष्टोमेनाग्निष्टोमेन बृहस्पतिराङ्गिरसो याजयां चकार ततो वै स प्रतितस्थावंधो[3] ह्येन्द्रः[4] कामदुघा अवरुरुधे[5] तं ह सायमेतमुवाच प्रातरेतादिति प्रातरेनमुवाच सायमेतादिति स एवमेव संवत्सरं नेमीयामास स होवाच प्रातरेतादिति मा सायमात्थ सायमेतादिति मा प्रातरात्थ को ऽयमेतः कतमो ऽयमेतो यमेनमेतं[6] मघवन् ब्रवीषीति[7] सोऽह्ना प्रवस्रागोथो ह्येन्द्र उक्थानि कामदुघाश्चकार तां ह स वरुणाय प्रददाविदं तव[8] मम[8] चेदममुष्य[8] च मौ ब्रह्मेति बृहस्पतय आङ्गिरसायेदं तावाख्यास्ता विधारयामावहस्येदमज्यमौति[9] विप्रावे त्रिपिविष्टाय चेत्थेयैवोक्थानां

---

१ ॰ावरद्॰ only in L and Be

२ ॰माक्षिमप्रति॰ Be, मा अक्षिमप्रति॰ L, ॰मसाप्रति॰ the other MSS.

३ Emended, प्रतस्थावधो L, प्रत्यवस्थायपद्धो the other MSS

४ चेन्द्र MSS.

५ अभिवरुधे L, अभिवरोधे Be, आवरुरोधे the other MSS

६ यमेनमेतं (or ॰तम्) L Be, यमेवमेतरम् or पयमेवमेतरम् the other MSS

७ Thus L, ब्रवीषि इति Be, ब्रवीति the other MSS

८ तवचमच इदममुष्य Be, तवचममचेदममुष्य L, तौच (तवि) मम चेदमुष्य the other MSS

९ Thus (hopelessly corrupted as it seems) Be, तावाख्यास्तदि धारयामावहस्येदमज्यमौति L, तावाख्याता (or ख्या) विधारयामा (or मा) वहस्येदमज्यमौति the other MSS

स्थपतिरेतद्विदानमथो हास्यैव मनुर्वैवस्वतः शूत्यमानः सम्प्रयाय[1] । तस्मै चतुर्थीं प्रददौ । तां ह सो ऽस्यां न्यदधात्सैयं[2] स्थपतिरेवैष[2] सृष्टेः[2] स्थपतिरेतद्विदानं । तौ ह वा एतावौशनसौ नाम पुनस्तोमौ भवतः । स यो गुरुरिव मन्येत गरमिव गीत्वा याज्यं वा याजयित्वाप्रतिग्राह्यस्य वा प्रतिगृह्य तं द्वादशस्तोमेनाग्निष्टोमेन याजयेदश्नुते हैव लघुतामथ यो लघुरिव चरेदप्रतिष्ठितस्तमेकविंशतिस्तोमेनाग्निष्टोमेन याजयेत्प्रत्येव तिष्ठति ॥ ४७ ॥ त्रयोदशः ॥

अथ प्रणोदः । समानमभिचरणीयस्य शिल्पं । प्रातःसवनीयाननुवर्तते ऽग्नये प्रवते पुरोडाशो ऽष्टाकपालस्त्रिवृदेव भवत्यथ विबाधः । समानमभिचरणीयस्य शिल्पं । माध्यंदिनीयाननुवर्तते ऽग्नये विबाधवते पुरोडाशो ऽष्टाकपालस्त्रिवृदेव भवत्यथ प्रतिनोदः[3] । समानमभिचरणीयस्य शिल्पं । तृतीयसवनीयाननुवर्तते ऽग्नये प्रतीकवते पुरोडाशो ऽष्टाकपालस्त्रिवृदेव भवत्यथाग्नेरतिबाधः । समानमभिचरणीयस्य शिल्पमनूबन्ध्यस्य पशुपुरोडाशमनुवर्तते ऽग्नये वसुमते पुरोडाशो ऽष्टाकपालस्त्रिवृदेव भवत्यथैन्द्रवज्रः । समानमभिचरणीयस्य शिल्पं । पञ्चदश एष भवति ॥ शुनस्कर्णो ह

---

१ Thus L Be, सम्य (or म्य) द्याय the other MSS

२ सैयं स्थपतिरेवैषसृष्टेः L, सेयं स्थपतिरेवैष सृष्टेः Be, सैषोस्थपतिरेवैतस्पृष्टेः the other MSS

३ प्रतीनोदः L

आञ्जनो ऽभ्यक्ता[1] आमूलवाससः[1] । भो ऽभ्यञ्जनो ऽथ विषूचीनप्रान्तो भ्रातृव्यवतो यज्ञः । स तथा देवयजनं जोषयते यथा प्राचीनमाहवनीयात्प्रवणꣳ स्यात्प्रतीचीनं गार्हपत्यादिति । तदेते विषूचीनप्रान्ते मापयन्ति[2] । प्रचरन्ति प्राञ्चः प्रत्यञ्चः प्रचरन्ति । मध्ये गार्हपत्यो भवति । मध्यत आसीनाय भक्षानाहरन्त्यनुदिशꣳ सोमौ स्यातामित्येतदेकमेकविꣳशौ[3] स्यातामित्येतदेकमनादृत्य तथाचतुष्टोमावेव कुर्वन्ति ॥ ॥ ४८ ॥

[4]देवासुरा ह यत्र महासंग्रामꣳ[5] संयेतिरे तद्ध शिबिरौशीनरो देवानां पर्यादसुरानभिजगाय[6] । तस्मा इन्द्रो जितवरं ददौ । स होवाच शिबिर्नैछ्यं[7] भयं न गच्छेदिति । तं वर्षिष्ठीयप्रश्ने[8] सर्वतोमुखेन याजयां चकार । ततो ह वा एतच्छिबिं नैछ्यं[7] भयं न गच्छति । यं कामयेतानपजय्यं जयेदिति तं वर्षिष्ठीयप्रश्ने[8] सर्वतोमुखेन याजयेदनपजय्यमेव

---

१ अक्तोपामूलवासः L Be, अक्ता मन्मूलवासः the other MSS

२ ०यन्ति Be, ०यन्ति the other MSS

३ ०मेकविंशौ L Be, विंशौ the other MSS

४ For the following cp. also *Eggeling, Catal of the MSS, of the India Office* vol I, p 87 (designed by me as E).

५ महा० om all exc. E L

६ Thus (०सुरानभि०) Be L only, ०सुरानभिजगाय० or ०सुरानजि० the other MSS

७ नैछ्यं L Be, नैष्ठ्यं or नैष्ट्यं the other MSS

८ Thus L Be; ०प्रश्नेन the other MSS

जयति। तदेताः सहस्रं शाला अनुदिशं मापयन्ति। प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति। मध्ये गार्हपत्यो भवति। मध्यत आसीनायाश्वतरीरथेनाभ्यां वहन्त्यनुदिशꣳ स्तोमाः स्युरित्येतदेकमेकविꣳशाः स्युरित्येतदेकमनादृत्य तच्चतुष्टोमानेव कुर्वन्ति॥ पार्थः। पार्थे[1] ह स्थपतिर्दैवापिरस्त्[2] ह[2] सुतसोमान्सहस्रदक्षिणान्सहस्रमसुनोत्स ह[3] देवागाप[3]। स[3] एतान्सोमानाहरिष्यन्नुपकल्पयते[3] शालाः[4] सहस्रꣳ सहस्राणि सहस्रमश्वतरीरथाꣳस्तदेताः शाला अनुदिशं मापयन्ति द्वे च शते पञ्चाशतं च पुरस्तादेवं दक्षिणत एवं पश्चादेवमुत्तरतः। प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति। मध्ये गार्हपत्यो भवति। मध्यत आसीनायाश्वतरीरथेनाभ्यां वहन्त्यनुदिशꣳ स्तोमाः स्युरित्येतदेकमेकविꣳशाः स्युरित्येतदेकमनादृत्य तच्चतुष्टोमानेव कुर्वन्ति॥ ॥ ४९ ॥ चतुर्दशः ॥

यमाभ्याꣳ सोमाभ्यां यक्ष्यमाणो भवति। स तथा देवयजनं जोषयते यथान्तरेण चात्वालोत्करावुदक्संचारी स्यादिति। तदेते प्राग्वंशे शाले मापयन्ति। स दक्षिणार्ध्याꣳ[5] शालामध्यव-

[1] Thus Be, पार्थ and पार्थे the other MSS

[2] Instead of स्त ह Be स्त, L स्त्र; सतन the other MSS

[3] Thus my conjecture, सदति एतान्सोमानाहरि॰ MSS exc. Be which has only सोमानाहरि॰ and L, which has सदेतिसदानान्सोमा॰।

[4] शाला Be, शालाः L, शालाधि the other MSS

[5] Thus L Be, दक्षिणार्ध्यां the other MSS

साय मथित्वाग्नीन्विहृत्य दीक्षणीयामिष्टिं निर्वपत्यथोत्तरार्ध्यांऽ शालामध्यवसाय मथित्वाग्नीन्विहृत्य[1] दीक्षणीयामिष्टिं[1] निर्वपति[1] ' तयेह प्रचर्याथामुत्र प्रचरतीह दीक्षाहुतीर्जुहोत्यथामुत्रेह प्रायणीयामिष्टिं निर्वपत्यथामुत्र ' तयेह प्रचर्याथामुत्र प्रचरतीह पदेन चरित्वा राजानं क्रीत्वोद्धातिथ्यं निर्वपत्यथामुत्र ' तेनेह प्रचर्याथामुत्र प्रचरतीह प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह महावेदिं पूर्वं परिग्राहं परिगृह्णात्यथामुत्रेहोत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेहाहवनीयं प्रणयत्यथामुत्रेह सदोहविर्धाने संमिनोत्यथामुत्रेहाग्नीषोमौ प्रणयत्यथामुत्रेह[2] यूपस्याहुता यूपमुच्छ्रयति स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोत्यथामुत्र ' तस्येह प्रसिद्धं वपया चरित्वा वसतीवरीर्गृह्णात्यथामुत्रेह पशुपुरोडाशं निर्वपत्यथामुत्र ' तेनेह प्रचर्याथामुत्र प्रचरतीहाग्नीषोमीयेण प्रचरत्यथामुत्रेह[3] वसतीवरीः परिहृत्य पयाऽसि विभ्रियोपशयन्त्यथामुत्रेह नैव संविशन्तीह राजानमुपावहृत्य प्रातरनुवाकमुपाकरोत्यथामुत्रेहानुपूर्वाऽ सवनानि[4] संतिष्ठन्त आ समुदितादेवमेवोत्तरस्याऽ शालायाऽ सवनानि[4] संतिष्ठन्त आ समुदितादिहावभृतेन प्रचरत्यथामुत्रेहोदयनीयामिष्टिं

---

१ These six words, indicated by * in Be, are given only by L.

२ प्रचरत्य॰ L Be, प्रवर्त्य॰ the other MSS

३ चरत्य॰ MSS.

४ Thus L Be सवनीयानि the other MSS

निर्वपत्यथामुत्र तथेह प्रचर्याथामुत्र प्रचरतोऽहैव मैत्रावरुणौ वशामुपाकरोत्यथामुत्र तथेह प्रचर्याथामुत्र प्रचरति समान्युदवसनीयेष्टिरेव[1] यस्मात्[2] सवनेभ्यो[3] ऽधि व्यतिषक्तानि कर्माणि क्रियन्ते तस्मादसावन्तरिक्षे व्यतिषक्तौ सह[1] प्रयाते अथ यदनुपूर्वं सवनानि संतिष्ठन्ते तस्मादनुपूर्वौ आयेते अथ यदूर्ध्वं[4] सवनेभ्यो ऽधि व्यतिषक्तानि कर्माणि क्रियन्ते तस्मात्सहामयन्ति सह पाययन्ति सह चरतो ऽथ यत्समान्यरणिस्थस्थानौ[5] योऽग्निरग्निश्च ह वा आदित्यश्च समानलोकं[6] जिगीषमाणावेतं यज्ञक्रतुमपश्यतां तमाहरतां तेनायजेतां ततो वै तौ समानलोकावभवताम् समानं लोकमैतां[7] यः कामयेताग्नेश्चादित्यस्य च समानं लोकमियामिति स एतेन यज्ञक्रतुना यजेताग्नेश्चैवादित्यस्य च समानं लोकमेतीति ॥ ५० ॥ पञ्चदशः ॥

वाजयाजी ह वा अन्यो भवत्यन्य उ वाजपेययाज्येव य वै वाजयाजी यः पेयैरनिष्ट्वाथ वाजेन यजत एष उ वाजपेययाजी यः पेयैरिष्ट्वाथ वाजेन यजते तस्मादु पेयैरेवेष्ट्वाथ

१ Thus L Be; समान्योदव॰ the other MSS.

२ यद् only in L; यस्मा instead of यस्मा॰ L, सवनेभ्यो L Be.

३ Only in L and Be

४ यदनुपूर्वं MSS exc. and Be

५ यद् om. L Be; यत्समानरणी the other MSS.

६ समानं L Be, समानलोका the other MSS

७ After ऐतां L Be have समानलोकावभवताम्, the other MSS. read समानंलोकावभवताम् or ॰लोकावभवताम्।

वाजेन यजेत । पेयैर्यक्ष्यमाणो भवति । सो ऽमिष्ट्वैव पौर्णमासीं दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते ऽमावास्यायै[१] मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथ्यादेत्यथ यवतीभरीः परिहृत्य पयाꣳसि विश्रिव्योपवसथ्यमेत्यैताꣳ सवनेष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं । तया द्वादशाहानि यजते । ऽथ पञ्चदशे ऽह्नि पौर्णमासेन हविषा यजते येनास्यानिष्टं भवत्यथ चतुर्दशे ऽन्यामावास्येन हविषा यजते येनास्यानिष्टं भवत्यथैतेषां यज्ञक्रतूनामेकेन यजते । अथ पुनर्दीक्षते । स एवमेव संवत्सरं यजते । तस्याहानि त्रिवृत्पञ्चदशौ[२] ऽथ त्रिवृत्सप्तदशौ ऽथ त्रिवृदेकविꣳशौ ऽथ त्रिवृत्त्रिणवौ[३] ऽथ त्रिवृत्त्रयस्त्रिꣳशौ ऽथ त्रिवृच्चतुष्टोमौ[४] । मासमासमेव रूपं पेयाः[५] । संवत्सरस्य रूपं वाज । एवमस्यैव[६] संवत्सरः परीष्ट एवमासो भवत्यथाहीनविधिसंस्थाहानि[७] त्रिवृत्पञ्चदशः[८] सप्तदशचतुष्टोमस्त्रिवृदेवाथैकविꣳशो[८] ऽथ त्रिणवो ऽथ चतुष्टोम-

---

१ अमावास्यै Be, मावास्यै L (the other MSS om. this passage).

२ Thus L Be; ॰पंचदशः सप्तदशः the other MSS.

३—४ Thus L Be; the other MSS have only त्रिवृच्चतुष्टोमौ।

५ Thus L Be, रूपमपेयाम् or ॰पेयाम् the other MSS.

६ Thus L Be, स एव the other MSS

७ ॰विधसंस्था॰ Be

८ Thus L Be, ॰पंचदशःसप्तदशो॰ the other MSS

स्त्रिवृद्देवाथ त्रयस्त्रिंशो ऽथ चतुष्टोमस्त्रिवृद्देवाथ[1] चतुश्चत्वारिंशो ऽथ चतुष्टोमो ऽथातिरात्रो[1] द्वादश[1] मासाः सप्तदश क्रतवो[1] नवसु मासेषु नव क्रतूनुपैत्यथातिशिष्यन्ते त्रयश्च मासा अष्टौ च क्रतवः[1] स द्वौ त्रिरात्रौ कुरुत एकं च द्विरात्रं[1] यद्यु वा एतदुपात्येति चतुष्टोमेनाग्निष्टोमेन यजेत[1] मासानामेव रूपꣳ स्तोमस्तानि संवत्सरस्य रूपमग्निष्टोमो[2] याज[2][1] एवमन्वेव[2] संवत्सरः परीष्ट एवमाप्तो भवत्यथातो ऽयुजश्चैव[3] युग्मायैकस्याꣳ स्तुवते ऽथ तिसृष्विति अयुजो[1] ऽथ युग्मास्वष्टसु स्तुवते ऽष्टाष्टास्विति युग्मा[1] अयुजां चैव[4] युग्मानां चैव सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः[3] ॥ ५१ ॥

अथातो द्विमासेव[1] त्रिवृदाग्नेयौ[1] पञ्चदशो दक्षिणायै[1] सप्तदशः प्रतीच्या[1] एकविंश उदीच्यै[1] त्रिणव ऊर्[1]

---

१—१ Wholly uncertain; चतुष्टोमस्त्रिंशो ऽथ चतुष्टोमस्त्रिवृद्देवाथ चतुश्चत्वारिंशोऽथाचत्वारिंशोऽथ चतुष्टोमोऽथातिरात्रोद्वादश L Be, चतुष्टोमस्त्रिवृद्देवाथ चतुश्चत्वारिंशोऽथ चतुष्टोमोऽथातिरात्रोऽथ द्वादश the other MSS., partly incomplete.

२ Thus MSS. exc. Be, which reads °ष्टोमश्चैव and L, which omits याज।

३—३. Thus, on the whole, L; युग्मयैकस्यां स्तुवते ऽथ तिसृष्विति अयुजो ऽथ युग्मास्वष्टसु स्तुवते ऽष्टाष्टास्विति युग्मा अयुजाश्चैव Be; युजश्चैव युग्मां (or °या-) यैकस्यां स्तुवते (ति) अ तिसृष्विति अयुजो अ युग्मास्वष्टसु स्तुवते ऽष्टाष्टास्वित्यथ युग्मा अयुजश्चैव the other MSS.

४ Only in Be.

ऊर्ध्वायै । त्रयस्त्रिंशोऽमुतोऽर्वाच्यै । सर्वासामेव चतुष्टोमो । दिशामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर॥थात ऋतूनामेव । त्रिवृद्वसन्तस्य । पञ्चदशो ग्रीष्मस्य । सप्तदशो वर्षाणामेकविंशः शरदस्त्रिणवो हेमन्तस्य । त्रयस्त्रिंशः शिशिरस्य । सर्वेषामेव चतुष्टोम । ऋतूनामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर॥थात ऋषीणामेव । त्रिवृद्वसिष्ठस्य । पञ्चदशो भरद्वाजस्य । सप्तदशो विश्वामित्रस्यैकविंशो जमदग्नेस्त्रिणवः कश्यपस्य[1] । त्रयस्त्रिंशो गौतमस्यागस्त्यस्य[2] चतुष्टोम । सर्वेषामेव चतुष्टोम । ऋषीणामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर॥थातो देवतानामेव । त्रिवृदग्नेः । पञ्चदश इन्द्रस्य । सप्तदशः प्रजापतेरेकविंशोऽमुष्य[3] तपतस्त्रिणवश्चन्द्रमसस्त्रयस्त्रिंशो विश्वेषां देवानाम्[4] । सर्वासामेव चतुष्टोमो । देवतानामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः ॥ ॥ ५२ ॥

अथातो दर्शपूर्णमासयोरयनमित्याचक्षते । सूर्याचन्द्रमसोरयनमित्येक आहुः । पौर्णमासेन[5] सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं

१ कश्य॰ Be, काश्य॰ the other MSS.

२ Thus L and Be; all the other MSS om. चम॰ ।

३ Instead of मुष्य Be त्तप, L षु ।

४ Thus L Be, the other MSS. have च after देवानां ।

५ पूर्ण॰ MSS exc. L

क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादैत्याथ वसतीवरीः परिहृत्य पयांऽसि विभिद्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्याग्नीषोमीय उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते पौर्णमासहवींऽषि । प्रैषवन्तः सवनीया अनुमूढ यजेतीतरेषाऽ हविषामंशुधा ज्योतिरुक्थ्यः संतिष्ठत ॥ अमावास्येन सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते ऽमावास्यायै मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादैत्याथैतदहरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोक्ष्यति सांनाय्यस्य वाहता तूष्णीं वाथ वसतीवरीः परिहृत्य पयांऽसि विभिद्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्यैन्द्र ऋषभ उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्त आमावास्यानि हवींऽषि । प्रैषवन्तः सवनीया अनुमूढ यजेतीतरेषाऽ हविषामंशुधा ज्योतिरतिरात्रः संतिष्ठते । सूर्याचन्द्रमसयोरेव तस्यायुज्यऽ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर्य उ चैनदेवं विदुः ॥ ॥ ५३ ॥ षोडशः[1] ॥

॥ इत्यष्टादशः प्रश्नः ॥

---

१ इत्युषा प्रतिः समाप्ता MSS

सावित्रꣳ स्वर्गकामश्चिन्वीत । पशुबन्धे चेच्चीयते षड्ढोतारꣳ हुत्वा यूपाहुतिꣳ हुत्वा यूपꣳ सयजुषं कृत्वा वेदिं विमिमीते । वेदिद्वतीये यजेतेति विज्ञायते । तस्याः सौमिकं मानमेतावदेव नाना । सौमिकात्प्रक्रमात्तृतीयो ऽꣳशः प्रक्रमः स्थानेन वेदिं विमिमीते । अपि वा पदाह्णया[1] पार्श्वमानी पदं तिरः पशुमानेन तयोर्यः कर्णसंमितः प्रक्रमः स इष्यते । पदाद्वा नवमस्तदह्णया[2] तयोस्तु यः कर्णसंमितः स प्रक्रमार्थक्षेम[3] सेषा सौमिकी वेदिरग्नीनम्वाद्ध्याहृतमुपेयादिभाबर्हिः संनह्य[4] साम्नयजुर्हरतीदमेव प्रसिद्ध पौरोडाशिकं चिर्यजुषा तूष्णीं चतुर्थं पूर्वं परिग्राहं परिगृह्णाति करणं जपत्युद्धन्त्युद्धतादाग्नीध्रः खरं हरति । यदाग्नीध्रः खरं हरत्यथैतमग्निं प्रत्यञ्चं यूपावटीयाच्छङ्कोर्विमिमीते । पशुःसंमितश्चैतस्य इति रथचक्रमात्र एवैष उक्तो भवत्यथाप्युदाहरन्ति शुरत्निः[5] प्रथमं पक्षं द्वौ बाधौ मध्यमं त्रिभागोनास्त्वेव उत्तममिति । तेषामन्यतममादायैꣳ रज्जुमुभयतःपाशां कृत्वोत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य तस्मिन्पाशौ प्रतिमुच्य तस्मिन्नन्ते ऽन्यꣳ शङ्कुं

---

१ Thus MHBU, पद॰ Be Ben.

२ Thus M Ben., नवमात्रस्रात्स्नण्या U, नवमस्तस्रात्स्नण्या H, नवमस्त-स्नण्या Be; II om. the whole phrase

३ Thus MHU, ॰मार्थक्षेम Be Ben.

४ Thus MHUB, संनह्य Be Ben.

५ ॰रत्निं M

प्राश्य तेनैनं प्रदक्षिणं परिमण्डलं[1] परिलिखत्यपोद्धृत्य स्कन्ध्यां कर्षूः खानयन्त्युत्कृयन्त्यपरस्या[2] दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्त्यथ पाचत्याव्ययाणोऽ मधुवाऽ स्पर्श्य दर्भस्तम्बमुदपात्रमौत्तरवेदिकाऽ[3] संभारान्दधि मधुमिश्रं हिरण्यं च शर्कराः[4] सिकताश्च[5] दर्भानिर्मोत्तममादायोत्तरार्धे सञ्चादयत्यथ दाभ्यामासन्यग्निं[6] एकौदे मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्यान्तः शर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ मण्डूकमुदपात्रमुपनिनीय दर्भस्तम्बमुपदधाति वाका समुद्र उपदधामीति वा तूष्णीं वा यैरेव स्रुवाहुतिभिरभिजुहोति समुद्रस्य त्वावकयेति पञ्चभिस्तेयाद्देवतं कृत्वा सुददोहसं करोति । ॥ १ ॥

अथ चात्वालखातमा चात्वालं परिलिख्योत्तरवेदेरायतोत्तरवेदिं निवपत्युत्तरनाभिमुखाय यूपावटं[1] खात्वा[1] मोक्ष प्राधार्यांकृत्य सिकता निवपत्यग्ने तव श्रवो वय इति

---

१ परि॰ om. M. and some of the other MSS.

२ खानयत्य॰ M

३ च om. M

४ सिकता शर्कराश्च M

५ Thus MHUB, ॰ण्डंवर्ति Be Ben

६ Om M Be Ben ; M om. also पौषा ।

पङ्क्तिरनुष्छन्दसमंयोर्ध्वचित उपदधाति चित स्थ परिचित ऊर्ध्वंचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयांसीति त्रिष्टुभा राजन्यस्य । यथासुतु यथाशर्करमनुव्यूहति । तस्यां[1] नव[1] परिमण्डला[1] लेखा लिखत्यथ[2] दध्ना मधुमिश्रेण शर्कराः समज्य सायमग्निहोत्रं हुत्वाग्नीन्परिस्तीर्योपवसत्यथ प्रातर्हुते ऽग्निहोत्रे यावत्युदपात्रं भस्म पुरीषमूषान्सिकता यावद्धृतममकुम्भिकाण्डं यज्ञपदया संमितं तावन्मात्रीः[3] पञ्चाशीतिशतं हिरण्येष्टकाः शर्करा वा एताभ्यस्तावत्यो[4] लोकंपृणा अपरिमिता वा अतस ऊर्ध्वमाहृताः सहस्रं हिरण्यशल्कानूर्ध्वं चिन्वो । ऽपरिमितामित्येक आहुर्यदि सहस्रं भवन्ति द्वे द्वे शते पञ्चाशीत्योते[5] भवतो । ऽथोदित आदित्ये द्वाभ्यामात्मन्यग्निं[6] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याधिद्रवणं जपत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथापराधे उदपात्रमुपदधाति ब्राह्मा

१ Thus Ben UH (the last तस्यां); तस्यां नव मंडला Be, तस्मिन्नेव परिम॰ MB.

२ लिखित्वा MB

३ ॰मात्र M

४ एतान्यस्या॰ M

५ Thus MHU, ॰शीत्योते B ॰शीत्योते Be Ben

६ Thus MBHU, ॰न्यग्नि Be Ben

समुद्र उपदधे सुप्रजावनिᳫं रायस्पोषवनिं मह्यं यजमानायेति । तयादेवतं कृत्वा सूददोहसं करोत्यथ संभारान्निवपत्यग्नेर्भस्मासीति भस्माग्नेः पुरीषमसीति पुरीषᳫं संज्ञानमसि कामधरणमित्यूषान्मयि ते कामधरणं भूयादिति सिकता । अथैनान्संयौति सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः । कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता इति । तांस्तथा कल्पयति यथा न लेखाः संलोपयन्ति[1] । मध्यो वा सर्वं क्रियते पयस्काले ॥ २ ॥ प्रथमः ॥

अथान्तमायां लेखायां पूर्वपक्षस्य दिनेष्टका उपदधाति संज्ञानं तया देवतयाङ्गिरस्वद्ध्रुवा सीद विज्ञानं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति चित्रस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद केतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां पूर्वपक्षस्य क्षपेष्टका उपदधाति दर्शा तया देवतयाङ्गिरस्वद्ध्रुवा सीद दृष्टा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतासामेव[2] क्षपाणां मुहूर्तेष्टका उपदधाति दाता तया देवतयाङ्गिरस्वद्ध्रुवा सीद प्रदाता तया देवतयाङ्गि-

१ संलोपयन्ते Bo Ben.

२ Thus MU, ष्वेतामेव the other MSS.

रस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य दिनेष्टका उपदधाति प्रस्तुतं तथा देवतयाङ्गिरस्वद्ध्रुवा सीद विष्टुतं तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति सविता तथा देवतयाङ्गिरस्वद्ध्रुवा सीद प्रसविता तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य क्षपेष्टका उपदधाति धुता तथा देवतयाङ्गिरस्वद्ध्रुवा सीद सम्नती तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतासामेव क्षपाणां मुहूर्तेष्टका उपदधात्यभिशास्ता तथा देवतयाङ्गिरस्वद्ध्रुवा सीदानुमन्ता तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां पूर्वपक्षेष्टका उपदधाति पवित्रं तथा देवतयाङ्गिरस्वद्ध्रुवा सीद पवयिष्यꣳस्तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षेष्टका उपदधाति सहस्वाꣳस्तथा देवतयाङ्गिरस्वद्ध्रुवा सीद सहीयाꣳस्तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां मासेष्टका उपदधात्यरुणस्तथा देवतयाङ्गिरस्वद्ध्रुवा सीदारुणरजास्तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेति त्रयोदश । सर्वासां पारे सूददोहसः करोत्यथावैके[1]

---

1 Thus Be HUB; °त्यावैकेक B. D., यवैके M.

लेखान्तरालेषु[1] सिकता निवपन्त्येतस्मा लोकस्य इत्यथाभ्यन्तरायां लेखायां मुहूर्तानां मुहूर्तेष्टका उपदधातीदामसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद तदामसि तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश। सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां कनिष्ठकायनिष्ठकाश्चोपदधात्यग्निष्टोमस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदोक्थ्यस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडग्निष्टुत्स्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सूर्यं स्वतस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति तिस्रः। सर्वासां पारे सूददोहसः करोत्यथ मध्ये[2] माध्याद् संवत्सरेष्टका उपदधाति प्रजापतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद संवत्सरस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रः। सर्वासां पारे सूददोहसः करोति। ॥ ३ ॥

तदेतावन्मात्रः स्वयमातृण्णा भवति। ता विभूपदधाति भूरसि च पृथिवीं चेति पुरस्ताद्ध्रुवो वायुं चान्तरिक्षं चेति दक्षिणतः स्वरादित्यं च दिवं चेति पश्चाद्भूर्भुवः स्वश्चन्द्रमसं च दिशश्चेत्युत्तरतः। सर्वासां पारे सूददोहसः करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति। यथादेवतं करोति तथा देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति

1 Thus Bo Ben., लेखान्तरेषु M, लेखान्तरेषु HU; लेखायां B.
2 मध्ये M

ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः। जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति । प्राच्यां च लोकंपृणया प्रतीत्यग्निं प्राचीभिः संप्रच्छादयन्ति । संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथैनमभिमृश्य चितिक्लृप्ता भवत्यथाग्निमभिमृशति[1] यत्ते ऽचितं यदु चितं ते अग्न इति द्वाभ्यामेव चितिक्लृप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्यथ देवाꣳ इडावहेत्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य द्वे[2] अवद्रवणे[3] जपति[2] वाम आमप्राणदा इत्यथ[2] कृष्णमश्वमभिमृश्य तस्मिन्पुरीषमुपदधाति पृष्ठो दिवीति । तथादेवतं कृत्वा सूददोहसं करोत्यथ पात्र्यामप आनीय हिरण्यशकलान्संप्रकीर्य द्वाभ्यांद्वाभ्याꣳ[4] व्रताभ्यां प्रोक्षति सहस्रस्य प्रमा असीति पुरस्तात्सहस्रस्य प्रतिमा असीति दक्षिणतः सहस्रस्य विमा असीति पश्चात्सहस्रस्योन्मा असीत्युत्तरतो । ऽथ मध्ये[5] द्वाभ्याꣳ व्रताभ्यां प्रोक्षति साहस्रो ऽसि सहस्राय त्वेत्यथोत्तरार्धे तिष्ठन्निष्टका धेनूः कुरुत इमा मे अग्न इष्टका धेनवः सन्त्वित्यान्तादनुवाकस्याथैके ऽर्कपर्णेनाजक्षीरेण[6] चरमायामिष्टकायां जुहोति । स[7] यदद्रेणं[7]

---

१ परि instead of अभि M.
२ Thus HUD; द्वे अभिद्रवणे अ॰ Be Ben, द्वाभ्यामभिद्रवति M.
३ अव instead of अप M Ben. U.
४ द्वाभ्यां twice in BU only.
५ om M.
६ ॰के॰ om. B Be H.—॰जाक्षीरे॰ Be Ben.
७ Thus M, यददुद्रेणं B, दुद्रेणं Ben, यद्दुद्रेण Be, यदद्रेणं HU

करिष्यन्नवत्यथैतस्यार्कपर्णस्य[1] पुटमन्तरवधायैवं हस्तोद्धृतिष्वनुखदन्नि धारयमाणाहरानयेति । स यत्र धारेष्टका[2] प्राप्नोति तदभिपद्यते त्वमग्ने रुद्र इत्यानादनुवाकस्यान्ते तदर्कपर्णं यं द्वेष्टि तस्य संचरे पशूनां न्यस्यति । यद्यु वै न द्विष्यात्सदसे न्यस्यत्यथैनमुपतिष्ठते त्वमेव त्वां वेत्थ यो ऽसि सो ऽसीत्येतेनानुवाकेनाथ षड्ढारविहाराभ्यामुपतिष्ठते संवत्सरो ऽसि परिवत्सरो ऽसीत्येतेनानुवाकेनाथाच होतरग्नेरुक्थेनाग्निमनुशंसेति । [3]यदि होता न कामयते यजमान एव जघनेनाग्निं तृणानि संस्तीर्य तेषूपविश्याग्नेरुक्थेनाग्निमनुशंसति । भूर्भुवः स्वरित्येताभ्यामृग्भ्यां[4] विच्छिन्नैकैकामन्वाह प्रणवेनाभिसंधायैवमन्यामनूपसंधाने प्रणवेनैवाभिसंधानमथ[5] ये ब्राह्मणा बहुविदस्तेभ्यो यद्धविषा न भयेदुरिष्टं स्यादग्निमव्यं हवीरन्नेभ्यो यथाश्रद्धं दद्यात्स्विष्टमेवैतत्क्रियते । नास्याग्निं वृञ्जत इति ब्राह्मणम् । ॥ ४ ॥ द्वितीयः ॥

अथाग्न्याधानप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमग्निप्रणयनात्कृत्वाग्निं प्रणीयोपसमाधायाध्वराहुतिभिरभिहुत्य[6] नानाचतुर्गृहीतैरेता[6] आहुतीर्जुहोति । त्वमग्ने रुद्र

१ ॰त्यथैतस्य॰ Be Ben

२ ॰रेष्टकाग्निं M.

३ Before यदि Be HU ins. पुन

४ ताभ्यां instead of ऋग्भ्यां M.

५ प्रणवेनैवाभि॰ M.

६ Thus HU (only ॰हुतीभि॰); ॰ध्वराहुतीभिरभिजुह्वानो चतु॰ M; ॰ध्वराहुतीरभिजुह्वानो चतु॰ Be Ben; ॰ध्वराहुतिभिर्हुत्वा नानाचतु॰ H.

इति शतरुद्रीयस्य रूपमग्नाविष्णू इति वसोर्धारायाः । अन्नपत इत्यन्नहोमः । सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीरित्यथ स्रुवेणोपघातमेकविंशतिमाहुतीर्जुहोत्यग्नये स्वाहा कामाय स्वाहेति । हुत्वाहुत्वैव सर्वस्यावान्यजमानस्याञ्जलावावपति[1] । नैवंजमानो सुखं विमृष्टे राज्ञी विराज्ञीत्येतेमाद्धानेनोत्तरपरिग्राहप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमा मनोताथः कृत्वा मनोतामनुद्रुत्य पशोरवदानानि संस्थौदुम्बरे पात्रे[2] पृष्णो मृत्युपश्च स्थानामि विपश्चिते पवमामाय गायतेत्यनुद्रुत्योपयामगृहीतो ऽसि मृत्यवे त्वा जुष्टं गृह्णामीति । दर्भैः परिमृज्योत्तरवेद्यां सर्वमादध्यात्[3] ते योनिर्मृत्यवे त्वेत्यथ पशुना चरत्यथ वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतो ऽथैनं षड्ढोत्रा उपस्पृशति[4] विद्युदसि विद्य मे पाप्मानमित्यथ जुहोत्यप मृत्युमप क्षुधमपेतः शपथं जहि । अधा नो अग्न आवह रायस्पोषं सहस्रिणम् ॥ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानवयजामहे स्वाहेत्यथ हुत्वोपस्पृशेद्वृष्टिरसि वृश्च मे पाप्मानमित्यथ स्विष्टकृता चरत्युपह्वयमानायामिडायामुप-

---

१ Thus (वापयति) M Be Ben BU (sec. m.), वापयति BU (pr m).

२ Thus all exc B, which has -रीय पात्रे ।

३ ध om. BU

४ Thus M Be Ben. -स्पृशेत् BHU

ग्टह्णन्ति[1] यदस्तुंपहूतं[2] ग्रहं यजमानो भक्षयति भक्षो ऽस्यमृतभक्षस्य ते मृत्युपीतस्यामृतवतः स्वगाकृतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति। भक्षयित्वास्तमामं प्रत्यभिमृशते मन्त्राभिमृतिः केतुर्यज्ञानामित्याम्नातादनुवाकस्यानूयाजप्रभृति पात्नीवन्तिकं कर्म तायते। षिद्धमा दक्षिणानां कालाद्दक्षिणानां काले धेनुमृषभमनड्वाहं द्वैकविंशतिर्दक्षिणा[3] ददाति। शतं ददाति। सहस्रं ददात्यपरिमितं दक्षिणा ददाति। यदि न विन्देत सर्वामेतावतो दद्याद्रोहिण्या पष्ठौहीं तत्सवत्सौ दद्याद्धिरण्यं ददाति। वासो ददाति। तेनायुः प्रतिरन्त इति ब्राह्मणं। तं चेत्सौम्ये ऽध्वरे चिन्वीत प्रथमायामुपसदि चयनकरणं मध्यमोत्तमे उपसदावन्तरेणोपधानं। काले ऽग्निप्रणयनं। दक्षिणानां काले दक्षिणाः। सवनीयस्य पूर्णो मृत्युपशुं चेद्धीने सवे वा चिन्वीत प्रथमे ऽहनि दक्षिणाः प्रथमे ऽहनि पूर्णो मृत्युपशो। न यत्र दक्षिणा नीयन्ते। नाचिकेत एव मृत्युपशुः स्यादित्येतदपरमग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्यामिक्षया वेति। तस्यै सायमग्निहोत्रे कृते सायंदोहः प्रातरग्निहोत्रे कृते प्रातर्दोहः। पशुपुरोडाशेन सह श्रपणमनुदिते यथा संतिष्ठते सावित्रः। ॥ ५ ॥ तृतीयः ॥

---

१ उपपद्यन्ति M

२ यदस्मिन्नोपहूत M.

३ ददाति instead of दद्या M.

अथ नाचिकेतस्य[१] प्रसिद्धं चयनकरणं यथा सावित्रस्यैतावदेव नाना । नात्र लेखा भवन्त्यथ याश्चैवोपदधाति लोकोऽसि स्वर्गोऽसीत्यञ्जलिनैकविंशतिं यथा निपतन्ति[२] तास्तत्र तथोपदधाति । तदेतदन्यथापि[३] प्रकीर्णानामुपधानस्य[४] निदानं । यदि[५] प्राङ्क्तः पञ्च पुरस्तात्पञ्च दक्षिणतः पञ्च पश्चात्पञ्चोत्तरत एकां मध्ये । अथ यदि विष्वक्सप्त पुरस्तात्तिस्रो दक्षिणतः सप्त पश्चात्तिस्र उत्तरत एकां मध्ये । अथ यदूर्ध्वाः[६] पश्चात्कोष्ठ्याः[७] प्रसृत्यूर्ध्वाः[८] स्वयमातृण्णावकाशाद्दथ यदि प्राचीः स्वयमातृण्णावकाशात्प्रभृति[९] प्राचीः । स्वयमातृण्णाभ्यः प्रभृति विष्णुमत ऊर्ध्वं । स यदीच्छेत्तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति प्राङ्होतुर्धिष्ण्यादुत्सर्पेदित्याहवनीयसकाशाद्धेयं प्रागायामस्तमी सा मा प्रीणातु तेजसा यशसा ब्रह्मवर्चसेनेति । तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवतीत्यथ यदीच्छेद्भूयिष्ठं मे श्रद्दधीरन्भूयिष्ठा दक्षिणा नयेयुरिति

---

१ नाचिकेतस्य Bo Ben

२ निपतन्ति HUB, निपतति Bo, निपतंति M, निपतति Ben.

३ नैतेतद॰ M

४ Thus H Bo, प्रकीर्णानामुपधा॰ U; प्रकीर्णानुपधा॰ Ben, प्रकीर्णानुपधा॰ B, प्रकीर्णानामुपधा॰ M

५ स यदि M.

६ Thus MB, यदूर्ध्वे H, या ऊर्ध्वाः Bo Ben, यदूर्ध्वं U

७ Thus BH, कोठ्या U, कोष्ठा H Ben, कोठरा Ben, कोष्ठ्‌ M.

८ ॰र्ध्वा वा।

९ ॰काशप्र॰ M.

दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयाद्भूयिष्ठमेवास्मै श्रद्धत्ते । भूयिष्ठा दक्षिणा नयन्तीति ब्राह्मणम् । संतिष्ठते नाचिकेतः । ॥ ६ ॥ चतुर्थः ॥

अथ ब्रह्मचितः[1] । प्रसिद्धं चैत्यकरणं यथा सावित्रस्यैतावदेव नाना । नाभ लेखा भवन्त्यथ पुरस्तादुदीचीर्दश हिरण्येष्टका उपदधाति चित्तिः स्रुक्तया देवतयाङ्गिरस्वद्ध्रुवा सीद चित्तमाज्यं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति दशाथ चन्द्रेष्टकामुपदधाति सुवर्णं घर्मं परिवेद वेनमित्यनुद्रुत्य देवैः स मानमीत आत्मा जनानामित्यन्तो । ऽथ यजुरिष्टके उपदधात्यग्निर्यजुर्भिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सविता स्तोमैस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ पञ्चेष्टके उपदधाति वेनेन्द्रस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद धेना बृहस्पतेस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पादे सूददोहसः करोत्यथ दक्षिणतः प्राचीस्त्रयस्त्रिंशतमिष्टका उपदधाति पृथिवी होता तया देवतयाङ्गिरस्वद्ध्रुवा सीद द्यौरध्वर्युस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रो । ऽथ चन्द्रेष्टकामुपदधाति ब्रह्मेन्द्रमग्निमित्यनुद्रुत्य यज्ञमेतं चतुर्होतॄणामात्मानं कवयो निचिक्युरित्यन्तो । ऽथ यजुरिष्टके उपदधातीन्द्र उक्थामदैस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद मित्रावरुणावाशिषा तया देवत-

---

[1] ब्रह्मचितस् M Be

याङ्गिरस्वद्ध्रुवा सीदेत्यथ पक्षीष्टके उपदधाति पथ्या पूष्णस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद वागवायोस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथ पश्चादुदीचीः पञ्चहोत्रीष्टका उपदधात्यग्निर्होता तया देवतयाङ्गिरस्वद्ध्रुवा सीदाश्विनाध्वर्यू तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति एतस्मो ऽपि वाश्विनाध्वर्यू इत्येतेनैव मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति । तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति[1] मन्त्रꣳ[1] संनमयत्यथ[1] ऋदयेष्टकामुपदधाति ऋतं मिथुनः परिवेद्दे-त्यनुद्रुत्य प्राणमुखं तेन क्लृप्तो ऽमृतेनाहमसौ इत्यातो । ऽथ यजुरिष्टके उपदधात्यङ्गिरसो धिष्णियैरग्निभिस्तया देवताङ्गिरस्वद्ध्रुवा सीद मरुतः सदोहविर्धानाभ्यां तया देवताङ्गिरस्वद्ध्रुवा सीदेत्यथ पक्षीष्टके उपदधाति दीक्षा सोमस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद पृथिव्यग्नेस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथोत्तरतः प्राचीः षड्ढोत्रीष्टका उपदधाति वाग्घोता तया देवतयाङ्गिरस्वद्ध्रुवा सीद दीक्षा पत्नी तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडथ हृदयेष्टकामुपदधाति सुवर्णं कोशꣳ रजसा परीवृत-मित्यनुद्रुत्येन्द्रस्यात्मानꣳ शतधा चरन्तमित्यातो । ऽथ यजुरिष्टके उपदधात्यापः प्रोक्षणीभिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदौषधयो बर्हिषा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ

१ इत्यथ संनमयत्य॰ M, इति संनं धनमयत्य॰ H Be Ben. U (pr m.), संनमय॰ BU (sec m.).

पञ्चेष्टके उपदधाति वसूनां गायत्री तया देवतयाङ्गिरस्वद्ध्रुवा सीद रुद्राणां त्रिष्टुभया[1] देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पार्श्वे सूददोहसः करोत्यथोपरिष्टात्प्राचीः सप्तदोषे-ष्टका उपदधाति महाहविर्होता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सत्यहविरध्वर्युस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चवि धामाष्टय्याप्रतिष्ठ्याय यज्ञस्याभिजरायित्येतेन मंत्रेण द्वे इष्टके समानतयादेवते उपदधाति । तया देवतयाङ्गिरस्वद्ध्रुवे सीद-तमिति मन्त्रं संनमयत्यथ[2] वद्येष्टकामुपदधातीन्द्रो राजा जगतो य ईश इत्याम्नातमनुवाक्यमथ यजुरिष्टका उपदधा-त्यदितिर्देवता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सोमो दीक्षया । तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चोद्धाय पञ्चेष्टका उपदधात्यादित्यानां जगती तया देवतयाङ्गिरस्वद्ध्रुवा सीद विष्णोरनुष्टुभया[3] देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यष्टादश । सर्वासां पार्श्वे सूददोहसः करोत्यथ यथावकाशं षडिष्टका उपदधाति वाचस्पते विधे नामन्निति दशहोतुर्वाचस्पते वाचो वीर्ये-णेति चतुर्होतुः सोमः सोमस्य पुरोगा इति पञ्चहोतुर्भू-र्भुवः स्वरिति षड्ढोतुर्वाचस्पते हृदिधे नामन्निति सप्तहोतुः । सर्वासां पार्श्वे सूददोहसः करोत्यथ यथावकाशमेव प्रतिपदे-ष्टका उपदधाति । देवस्य त्वा सवितुः प्रसव इत्यनुद्रुत्यैषा ते

१ त्रिष्टुभा M
२ Thus MH, संनम्य॰ the other MSS
३ ॰नुष्टुभा

